छात्रैर्द्देयं वार्षिकं मूल्यमेकरूप्यकम् १) । तदन्यैर्ग्राहकैः सार्द्धैकरूप्यकम् (१॥)
Yearly Subscription ; For Students 1 Re. For others Rs. 1/8
Yearly Subscription payable strictly in advance.

१८१८ शाक चतुर्थखण्डम्

# संस्कृतचन्द्रिका ।

## मासिकपत्रिका ।

दोषज्ञतज्ञाव हि शेमुषीयं, दयारसं साधु सदाभिषिच्य ।
सतां पदे तत् प्रचते न धूर्त्तं, किं मक्षिका तत्यजति क्षताङ्गौ ॥

श्रीजयचन्द्रशर्म्म-सिद्धान्तभूषण-भट्टाचार्य्येण
सहकारिणा च बि, ए, श्रीमनुजेन्द्रदत्तेन
सम्पादिता ।

कलिकाताराजधान्यां
विडन्ष्ट्रीट् १०३।१ संख्यकभवनात् ।
103/1 Beadon Street ; Calcutta.
७५नं० काटन् ष्ट्रीट् कलकाता "नारायणयन्त्रे"
श्रीरसिकलालपानेन च मुद्रिता ।

( संवत् १९५२ । ( वङ्गाब्दाः १३०२ । )

आदर्शमूल्यम् ≈)॥ Specimen Copy 2½ As

# चतुर्थखण्डचन्द्रिकाया वार्षिकी सूचिः ।


| विषय। | पृष्ठा। |
| --- | --- |
| वर्षावतरणिका | १। |
| मासावतरणिका | १। २५। ४९। ७३। ९७। १२१। १५४। १६९। १९३। २१७। २४१। २६५। |
| उद्भट श्लोकाः | १। २५। ४९। ७३। ९७। १२१। १५४। १६९। १९३। २१७। २४१। २६५ |
| श्रीश्रीगोपीनाथाष्टकं | २। |
| संस्कृत चन्द्रिका। | ३। |
| सतीच्छाया | ५। २६। |
| अवन्तिकापुरी वा उज्जयिनी | १३। |
| धर्म्मविवेकः | १५। ३९। ६७। ११०। १३९। २०३। २३०। २४८। २७६। |
| तत्त्वप्रपञ्चः | १९। ४३। |
| विनयाञ्जलिः | २६। |
| उद्भटप्रसङ्गः | २८। |
| श्मशानं | ३१। ५५। ७५। |
| व्याकरणं | ४५। ७०। ९३। ११७। १४१। १६१। १८२। २०८। २३३। २५८। |
| सत्यमेवोत्तमोधर्म्मः | ५०। |
| गुरुशिष्य संवादः | ५७। |
| रथयात्रा | ५९। ७७। |
| हरिद्वारभ्रमणं | ६०। ७७। |
| शिवस्तोत्रं | ७४। ९८। |
| कलापव्याकरणं | ८९। १०६। १३७। |
| राँचीवर्णना | ९८। |
| कल्पना | ९९। |
| सरला | १०२। १३३। १५५। |
| समस्या | १२२। |
| शिवस्तोत्रं | १२२। |
| धन्याष्टकं | १२२। |
| यौधिष्ठिरी बुद्धिः | १२४। १५३। १७५। २००। |
| सम्मिनं | १२६। |
| निद्रा | १३०। |
| विज्ञान नौका | १४६। |
| शारदीयोच्छ्वासः | १४६। |
| अज्ञानबोधिनी | १५१। १७१। १९६। २४३। २६७। |
| शिशुहास्यं | १५४। १७७। २२०। |
| शिवनिर्म्माल्यं | १५९। १८१। |
| समस्यापूर्त्तयः | १६५। १८४। |
| अयोध्या राजप्रशस्तिः | १७०। |
| ब्राह्मणाष्टकं | १९४। |
| दीपावलीवर्णनं | १९४। |
| कलापव्याकरणेशर्ववर्म्मा | २०१। २२७। २५४ |
| प्राप्तपत्रम् | २११ |
| समस्यापूर्त्तौ सम्मतं | २१३ |
| समालोचना | २१४। २६२ |
| सम्पादकीयनिवेदः | २१६ |
| वालिश्वभञ्जनस्तोत्रं | २१८ |
| पतित परावृत्तिः | २२५ |
| सिद्धान्तवागीश इत्युपाधिफलकाः प्रश्नाः | २३८ |
| दशावतारस्तोत्रं | २४२। |
| कलापव्याकरणे दुर्गसिंहः | २५६। २८०। |
| पुनः समस्यापूर्त्तिफलम् | २६४ |
| नामाष्टशतकं | २६६ |
| दुर्भिक्षे प्रार्थना | २७१ |
| ग्रन्थकृतपरिचयः | २७९ |
| मोहमय्यां (मुम्बयीप्रदेशे) प्रसरतो ज्वरस्य निर्णयः | २८४ |

श्रीदुर्गा शरणम्।

# संस्कृतचन्द्रिका।

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती जगानिव।

मायावलम्बाते सेयमम्बा श्रीशिवसुन्दरी॥

## वर्षावतरणिका।

श्रीश्रीमती संस्कृतचन्द्रिकेयं वर्षं चतुर्थं पदमर्पयन्ती।

पीयूषधारा गिरमुद्गिरन्ती धीरान्तरे प्रीतिभरं तनोति॥

## मासावतरणिका।

नवीनरक्ताम्बरभृत् कुमारिका, अशोकपुष्पच्छलतोऽन्यपल्लवैः।

नवैः फलैश्चातितरामलङ्कृता उपैति सम्यक् प्रकृतिर्हि माधवे॥

## उद्भट श्लोकाः।

स्वामी पञ्चमुखः सुतः करिमुखः सेनापतिः षड्‌मुखो

भृत्यः कीशमुखः समस्तविमुखे मातः! कथं जीवसि।

इत्थं पर्वतकन्यका निजमनोदुःखे प्रकाशीकृते,

मा क्रन्देति चतुर्मुखस्य वचनं श्रुत्वा सहास्याभवत्? ॥ २४८ ॥

तावन्महतामपि महता यावन्न याचते किञ्चित्।

बलिमख याचन समये श्रीपतिरपि वामनोऽभूत्॥२४९॥

साधु साधु रघुनाथ! यत्त्वया पर्य्यणायि जनकस्य कन्यका।

कार्य्यमेतदपरस्य दुष्कृतं युक्तमेतदजवंशजन्मनः॥ २५० ॥ *

भ्रातः! कोकिल! भीतभीत इव किं पलायतो वर्त्तसे

नीचैः पश्य शरासनाहतकरा धावन्ति भिल्लार्भकाः।

काभीतिस्तव यत् कुहूरिति परा विद्या मधुस्यन्दिनी

किं क्रूरे गुणगौरवं किमसतीचित्ते पतिप्रेम वा॥२५१॥

---

* जनकस्य कन्यका सीता भगिनी च। इति विरुद्धम्। अजवंशजन्मनः छागवंश जन्मनः, ब्रह्मकुलजन्मनश्च इति समाधा।

# श्रीश्रीगोपीनाथाष्टकम् ।

अभ्रश्यामतनुं सरोजवदनं विम्बाधरं सुन्दरं
फुल्लेन्दीवरलोचनं नटवरं वर्हावतंसोज्ज्वलम् ।
वालार्कारुणपादपङ्कजतलं कर्णोल्लसत् कुण्डलं
गोपीनाथमहं भजामि सततं दीनार्त्तदुःखापहम् ॥ १ ॥

सच्चामीकरकिङ्किणीवृतकटिं मञ्जुक्वणन्नूपुरं
दग्धाष्टापदपुञ्जकान्तिमधुरं विभ्राणमाच्छादनम् ।
गोपालीनयनाम्बुजार्च्चिततनुं हस्तोल्लसत्-कङ्कणं
गोपीनाथमहं भजामि सततं दीनार्त्तदुःखापहम् ॥ २ ॥

मायापूतनिका-विषोल्वणपयः प्राणैर्धयन्तं मुदा
पादोत्क्षेपविवर्त्तितातिशकटं स्मेरास्यपङ्केरुहम् ।
वंशीनादविमोहितत्रिभुवनं दामोदरं चञ्चलं
गोपीनाथमहं भजामि सततं दीनार्त्तदुःखापहम् ॥३॥

गोष्ठोद्भूतयमार्जुनाकृतिकभृत्कौवेरि-मुक्तिप्रदं
स्तेयोपायहृतं मुहुर्दधिपयो भुञ्जानमन्तर्गृहम् ।
आभीरीवसनापहारचतुरं तत्कामकल्पद्रुमं
गोपीनाथमहं भजामि सततं दीनार्त्तदुःखापहम् ॥४॥

कालिन्दीपुलिने सह व्रजसुतैर्गाश्चारयन्तं वने
कंसादिष्टवकासुरादिनिधनप्रीतामराभिष्टुतम् ।
कालीयोरगराट्-फनोपरि मुहुर्नृत्यन्तमेतन्नुतं
गोपीनाथमहं भजामि सततं दीनार्त्तदुःखापहम् ॥५॥

वत्साभीरसुतापहारिविकलव्रह्मेड़िताङ्घ्रिद्वयं
गोसंख्यार्भकवत्सरूप-वपुषा गो-गोप-गोपीप्रियम् ।
दृप्यद्वासवगर्वखर्वकुशलं गोवर्द्धनं विभ्रतं
गोपीनाथमहं भजामि सततं दीनार्त्तदुःखापहम् ॥६॥

वन्यस्रक्सुभगं त्रिभङ्गललितं भालोल्लसद्रोचनं ?
गोधूलिच्छुरिताङ्गरागरुचिरं सव्यस्फुरद्राधिकम्।
श्रीराधारतिकेलिलम्पटतरं गोपीजनैर्वेष्टितं
गोपीनाथमहं भजामि सततं दीनार्त्तदुःखापहम् ॥७॥
कोटीराङ्गदहारकौस्तुभधरं श्रीवत्सरम्योरसं
वंशीवेत्रविषाणशिक्यकवलद्रव्यादिलक्ष्मश्रियम्।
भक्तत्राणपरं कृपाजलनिधिं सर्वार्थचिन्तामणिं
गोपीनाथमहं भजामि सततं दीनार्त्तदुःखापहम् ॥ ८ ॥
अर्च्चान्ते मुरलीधरस्य सविधे पद्याष्टकं प्रीतिदं
भक्त्या निर्मलया पठन्ति नियता ये मानवाः प्रत्यहम्।
हित्वानेकभवार्जिताघजनितं संसारदुःखव्रजं
ते गच्छन्ति पदं सतामभयदं योगीश्वराभ्यर्थितम् ॥ ९ ॥

इति श्रीपुरुषोत्तमविद्यानिधिकृतं श्रीश्रीगोपीनाथाष्टकं सम्पूर्णम्।

पोः—मेदनीपुर ; ग्राः—गोपीवल्लभपुर।
सां॰ गड़वाल्यावेढ़ा संस्कृतटोल।

---

# संस्कृतचन्द्रिका।

"पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्य्यासो जातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदम्
निवेशः शैलानां तदिदमिति बुद्धिं द्रढ़यति ॥"

इह खलु कालमावहमानमारभ्य निमेष-पल-दण्ड-मुहूर्त्त-यामाहो-रात्र-पक्ष-मास-ऋत्वयन-वत्सर-युग-कल्पक्रमेण सर्वदा कुलालचक्रवज्जगदंभ्रम्यते। परिवर्त्तयति च शैलूषवत् वेशम्। तेन च संस्कृतचन्द्रिकापि बालिका आशया धात्र्या विधृतहस्ता नानादिग्देशं भ्रमित्वा पुनर्नववत्सरमासाद्य स्नेहानुरागेणेव समलङ्कृता अनुग्राहकाणां क्रोड़मारोढुमभिलषति।

संस्कृतभाषा तु दैवी देवरूपिणी च, ततो नास्त्यस्या जरा मरणञ्च, किन्तु स्थिरयौवना तावत्कालमनैषीत्। अहह वैधसी लिपिर्दुरत्यया कालगतिरपि दुर्निवारा, तीव्राकर्षणेनादृष्टचक्राणां स्वर्गोऽपि नरकं नीयते नरकमपि स्वर्गं संस्थाप्यते। यत्राद्य रसातलकीलनोऽभ्रंकषो भूधरो दृश्यते श्वस्तत्राननुभूतचिह्न एरण्डोऽपि द्रुमो विराजते। यत्राद्य कण्टकशाखी मरुत्पन्नोऽवमन्यते श्वः स एव कल्पद्रुमीभूतः सर्वैः समाराध्यते।

एवंविध एव तस्मिन् काले भारतवर्षं यवना आचक्रमुः। तैर्हि निशाचरवंशजैरावणादिभिरिव देवपत्नी संस्कृतभाषा मर्मस्वाहता मूर्च्छितेव, हृतालङ्कारा तिरस्कृतेव, निराहारा व्याधिजर्जरितेव, कण्ठलग्नप्राणा बभूव।

पुनः कालनियोगेन यवनराजमाक्रमता नीतराष्ट्रेण इंरेजराजेन वस्तुगुणविवेकिना किन्तु संस्कृतशास्त्रादिरक्षायै प्रयत्यते। तैरेव संस्कृतानुरागिभिर्विद्यालये संस्कृतभाषाभ्यासादौ सर्वेषामेवाधिकारिता व्यपस्थापिता। तयैव प्रत्याशया आर्य्यवंशीयानां अस्मास्वदतया च बहुविधविद्यालयसहयोगेन संस्कृतभाषा विगतचतुर्थवर्षे वैशाखमासि "संस्कृतचन्द्रिकाभिधा" मेकां कन्यामसूत। अहह, संस्कृतभाषा तथाप्यप्राप्तपूर्वावस्थात्वेन दुर्बलत्वाच्च स्वजीवनं पोषयितुमसमर्था कथमचिरप्रसूतां स्तन्यादिदानेन जीवयिष्यति। अतः संस्कृतभाषाप्रियतया भारतस्य संस्कृतस्य च गौरवविवृद्धये च कलिकातायां भूतपूर्वप्रधानधर्माधिकरणिकेन श्रीस्यार, रमेशचन्द्रमित्रेण मित्रेणेव वर्त्तमानप्रधानधर्माधिकरणिकेन श्रीश्रीगुरुदासवन्द्योपाध्यायेन उपाध्यायेनेव प्रायो व्ययभारं निर्वाहयता अन्यैरपि संस्कृतपक्षपातिभिर्महोदयैरस्याः परिपालने वीतशक्तिरपि अहं चन्द्रिकाया रक्षणप्रचारणभारं ग्राहितः। तेन हि बलीयांसं मनोरथं समुह्य गिरिनदीपारमशेषदेशं चन्द्रिकां कण्ठे गृहीत्वा

स्तनमातृकां बालिकामिव याचितेन स्तन्यरूपेण ग्राहकाद्‌ गृहीतेन मूल्येन बहुविधं प्रत्यूहं निहत्य वत्सरत्रयमपालयम्। अहह याञ्चावृत्तिस्तु चिराय विद्वद्भिर्विगर्हिता, यतः सा असम्मानस्य मृत्युकल्पस्य दुःखस्य च विश्रामगृहम्। किन्तु निरङ्कुशतया वासनायाः तत्रापि प्रवृत्तिं कुर्वतो मम द्वारं द्वारमटतश्च कुत्रचिदाशातिरिक्तं द्रव्यं क्वापि वा रिक्तहस्तं ग्राहकेभ्यः परावर्त्तं। किमधिकं केऽपि धनिनोऽपि महान्तोऽपि ग्राहकाः द्वित्रिवर्षं नीत्वापि चन्द्रिकां तज्जीवनाय मूल्यम् एकरूपकं १) सार्द्धरूपकं १॥० वा प्रदातुं न स्मरन्ति आलस्यस्य औदास्यस्य वा दासत्वमापन्नाः। अधुना चतुर्थे वर्षे पादं पातयन्त्याश्चन्द्रिकायाः केवलं स्तन्येन नोदरपूर्त्तिः सम्भवेत्। इत्यतः समुपचितं यत्नोऽन्नमप्यपेक्ष्यते। अतश्चन्द्रिकाया जीवन-साहाय्यार्थं मद्रराजे, मुम्बय्यां, पञ्चनदे मध्यभारते, एलाहावादे च राज-प्रतिनिधिसन्निधौ ? आवेदितम्, अतः चन्द्रिकां प्रति दयालूनां ग्राह-काणां पुरतोऽभ्यर्थये भवद्भिर्यथाशक्ति राजप्रतिनिधिसकाशात् साहा-य्यलाभे स्वतः परतश्च कृपया यत्नो विधेयः। कलिकातायां भारतराज-कोषात् प्रतिवार्षिकं रूपकशतं लब्धमिति।

अपि च अपरस्मादपि कस्माच्चिदार्यराजतो यदि चन्द्रिकासाहा-य्यलाभः सम्भवेत्, तत्राप्यावेदयितुं सम्यगुपायं पन्थानञ्चोपदिश्य नश्चिरायानुगृह्णन्तु इति।

---

## सतीच्छाया।

(फाल्गुनमासतोऽनुवृत्ता)

राजाज्ञया तथैव सुदृश्यमुद्यानपरिशोभितं गङ्गातीरे भवनमेकं वासार्थं कर्मचारिभिर्निर्णीतम्। वृद्धा तत्रैव सह छायया दासदासी-वर्गैश्च गता। विचक्षणेन भिषक्प्रवरेण च चिकित्सिता अनतिचिरादेव लब्धारोग्या च जाता। राजा च मनोमोहनरायः असत्यपि प्रयोजने

केवलं छायाया वदनमीक्षितुमेव प्रत्यहमन्तत एकधा तत्र गच्छति। यद्यपि कार्य्यान्तरप्रतिबन्धकतया कदाचित् राजा तत्र नागन्तुं शक्नोति। तदा म्लानमुखी च्छाया तमनुयुज्यते। छायां प्रति राज्ञः स्नेहाधिक्यमनुमाय कमला तुतोष, चिन्तयामास च मयि मृतायामपि छायाया अयमेव सहायो भवेदिति।

एवमेव षण्मासा व्यतीताः। किन्तु पापीयसः अतुलकरस्य प्रचण्डाघातेन नैषा पूर्ववत् स्वस्था बभूव। प्रत्येकग्रन्थिषु वातरोगेण पुनराक्रान्ता शय्यागतैव जाता। सती छायापि जीवननिरपेक्षमहर्निशं वृद्धायाः शुश्रूषापरा बभूव। राज्ञो मनोमोहनस्य आदेशेन अनेके विज्ञचिकित्सकाः समवेताः एकवाक्यं कथयन्ति प्राचीनशरीरे रोगः प्रबलो जातः जीवनाशा अल्पेव प्रतिभाति।

एकदा राजा मनोमोहनः समागत्य वृद्धाया रुग्नशय्यापार्श्वे उपविशति। तदा प्राचीना कमला कथयति, अयि पितृष्वसृधव! अद्य प्रेष्यमिकं प्रेरय मदीयं वादेनियुक्तं(१)समानेतुं स्वायन्तनात् प्राक्काले इति। अद्याहं कथञ्चित् स्वस्था वर्त्ते, ततोऽद्यैव स्थावरमस्थावरञ्च विभवमधिकृत्य निर्देशपत्रं (२) विधास्यामि। अपि च मदीय कर्मचारिणमेकं भवानीपुरे प्रेरय "शैलेश्वरचिकित्सकं सगोत्रञ्च श्रीसत्यप्रियवसुमलानय। तदाज्ञया सर्व एव यथानिर्दिष्टसमये तत्र समुपस्थिताः। वादे नियुक्तस्तु कमलया समादिष्टो निर्देशपत्रं लेखितुं प्रवर्त्तते। कमला च कथयितुं प्रवृत्ता, "मम तु ११०००० एकादशलक्षं रूपका लौहपेटिकायां वर्त्तते। तस्मात् द्विलक्षं सतीच्छायायाः। अवशिष्टस्य नवलक्षस्यमध्यात्, २००००० लक्षद्वयेन दातव्यौषधालयं चिकित्सालयञ्च सम्पत्स्यते। २०००००लक्षद्वयेन अनाथनिवासः अनाथाहारश्च निष्पत्स्यते। १०००००एकलक्षेण दीर्घिकाखननमतिथिशाला च भवेत्। १०००००एकलक्षं दरिद्रविद्यार्थिभ्यो देयम्। ५०००० पञ्चा-

(१) उकिल इति ख्यात। (२) उइल् इति यस्य प्रसिद्धिः।

शतसहस्रं ममैव श्राद्धे व्ययितव्यम्। अवशिष्टं ५००००।पञ्चाशत् सहस्रं मदीयश्राद्धाधिकारिणः श्रीसत्यप्रियवसोः। १००००० एकलक्षं विद्यालयार्थम्। १०००० दशसहस्रं शैलेश्वरचिकित्सकस्य। ५००० पञ्च सहस्रं पुरातनवैद्याय निवारणगुप्ताय। २५००० पञ्चविंशतिसहस्रं मम मन्त्रदात्रे गुरवे। १०००० दशसहस्रं पुरोहितवंशेभ्यः। १००० एकसहस्रं सतीच्छायायाः शिक्षकाय। १०००० दशसहस्रं शास्त्रव्यवसायिभ्यः पण्डितेभ्यः। १०००० दशसहस्रं आश्रितभृत्यवर्गाय देयम्। १००० एकसहस्रं जयादास्याः। अवशिष्टं ममान्त्येष्टिक्रियायां व्ययितव्यम्। व्यवकलितं स्थावरं समग्रमेव विभवं मम धर्मपुत्र्याः सतीच्छायायाः। मम मृत्योः परत एव ७००००० सप्तलक्षरूपकाः दानशालार्थाः अत्रत्य राजप्रतिनिधिहस्ते न्यस्तव्याः, तेन निर्दिष्टं सर्वमेव कार्य्यं निष्पादयिष्यते। सतीच्छायायाः २००००० द्विलक्षरूपकाः भूसम्पत्तिश्च अप्राप्तवयस्कायाः अस्याः राजा मनोमोहन एव रक्षिष्यति। प्राप्तवयस्का तु सतीच्छाया स्वयमिति"। निर्देशपत्रे लिखिते साक्षिणः स्वनाम लिलिखुः।

ततः कमला वादेनियुक्तं कथयति। महाशय! "मम मृत्योः परं निर्देशपत्रमेतत् राज्ञे निवेदितव्यम्, अधुना तु भवत्सन्निधौ रक्षितव्यम्"। ततः सर्वे गृहीतानुमतयः कमलायाः निर्ययुः। ततश्च दयावती कमला छायां सादरं क्रोड़मानीय मुखं चुम्बित्वा कथयति "वत्से! अधुनाहं सुखेन मरिष्ये, मम सतीच्छाया अद्य मनोमोहनेन राज्ञा त्वं साश्रया जाता इति।

श्रुत्वैतद्वृद्धावचश्छाया रोदितुमारभते। तां तु प्रबोध्य वृद्धा कथयति हे वत्से छाये! रोदनेनालं पतिहीनायाः प्राचीनाया आशु मरणमेव श्रेयः। मयि मृतायां देवालयपरिचर्य्यायां त्वं परिदर्शिनी भूयाः। प्राचीनभृत्याश्च रक्षणीयाः।

अपि त्वां धनशालिनीं दृष्ट्वा अनेके परिणेतुं वाञ्छिष्यन्ति, किन्तु

तत्र त्वया सावधनया भवितव्यम्। धनेन नैव सुखमुत्पद्यते, सुखन्तु मनो धर्म:। शास्त्रे विदुषामपि सच्चरित्रं नैव लक्ष्यते सर्वत्र। एतत् चिन्तनीयम्।

एकदा सतीच्छाया इदानीं भावप्रच्छादनमसङ्गतमित्यालोच्य श्रीमतो ज्योतिरिन्द्रस्य स्वस्यां भाव: स्वस्याश्च ज्योतिरिन्द्रे प्रगाढ़प्रीतिरित्याद्योपान्तं समस्तं वृत्तान्तं कथयति। श्रुत्वा च तत् वृद्धा सहास्यम् आशीर्विधाय कथयति वत्से! स्वमनोऽनुरूप एव भर्त्ता लप्स्यते, जगदम्बा पार्वती ते वाञ्छां पूरयतु।

निर्देशपत्रलिपेर्दशमेऽहनि कमलाया: पीड़ा तीव्रतरा जाता। वैद्यास्तु समयं परीक्षन्ते। मध्याह्नोत्तरं स्वेष्टमन्त्रं जपन्त्या: कमलाया: प्राणवायव: अर्द्धगङ्गाजले महावायुना मिलिता:। उच्चैरुदतीं सतीच्छायां प्रबोध्य राजा मनोमोहन: स्वगेहमनैषीत्। कमलाया ज्ञाति: सत्यप्रियवसु: ससम्भ्रममन्त्येष्टिक्रियां तस्या निरवाहयत्।

इति सप्तम: परिच्छेद: समाप्त:।

---

## अष्टम: परिच्छेद:।

( अचिन्त्यमिलनं )

अचिन्त्यदर्शनेनोभावानन्देनात्मविस्मृतौ।
मौरवं मुञ्चतो नेत्राद्वाष्पधारां सुविस्मितौ॥

धार्मिकाया: श्राद्धदिवसमागतप्रायमवगत्य राजा मनोमोहन: छायया सह भवानीपुरमागत्य सत्यप्रियवसुना सर्वं श्राद्धादि कर्म सुष्ठु निष्पादयति। निर्देशपत्रानुरूपं सर्वमेव कार्य्यं सुनिष्पन्नं जातम्। राजा मनोमोहन: छायामाह "वत्से! द्वादशवर्षवयस्कया त्वया एकाकिन्या नैवात्र स्थेयं अतो मद्गेह एव गन्तव्यम्। श्रुत्वा तद्वाक्यं छाया भवानेव मे गुरुरत्र प्रमाणं यथा भवते रोचते तथैव मया विधेयं नात्र विकल्प इति।

ततःपरं राजा मनोमोहनः छायां समादाय स्वगृहे उपतिष्ठते। जयादासी छायाया अनुचारिणी शुश्रूषापरा जाता। राजगृहे कतिचित् द्वितलगृहाणि छायाया व्यवहारार्थं निर्दिष्टानि। तस्मिन् भवने सर्वे भृत्यवर्गाः दासीवर्गाश्च सतीच्छायां देवीमिव पश्यन्ति। छायाया किञ्चिदप्यादिष्टं ते नान्यथा कुर्वते। छाया स्वसौजन्येन तद्भवनवासिनं सर्वमेव वशीचकार। राजापि मनोमोहनो रायः प्राणेभ्योऽपि समधिकं स्निह्यति छायाम्। छायापि अज्ञातपितामहं तं देवमिव भक्त्या सेवते। एकदा तस्य राज्ञः शरीरे कियानपि ज्वरभावो जातस्तेन च स शयानो वर्त्तते, तन्द्रया च स क्षणमभिभूतः। सतीच्छाया तदवस्थस्य पदौ सम्बाहयति निःशब्दं रोदिति च। परया च भक्त्या नतेन मूर्द्ध्ना राज्ञः पादौ स्पृशति। तेन च संजातचेतनो राजा मृदु हसित्वा कथयति। "छाये अयिमुग्धे! मरणं मे सम्भाव्य त्वं रोदिषि? मैवं, नायं मे मृत्युरोगः। समाश्वसिहि। तेन च छाया मनसा लज्जते।

राजगृहे वसन्त्याश्छायायाः प्रायो मासद्वयमतीतम्। अतुलकरेण सार्द्धं प्रायस्तत्र साक्षात् भवेत्। सुचरित्रा छाया कलिनोऽपि अतुलकरस्य सौजन्याभासं सन्तमिव श्रद्दधाति। एकदा राजा मनोमोहनः कर्म्मान्तराकृष्टः कलिकातायामेव स्थानान्तरं गतः। छायापि एकाकिनी स्वकक्षे समुपविश्य पुस्तकं पठति। तदा अतुलकरस्तत्र प्राविशत्। तं दृष्ट्वा छाया कथयति नास्त्यद्य महाराजः स्वगृहे इति। अतुलः कथयति तस्य सन्निधौ नास्ति मे किमपि प्रयोजनम्। त्वदन्तिक एव विशेषतः प्रयोजनं वर्त्तते। सतीच्छाया सविस्मयं पृच्छति किमिति प्रयोजनं। अतुलो गम्भीरभावं कथयति।—अयिच्छाये! तव सारल्येनाहं क्रीतोऽस्मि रूपमपि ते जगन्मोहि। अतस्ते पाणिग्रहणमभिलषामि। श्रुत्वैतच्छाया नम्रमुखी बहुक्षणं तिष्ठति। ततः कथयति "महाशय! कथमेतदुपपद्यते भवान् वर्षीयान् विज्ञतमः।

भवता संलपितुमेवाहमयोग्या। अपिच भवता ज्ञायते मम जन्मन्येव महान् संशयो जागर्त्ति समाजे इति। श्रुत्वैतन्निष्ठुरवाक्यमतुलस्य हृदयं जज्वाल।

ततः कूटवुद्धिस्तु अतुलः धीरं कथयति तव जन्मवृत्तं त्वत्तोऽपि मयैव सम्यक् सविस्तरञ्च ज्ञातम्। तच्छ्रुत्वा दुःखिनी छाया सभया कथयति—कथमिति। अतुलः कथयति—श्रूयतान्तत्। किन्तु महाराजाय नैतद्वाच्यम्। अयमेव महाराजः मनोमोहनस्तव पितामहः। भवनमेतत्तव पितुरेव। वधूराज्ञी तव विमाता। तदाकर्ण्य शिथिलदेहसन्धिः साशय्यायां शेते। हृदयञ्च भृशं कम्पते। ततश्छाया सत्रासं पृच्छति। भवता कथमेतद्विदितम्। दुष्टवुद्धिरतुलः इन्द्रप्रियया यथाविधि विवाहं विहाय आद्योपान्तं समस्तमेव वृत्तान्तं कथयति। अपिच। कथयति अहं तव पितरं मातरञ्च विशेषतो जानामि स्म, अतएव विवोढुमिच्छामि। छाया साश्रुनेत्रा कथयति अहं तव दयया अनुगृहीतास्मि, किन्तु न पुनर्विवाहार्थं वाच्यमिति।

ततश्च अतुलकरे निष्क्रामति छाया चिन्तयामास, प्रथमं तावच्चिन्तयति येन कारणेन राज्ञ एतादृक् स्नेहः, द्वितीयन्तु यतीन्द्रवाहादुरमिति। छाया तदानीं प्रायस्त्रयोदशवर्षीया। यौवनं सहकृत्य सौन्दर्य्यन्तां परितः परिवृणोति।

एकदा वसन्तकाले पराह्ने राजा प्रयोजनमनुसृत्य स्थानान्तरं गतः, प्रायः सर्वमेव गृहं रुद्धद्वारं। छाया सायाह्नात् परमुपवेशनयोग्ये कस्मिंश्चित् कक्षे सूपविश्य वीणां वादयति। तस्मिन्नेव काले झटिति कश्चिद्युवकः अङ्गप्रभया दशदिशो द्योतयन् तत्र कक्षे वीणाध्वनिमुपश्रुत्य पुमानत्रास्ते इति वुद्ध्या प्रविशति पश्यति च देवीव काचिद्वीणां वादयतीति। आगन्तुकः निश्चलचक्षुषा पश्यति मनस्तु उद्भ्रान्तं स्तम्भितञ्च।

ततोच्छाया सहसा अपरिचितं पुरुषमागतमालोक्य चकिता

सलज्जं पश्यन्ती निश्चिनोति अहो देवमूर्तिकोऽयमिति। परस्परस्य चत्वारि नयनानि मिलितानि, उभयोर्मर्मनि आनन्दस्रोत: प्रवलं प्रवाहितम्। उभयोर्नेत्रेभ्यो निरर्गलमश्रुप्रपातो जात:। अचिन्त्यमिलनेन उभौस्तम्भितौ। मुहूर्त्तमतीत्य छाया कथयति वाहादुर! अनुमीयते-दु:खिनीमिमां न विसस्मार इति। यतीन्द्रस्य पवित्रवाहू प्रसारितौ, यतीन्द्र: कथयति सतीच्छाये! छाये! प्रियतमे! जीवनाधिके! एहि एहि हृदयं दीर्य्यतीव सन्तप्तं हृदयं शीतलौ कुरु। अद्य वर्षत्रयं वहुक्लेशं जीवनं ध्रिये। पविवा छाया आत्मानं विस्मरति यतीन्द्रोऽपि आत्मानं विस्मरति। जगदेव यतीन्द्रमयम्। छाया परस्मिन्नेव मुहूर्त्ते आत्मानं यतीन्द्रालिङ्गितमवैति। विसृजति च अश्रुप्रकरं। तत्परक्षण एव आत्मानं संस्मृत्य सलज्जा यतीन्द्रवाहुतो विच्छिन्ना यतीन्द्रं पृथगासने उपवेश्य स्वयमपि पृथगासने उपविशति। यतीन्द्र: कथति छाये! कथङ्कारं त्वमत्र निवससि? तदाकर्ण्य सतीच्छाया आत्मवृत्तान्तं समस्तं विज्ञापयति। तच्छ्रुत्वा यतीन्द्र: सानन्दं कथयति त्वया स्वसौजन्येन जगदेव वशीकर्त्तुं शक्यते इति मातुलालयं। छाया कथयति महाशय! श्रीमता स्वयमहं स्निह्य तेनैवमुच्यते। इदानीं ब्रूहि मम प्रियसखी श्रीमती निर्मला कीदृशी आस्ते। एवं मातुलस्तद्गृहवासिन: सर्वे कुशलिनो वर्त्तन्ते अपि?। यतीन्द्र: कथयति सर्व एव कुशलिन: मामकास्त्वमातुलगृहवासिनश्च, किन्तु त्वत्कृते भगिनी निर्मला निरन्तरं खिद्यते, अनुभवति च दु:सहयातनां त्वद्वियोगसम्भूताम्। आकर्ण्य तत् छाया निरर्गलं वाष्पधारां प्रमुञ्चति। क्षणमतीत्य यतीन्द्र: कथयति स्मित्वा अयि छाये! अधुना तवाभिरक्षितारं राजानं विज्ञाप्य त्वां परिणेष्यामि अत: परं क्षणमपि विरहक्लेशं नानुभवाव:।

तत: साश्रुनयना छाया आत्मनो जन्मविवरणं यतीन्द्रसन्निधौ यथावत् कथयित्वा विज्ञापयति अयि वाहादुर! वृत्तान्तमेतत् यथा

न राज्ञा ज्ञायते, ज्ञाते हि तेन भूयसी यातना अनुभविष्यते। अयि प्रियतम! कथयित्वा अलं, जगत्यस्मिन् त्वमेवैको मे मनोमन्दिरस्याधिष्ठातृदेवः समुपास्यः। किन्तु तथापि ते पुण्यमयजीवनमपुण्यजीवनेन समं नैव संयोजयितुं समुचितं प्रतिभाति। अहं निश्चिकाय आमृत्युकालं अनूढ़ावस्थायामवस्थाय भवन्तमेकं मनसाराधयामि। अयि प्रियतम! त्वमपरां परिणय तेनाहं नैव दुःखिनी स्याम्।

श्रुत्वैतत् यतीन्द्रः वास्पगद्गदेन वचसा कथयति अयि छाये! त्वमेवैतत् विदितवती, स्मर मे प्राक्प्रतिज्ञां त्वामृते नान्यां कदाचिदपि न परिणेष्यामि इति, ज्ञात्वैतत् किमिति मामतिमात्रं कदर्थयसि। श्रुत्वैतत् छायायाः आपादमस्तकं सर्वासु शिरासु प्रणयस्रोतः प्रवाहितम्। छाया कथयति जीवितनाथ! त्वामसुखिनमालोक्य किमहं सुखिनी स्थातुं शक्नोमि?। चेदेवं ते निश्चयस्तर्हि कियन्ति दिनान्यपेक्षितव्यानि। यतीन्द्रः कथयति कियन्ति दिनानीति किमुच्यते त्वदर्थं चिरजीवनमप्यपेक्षितुं शक्नोमि। तदाकर्ण्य छाया स्मित्वा करेण तदीयं करं परामृशति। कथयति च प्रिय! जानामि ते हृदयं। अधुना ब्रूहि केनसूत्रेणात्रागमनं तव?। यतीन्द्रः कथयति शृणु तावत्, राजा श्रीमनोमोहनरायः मम पितामहस्य परमो बन्धुः। प्रायः पितामहो मे अत्रागच्छति परस्परं साक्षात् कर्त्तुं, अद्य किन्तु मम सुप्रभाततया पितामहेनाहं प्रेषितस्त्वां अपहृतरत्नमिव लब्ध्वा जीवनं सफलं मन्ये।

एतस्मिन्नेव समये सायं प्रायः प्रवृत्ते राजा निजालयमागत्य पश्यति यतीन्द्रेण सहालपन्तीं छायामिति। राजा क्षणं निश्चलनेत्रेण द्वयोः सौन्दर्य्य मेलनं निरीक्ष्य चिन्तयति अहो यद्येतयोः पतिपत्नीभावेन मेलनं जायते तदा सुष्ठु दृश्यं स्यात्, द्वावेव रूपेण गुणान् अनुकुर्वाते। ततो राजा स्मित्वा व्यक्तमाह भ्रातः! यतीन्द्र! अपि त्वं मे सतीच्छायारत्नमभिवाञ्छसि? एष एव किं युवयोः प्रथमः

साक्षात्कार: ?। यतीन्द्रः प्रणत्य नम्रीभूय कथयति नहि पूज्यपाद ! बाल्यावस्थात एवैनां विशेषतो जानामि, छाया तु मम भगिन्या निर्मलाया: प्रियसखी, छाया अतीव सरला पवित्रचरित्रा च इति। पश्चात् नत-नयनेन यतीन्द्रः स्मित्वा कथयति पूज्य पाद ! अनुमीयते पितामहेनापि भवता एव छाया प्रेम्णा लब्धुमभिलष्यते। राजा उच्चैर्विहस्य कथयति सत्यं ब्रवीषि भ्रातः ! छाया स्वभावेन पवित्रा अतितरां मां स्नेहेन समावृणोति। किमधिकं क्षणमपि एनामनालोक्य स्थातुं न शक्नोमि इति।

इति अष्टमः परिच्छेदः समाप्तः।

---

## अवन्तिका पुरी वा उज्जयिनी।

( पूर्वप्रकाशितात् परम् )

तेनैव रामभद्रसङ्काशरामचन्द्रेण भूतप्रजापतिसमयकथनकर्त्तृ-चतुरशीति-शिवलिंग-दृढ़नील-पाषाण-संवेष्टित-स्ववद्ध-प्रासादव्याजेन स्वर्गारोहणसमये परमोच्चकैलासपर्वतारोहणं कथं मे स्यादिति हेतुनेव दिव्या आचन्द्रदिवाकरस्थास्नुकीर्त्तिमती सोपानपरम्परावलिः सुरचिता। इत्यादिका बहुशो गोष्ठीर्नागरिका ग्राम्याश्च अत्रत्या लोका वदन्ति। शिन्दे इत्युपनामकेन राणोजीति-नामधारिणा पुरुषवरेण भद्रासनं मण्डयित्वा अत्रत्या लोका स्वधर्मे स्थापयाञ्चक्रिरे। दशरथस्य सुता इव तस्य चत्वारः पुत्रा बभूवुः। तन्मध्ये ज्येष्ठो माधवः ऋतुवर्गे माधव इव सकलकर्मभूमिकटकेऽप्रतिहतशासनः संजातः। साक्षात् रामभद्रेण शरणभूमिकामवतीर्णाय विभीषणाय यथा लङ्काराज्यं दत्तं तथैव नरवरेन्द्रेण माधवेन मद्रदेशाधीश्वरयवनेन, संयति पराजितस्य लोहमयपञ्जरे पञ्चाननस्येव स्थितस्य हरिप्रस्थाधीश्वरस्य "शाहा अलम" नामकस्य पाणिसंपुटे पुन स्तदीयराज्यं समर्पितम्। तदीयामद्भुताम् अलौकिकवीरश्रियमवलोक्य आनन्दजलविन्दुमुक्ताफलभूषितवक्षःस्थलो रोमाञ्चकवचावृतः सगद्गदाम् वर्ण-

पंक्तिमस्पष्टामुच्चार्य्य मानुषगणसंवाह्यं यानम् अन्यान्यपि राजकीय-चिह्नानि इतरभूपालास्पृष्टानि सरलसुवर्णानि परमाह्लादेन माधवा-ञ्जलिपुटे स्थापयामास (?)। स वीराग्रणी प्रतिनिधिपदञ्च तत्सर्वं प्रभुप्रसादमिव संगृह्य (?) मदोन्मत्तगजेन्द्रघनघटान्दोलितरसातलः नृत्यत्तुरङ्गश्रेणिघनतरकठोरखुरकुट्टितधरित्रीतलः प्रलयकालवि-जृम्भितसंवर्तकादिमेघमण्डलीकृत भैरवस्वनप्रतीकाशदुन्दुभिरवबधि-रीकृतदिक्चक्रवालः स्वपुरीं समाससाद। अयं माधवपार्थिवः मुनिरिव परमकरुणावान् शिव इव गणवेष्टितः देवकदम्ब इव शत-मन्युरञ्चितः सौगन्धिकनिकाय इव घनसारसंवलितः रावण इव विभीषणाद्यालिङ्गितः बलिनिलय इव वामनसंश्लिष्टः कीर्त्तिज्योत्स्नायाः सुधांशुः प्रतापोष्मणो भास्करः दयाकल्पलतिकाया उदधिः एतादृक् बभूव। तस्मिन् माधवनरवरे देवेन्द्रेण साकमाकल्पपरिहासकथं कर्त्तुं भूप्रदेशाद्गते सति तत् पुत्रेण दौलतरावेण रिपुमण्डलधनञ्जयेन वैरिमन्दिरवृन्दं दूर्वाङ्कुरस्थानमकारि। तस्माज्जनको जीरावो महेन्द्रा-ज्जयन्त इव प्रादुरभूत्। तस्मिन् भूपे मेदिनीसभां भासयति सति दीनशब्दता सपत्ननारीवक्त्रेषु न तु प्रजावदनसहस्रपत्रेषु, निर्दयता असिपत्रलतासु न तु मनुष्येषु, अत्यन्तकठोरसंग्रामधुर्य्यता स्वसैन्येषु न तु विपक्षसेनासु, तस्मिन् राज्ञि दुष्टकलियुगभयादिव अचिरादेव देवलोकस्थमहावीरैकसेव्यमानासनं भजति सति तत् पुत्रो जयाजि-नामकक्ष्माभृदवतार। स तु परमशिवार्चनमनाः जयजीवावराजः औरसान् पुत्रानिव सकलप्रजाः परिपालयामास। यस्य खुरलिखि-लनैं रमणीयतमैः सुहृदां आत्मवेश्मस्थितशात्रवहृदये महाभयोत्पाद-नार्थमिव आविर्भावः अधारि। यस्य नृपतेः खुरलिखेलनै नलि-कायन्त्रविनिर्गतधूमस्तोमकैतवेन सपत्ननारीवक्षःस्थलप्रदीप्यमान-वियोगाग्निसहस्राणी बाष्पमिव उद्गिरन्ती दुर्गं इव पर्वतकन्दरे कौशिकानिव वैरिव्रातान् विनिःक्षिपन्ती वीरश्रीः संग्राममूर्द्धनि

विरराजे। तस्मिन् भूपे भूलोकयशोमात्रैकशेषवपुषि सति इयं संग्रामलक्ष्मीर्वैधव्यव्रतं परिपालयन्तीव कथामात्रैकरूपवाञ्छयेव अदृश्यतां संप्राप। तदुत्तरं तत् पुत्ररत्नेन राजसिंहासनरूपकनकं खचितम् (?)। स माधवसंज्ञकदेव: बालभावस्थितकीर्त्या हिमालयं सम्भावनीयप्रतापेन सूर्य्यं नवनवोन्मेषशालिन्या धिया कविं औदार्य्येण बलिं शौर्य्येण कर्णं कान्त्या सुधांशुं वदनेन कमललक्ष्मीम् धैर्येण सुवर्णागारम् मर्य्यादया समुद्रम् सहनशक्त्या शेषम् जेष्यतीति सर्वे लोका: इदानीन्तना: स्वात्मनि संभावयन्ति। तत् कथाप्रतिपादकाविमौ श्लोकौ।

सद्रत्नपुञ्जपरिशोभितगात्रयष्टि: मीनप्रभापरिलसत्करसप्रमोद:।
लक्ष्मीविलासभवनं ननु माधवो राट् रत्नाकरेण समतां विदधातु नित्यम् ॥१॥

फुल्लेन्दीवरपत्रलोचनपुटे राजस्य मानश्चिरं
दीव्यन्मण्डलकान्ति भूषिततनुर्गौराम्बरालङ्कृत:।
अत्यन्तं मृदुलै: प्रजासुखकरैर्दीर्घै: करै: शोभित:
सत्पचावलिराजितो द्युतिमतां श्रीमाधवाख्यो नृप: ॥२॥   इति शिवम्।

श्रीकाशीनाथ शास्त्रि साहित्याचार्य्य:
संस्कृत प्रोफेसर माधवकालेज,—उज्जैन।

---

## धर्म्मविवेक:।

( पूर्वप्रकाशितात्पर: )

वामापद: समागत्य व्यत्यस्तपाणि: प्रणम्य गुरुं शिवराममग्रे स्थित:।

शिव। वत्स वामापद! इत उपविश।

वामा। ( तथोपविशति )

शिव। वत्स! वत्सरद्वयात् प्रभृति श्रुता: कथयतो मे धर्म्मविषये तावन्त: प्रकारा:। अन्योऽपि चेत् कोऽपि श्रोतव्य: सन्देहो वा वर्त्तते सोऽपि प्रष्टव्य:।

वामा। भगवन्! प्रष्टव्यः किन्तु अल्पीयानेवावशिष्यति, तमपि विषयमद्यैव पृच्छामि।

शिव। तर्हि ब्रूहि तत् किमपरं पष्टव्यम्?

वामा। भगवन्! धर्मः केवलमार्य्याणामेव भारतवर्षवासिनामस्माकमुताहो अपरेषामपि म्लेच्छादीनां वर्त्तते?। वर्त्तते चेत्तेषामपि धर्मः "यतोऽभ्युदयनिःश्रेयस सिद्धिः" इत्येवं रूपः, तर्हि किमित्यस्माद्धर्माद्भिद्यते? कथं वा म्लेच्छीयः स धर्मोऽस्माभिर्नाश्रीयते?

शिव। (विहस्य) वत्स! सम्यगयं कल्पः प्रष्टव्यः श्रूयतान्तावत्। वत्स! किमेतदपृच्छः "धर्मः केवलमार्य्याणामेव भारतवर्षवासिनामस्माकमुताहो अपरेषामपि म्लेच्छादीनां वर्त्तते" इति? म्लेच्छादीनां का कथा? पिशाचादीनामपि स्वाभाविकः समारोपितश्च धर्मो वर्त्तते। विना धर्मेण न कोऽपि जगति वर्त्तितुं सहते। पिशाचादीनाञ्च धर्म उपरिष्टाद्वक्ष्यते अधुना म्लेच्छादीनामपि धर्मोऽस्त्येवेति निश्चिनु।

वामा। म्लेच्छादीनां धर्मे किं प्रमाणम्।

शिव। आप्तवाक्यं प्रमाणम्।

वामा। कस्तत्राप्तः?

शिव। मुषा तत्राप्तः। यीषुस्तत्राप्तः। महम्मदश्च तत्राप्तः।

वामा। भवन्मते तेऽपि किमाप्ताः?

शिवः। अथ किम्।

वामा। तर्हि किन्तत्राप्तलक्षणम?

शिव। येषां भ्रान्तिः अनवधानता, मूर्खता, परप्रतारणेच्छा च न सन्ति तएवाप्ताः। एवं ये खलु रजस्तमोभ्यां गुणाभ्यामस्पृष्टाः तपोबलेन ज्ञानबलेन च, ये भूतभविष्यद्वर्त्तमानेषु कालेषु निर्मलमेवार्थं निश्चितं पश्यन्ति। त एवाप्ताः। तेषामेव वचनं प्रमाणं। तथाच महर्षि चरकोऽप्येवमेवाह।

"रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये
येषां त्रैकालममलं ज्ञानमव्याहतं सदा ।
आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयं
सत्यं वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमाः ॥"

अपि च तत्रैव विमानस्थाने चतुर्थाध्याये ।

"आप्ता ह्यवितर्कस्मृतिविभागविदो निष्प्रीत्युपतापदर्शिनश्च । तेषामेवङ्गुणयोगात् यद्वचनं तत् प्रमाणम् । अप्रमाणं पुनर्मत्तोन्मत्तमूर्ख रक्तदुष्टादुष्टवचनम्" इति ।

मनुरप्याह । (२ । १३ ।) कृषिराजसेवादि व्यापाररूपेऽर्थे एवं स्त्रीसम्भोगादौ तीव्रासक्तिरूपे तदङ्गे गीतवादित्रादौ च कामे येषां नासक्तिस्तेषामेव धर्मज्ञानं विशेषतो व्यवस्थितमिति ।

"अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते ।" इति ।

वामा । सुषाः योषुः महम्मदश्च आप्ता इति कस्मादवगतम् ।

शिव । महात्मनोऽवितथवचनस्य युधिष्ठिरस्य वचनात् ।

वामा । युधिष्ठिरेण तत्र किमुक्तम् ?

शिव । यद्यपि न तेषां नामोल्लिख्य किञ्चिदुक्तुं सम्भवेत् । तथापि तात्पर्य्यात् सुषादिष्वपि आप्तत्वमुपपादितं तेन । तथा च श्रूयताम् । यदा भीमेन गदया आहत्य ऊरुयुगलं दुर्य्योधनस्य बभञ्ज, इयेष च ततस्तं पदाघातं कर्त्तुं तदा तं तस्मान्निवारयन् युधिष्ठिर आह ।—

"मा भीम ! स्पृश पादाभ्यामेकादशचमूपतिं ।
पञ्चानामपि यो भर्त्ता नासौ प्राकृतमानुषः ॥"

युधिष्ठिरस्य वचनादेतस्मात् यः खलु पञ्चापि जनान् बिभर्त्ति अन्नदानादिना वा ज्ञानोपदेशेनार्थात् यस्य मतमनुवर्त्तन्ते पञ्चापि पुरुषाः। सोऽपि न सामान्येषु मनुष्येषु परिगणनीयः। अधुना विचारयतु सुषा योषु महम्मदादीन् कति कति पुरुषा न अनुवर्त्तन्ते स्म, कति कति जना वा तेषां मतं नादरन्ति स्म, सुतरां तेऽपि सुषादयः अप्राकृता एव पुरुषा आप्ता इत्येवं निश्चेतव्यम्। विशेषतः ये खलु

सामान्यधर्मा अहिंसादयः। ते तेषु निश्चितमेवासन्। अन्यथा स स महादेशः कथं तेषामद्यापि पन्थान मनुसरति। एवं मयापि ध्रुवमेतदनुमीयते तेषां धर्मग्रन्थे "वाइवेलादौ सन्त एवोपदेशा निहिताः। सद्ग्रन्थेतत्तत्र टीकाकृतो विद्वेषिणो यथार्थमपार्थयन्ति प्रमाद्यन्ति चेति।

अधुनैतद्विविच्यम्—

> क्षमा सत्यं दमःशौचं दानमिन्द्रियसंयमः।
> अहिंसा गुरुशुश्रूषा तीर्थानुसरणं तथा।
> आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम्।
> अनभ्यसूया च तथा धर्मः सामान्य उच्यते॥"

इत्येवं विष्णूक्तः। एवं (आचाराध्याये १२२। प्रायश्चित्ताध्याये च ६६)।

> "अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
> दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम्॥"
> "सत्यमस्तेयमक्रोधो ह्रीः शौचं धीर्धृतिर्दमः।
> संयतेन्द्रियता विद्या धर्मः सर्व उदाहृतः॥"

याज्ञवल्क्योक्तश्च धर्मस्तेषु विद्यते न वा? विद्यते चेत्तर्हि तेषां धर्मोऽपि विद्यते।

वत्स! वामापद! किं मन्यसे त्वम्। केवलं भारतवर्षीया एव किमधिकरिष्यन्ति धर्मसुखम्। अन्यदेशीया स्तत्र वञ्चिताः किं भवेयुः?। इदमतीव द्वेषविजृम्भितं वचः।

वामा। तर्हि तेष्वपि देशेषु तेषां धर्मार्थमीश्वरोऽवततार इत्यपि स्वीकुर्वन्तु भगवन्तः।

शिव। अथ किम्। शतधा स्वीकरोमि तत्।

वामा। तेषु देशेषु ईश्वरावतारे किं ऋषीणामप्यस्ति सम्मतिः?

शिव। तत् किं मन्यसे ममैव स्वमनो विकल्पनम्? अस्ति तत्र ऋषीनामपि सम्मतिः।

वामा। कस्य ऋषेः।

शिव। वेदव्यासस्यापि।

वामा। वर्त्तते एवञ्चेत् श्रोतुमग्रेसरति तन्मनः कुतूहलि।

शिव। श्रूयतां वत्स!

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे॥" ४।७—८।

इत्येवं भगवद्गीतादिषु वर्त्तते।

वत्स! यदा यदा धर्मविप्लवो घटते तदैवेश्वरः कारुणिकः स्वीकरोत्यवतारम्।

वामा। कस्मिन् देशे स्वीकरोत्यवतारम्।

शिव। सर्वस्मिन्नेव देशे इति, केवलं किं भारतमेव वर्षं सृष्टमीश्वरेण? न तु इनारवदेशादिकम्? तर्हि कः परः परमेश्वरादन्यस्तं देशं सृष्टवान्? अहो अयमतीव व्यामोहः।

ईश्वरो यदा ऐच्छत इनारवादिदेशे महान् धर्मविप्लवो जातः। मानवास्तत्र भूयसा तमसावृताः पशुप्राया यदृच्छमाचरन्ति। तदा स तत्र तत्र नाम्ना मूषाः नाम्ना योषुः, नाम्ना च महम्मद इत्येवं नावततार इति को निश्चिनुयात्?। को वा जानीयात्?। वयन्तु तत्रैव ईश्वरावतारत्वमङ्गीकुर्मः यत्रालौकिक्यः शक्तयः सन्निविशन्ते इति। यथा रामकृष्णादौ। यद्येवमलौकिक्यः शक्तयो मुषादिष्वपि लक्षिताः स्युस्तर्हि न कथन्ते ईश्वरावताराः। किन्तु वाइवेले कोराणे च तेषामसामान्यशक्तेः परिचयो बहुधा विवृतोऽस्तीति श्रूयते। नास्तीश्वरे कोऽप्यसम्भवः।

वामा। भगवन् ईश्वरोऽवतीर्य्य म्लेच्छमध्ये अभक्ष्यादिक मभ्यवाहरत् किमिति सङ्गतम्?।

शिव। बालकोचितोऽयं तव प्रश्नः। अरे नास्तीश्वरे भक्ष्याभक्ष्य-

विचारः। स न कस्माच्चिलज्जते दिगम्बरः सर्वव्यापी। लौकिक एवायं भक्ष्याभक्ष्यऽविधिनिषेधविचारः। स हि पाप्मना पुण्येन च न लिप्यते। अरे ईशोपनिषद्युक्तम्।

स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्।
कविर्मनीषी परिभूः स्वयम्भूर्य्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः इति ॥"८॥

परन्तु स ईश्वर यदा यस्मिन् देशे अवतीर्णः तद्देशोपयोगि खाद्यं तद्देशे सम्भवपरं वेशं तद्देशे हितकरमाचारञ्च स्वयमाचरन् व्यवस्थापयामास। इति। (क्रमशः)

---

## तत्त्वप्रपञ्चः।

( फाल्गुनमासतः परः )

अथ ज्ञाता प्रकृतिः। किन्तु केन प्रकारेण सा वर्त्तते प्रलयावस्थायाम्? तमोरूपेण प्रवर्त्तते इति पूर्वमुक्तम् "आसीदिदं तमोभूतम्" इत्यादिरूपेण। आस्तां, तिष्ठतु तावत्तमोरूपेण प्रलये प्रकृतिगुणसामास्यरूपा। किन्तु तदा सत्त्वादीनां गुणानां कथमवस्थानम्? धारावाहिकपरिणामक्रियासु व्यापृताः सत्त्वादयो गुणास्तदावर्त्तन्ते। ते च परिणामास्तेषां सदृशा एव। यतः परिणामस्वभावा हि गुणा नापरिणम्य क्षणमप्यवतिष्ठन्ते। तस्मात् सत्त्वं गुणः सत्त्वरूपेण रजोगुणो रजोरूपेण तमोगुणस्तमोरूपेण प्रलयावस्थायामपि परिणमन् प्रवर्त्तते इति।

तदानीमपरापि प्रवृत्तिः प्रकृतेरस्ति,—यथा समवायः स च समवायः गुणानां मध्ये गौणप्रधानभावेनैव घटते। गौणप्रधानभावश्च तदैव भवेत् यदा गुणा विषमभागास्तिष्ठन्ति। विषमभागश्च तदैव जायते यदा एको गुणोऽपरं गुणमुपमर्दयति। उपमर्द्योपमर्दकभावे च जाते महदादिभावेन प्रकृतिः प्रवर्त्तते।

अत्रेदमाशङ्क्यते।—कथमेकरूपाणां गुणानामनेकरूपा प्रवृत्ति-

रिति। नायमसम्भवः। यथा एकेन मधुररसेन विशिष्टमुदकं मेघ-निर्मुक्तं तासां तासां भूमीनां विकाररसमासाद्य तैश्च तैश्च भूरुहैः पादेनाकृष्टं परिणतञ्च भूत्वा तिन्तिड्यामम्लः इक्षुषु मधुरः क्षारभूमौ लवणः, मरीच्यां कटुः निम्बे तिक्तः गुवाके च कषायः नारीकेलफले च अल्पमधुरलवणकषायाश्च रसा लभ्यन्ते। तथा एकैकगुणसमुद्भूतात्। प्रधानं गुणमवलम्ब्य अप्रधानगुणाः परिणामभेदान् प्रवर्त्तयन्ति इति एतदेवाह सांख्यकारिका ॥ १६ ॥

"कारणमस्त्यव्यक्तं प्रवर्त्तते त्रिगुणतः समुदायाच्च ।
परिणामतः सलिलवत् प्रति प्रतिगुणाश्रय विशेषात्" ॥

अथ इदानीं पुनरप्यन्यदाशङ्क्यते। ननु महदादिजगतः कर्त्ता ईश्वर एवास्तु, अथवा परब्रह्मैवास्तूपादानं तथापि प्रकृतिर्नैवाङ्गी कर्त्तव्या। मैवं मायोपहितचैतन्यरूपस्य (१) ईश्वरस्य ब्रह्मच्छायत्वात् व्यापारो न सम्भवेत्। सुतरामेव कारणेनानेन कर्त्तृत्वं व्याहन्यते। प्रकृत्यधिष्ठातृरूपं कर्त्तृत्वमपि नास्य सङ्गच्छते, अव्यापारत्वादेव। न खलु हस्तादिपरिचालनव्यापारमकुर्वन् तक्षा करपत्रादिकमधिष्ठातुं शक्नोति। तथा अधिष्ठातृत्वं स्वीकृत्य प्रकृतिद्वारा ईश्वरो जगत् करोतीत्यपि रिक्तं वचः।

नापि ब्रह्मोपादानकं जगत्, कथमिति—चिद्रूपस्य कूटस्थस्य तस्यापरिणामित्वात्, परिणामित्वे तु कौटस्थ्यं व्याहन्येत इति।

अहो जगत्करणे प्रकृतेः का फलनिष्पत्तिः ? अपि च प्रकृतिस्तु नित्या सदा च सा जगत् कृतौ प्रवर्त्तते। तर्हि निरन्तरमसमाप्तः सर्गं

---

(१) "चिदानन्दमयब्रह्म प्रतिविम्बसमन्विता।
तमो रजः सत्त्वगुणा प्रकृतिर्द्विविधा च सा ॥
सत्त्वशुध्यविशुद्धिभ्यां मायाविद्ये च ते मते।
मायाविम्बो वशीकृत्य तां स्यात् सर्वज्ञ ईश्वरः ॥"
इति पञ्चदशी। १। १५—१६ ॥

एव स्यात्। स्यात्तत्र का नो हानिः?। तर्हिं कदापि कश्चिदपि नो मुच्येत। तत्तु नेष्टं कस्यापि। सत्यं जगत् कृतौ प्रकृतेरस्ति फल-निष्पत्तिः सकलपुरुषाणां मोक्षरूपा। परप्रयोजनमपि यः स्वप्रयोजन-मिव मन्यते तस्य परप्रयोजनमेव स्वप्रयोजनमिति प्रतिपुरुषं सा मोचयिष्यति। यथा ओदनपाकार्थी ओदनपाके प्रवर्त्तते, निष्पन्ने च ओदनपाके तस्मान्निवर्त्तते। एवं सा प्रकृतिर्जगतोऽस्यं निखिलं पुरुषं मोचयितुं प्रवृत्ता यं पुरुषं मोचयति तं प्रति पुनर्न प्रवर्त्तिष्यते। एतदेवाह सांख्यकारिकायामीश्वरकृष्णः। ५६।

इत्येष प्रकृतिकृतौ महदादिविशेषभूतपर्य्यन्तः।
प्रतिपुरुषविमोक्षार्थं स्वार्थं इव परार्थं आरम्भः॥

अथास्तु तावत् स्वार्था परार्था वा प्रवृत्तिः। सा च चेतनस्यैव पुंसो युज्यते न तु जड़ायाः प्रकृतेः। अत एव प्रकृतेरधिष्ठाता कश्चिदस्तीति स्वीकर्त्तव्यम्। स च ईश्वर इति। नैवम् अचेतनमपि क्रियासु प्रवर्त्तते इति दृश्यते। यथासद्यः प्रसूतस्य वत्सस्य जीवनरक्षायै अचेतनस्य दुग्धस्य स्नुतिरूपा प्रवृत्तिः। तथा अचेतनाया अपि प्रकृतेः पुरुष-मोचनायैव प्रवृत्तिरिति बहुधा प्रागुक्तम्। एतदेवाह सांख्यकारिकाया मीश्वरकृष्णः।

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य॥

आस्तां पुरुषस्य भोगादिप्रयोजनं प्रकृतेः प्रवृत्तौ कारणम्। निवृत्तिं प्रति किमिति कारणं? कदा वा सा पुरुषान्निवर्त्तिष्यते? सत्यां हि तस्या अनिवृत्तौ मोक्ष एव न सम्भवेत्। सत्यं पुरुषाय आत्मदर्शनं यावत् प्रकृतिः प्रवर्त्तिष्यते, दृष्टायान्तु पुरुषेण प्रकृतौ सा कृतार्था सती निवृत्तिमेष्यति। यथा रङ्गस्थान् सामाजिकान् नानाविधरूपेण स्वनैपुण्यं दर्शयित्वा यदा पश्यति नूतनं नान्यत् किञ्चिद्दर्शनयोग्य-मवशिष्यते प्रमोदजनकं, तदा सा नर्त्तकी सामाजिकेभ्योऽपसरति

तत्र भूमिकाया अपुनर्दर्शनाय। तथा प्रकृतिरपि पुरुषाय आकीटात् कैटभरिपुरूपादिकं जन्मपरार्द्धपर्य्यन्तं क्वचित् नरके क्वचिद्वा स्वर्गे रूपमसंख्यातं दर्शयन्ती कुर्वन्ती च कदाचित् पुरुषं सुखिनं कदाचिद्दुःखिनं कदाचिद्वा मुग्धं विरमति।

सा च प्रकृतिरस्वार्थपरतन्त्रा पुरुषं भोगापवर्गार्थं सेवते। यथा प्रभुभक्तो भृत्यो गुणवानपि विविधोपकारकोऽपि निर्गुणम् अत एवानुपकारिणं चिरस्वामिनम् अलब्धस्वार्थोऽप्यकैतवेन सेवते। तथा प्रकृतिरपि स्वार्थसम्पादने वीतस्पृहा उदारचरित्रा गुणवती प्रभूपकारिणी निर्गुणमपि पुरुषं सेवमाना व्यर्थं परिश्रमति। एतदेवाह सांख्यकारिकायामीश्वरकृष्णः।

"रङ्गस्य दर्शयित्वा निवर्त्तते नर्त्तकी यथा नृत्यात्।<br>पुरुषस्य तथात्मानं प्रकाश्य विनिवर्त्तते प्रकृतिः॥<br>नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः।<br>गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकञ्चरति॥"

अत्रेदमाशङ्क्यते।—रङ्गाभिनयं पश्यन्तः सामाजिकाः निवृत्तयापि सुष्ठु अभिनयकारिण्या कौतुकात् पुनः प्रवर्त्य प्रमोद्यन्ते। तथा प्रकृतिरपि पुरुषाय विविधरूपेणात्मानं दर्शयित्वा निवृत्तापि पुरुषप्रार्थनया पुनःप्रवर्त्स्यति। सत्यं प्रकृतिः खलु सुकुमारी अतिलज्जाशीला कुलवधूरिव परपुरुषदर्शनं न सोढुं शीलते। प्रमादात् कदाचित् समीरणापहृत-वस्त्रोदुकूला परपुरुषेण चेदालोक्यते। तदा लज्जया म्रियमाणेव तत आरभ्य तथा प्रयतते यथा अप्रमादां स्वां पुरुषान्तराणि न पश्येयुः। तथा प्रकृतिरपि कुलवधूतोऽपि सुकुमारी विवेकिना पुरुषेण विवेकबुद्ध्या "अहो इयं हि प्रकृतिर्जड़ा अहन्तु चैतन्यरूपः। अहमात्मा सच्चिदानन्दरूपः नित्यमुक्तस्वभावः। सुखदुःखन्तु न मे धर्मः। तत्तु बुद्धेरेव। बुद्धिस्तु प्राकृतिकी अत एव जड़ा। नाहं बुद्धिः। नाहमहङ्कारः। नाहं शब्दस्पर्श-

रूपरसगन्धतन्मात्राणि। नाहं श्रोत्रं त्वक् चक्षुः रसनं घ्राणं वा। नाहं वाक् पाणिः पादः पायुरुपस्थं वा। नाहं प्राणोऽपानः समान उदानो व्यानो वा पञ्चप्राणाः। नाहमाकाशः पवनोऽनलः सलिलं धरणी वा पञ्च महाभूतानि। तदेतत् सर्वमेव प्रकृतिरूपं अहं पुनरप्राकृतः। अहन्तु बुद्धेः पृथक्। बुद्धिरपि मत्तः पृथक्। बुद्धिगतदुःखादिकन्तु केवलं मयि प्रतिबिम्बितम्। दुःखप्रतिबिम्बपातेन कथमहं क्लेशमनुभवामि ?।"

इत्येवं रूपया दृष्टा चेत् न पुनर्दर्शनपथमुपैष्यति। एतदेवाह सांख्यकारिकायामीश्वरकृष्णः ॥ ६१ ॥

प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मतिर्भवति।
या दृष्टास्मीति पुनर्नदर्शनमुपैति पुरुषस्य ॥

अत्र पुनरन्यदाशङ्क्यते। पुरुषस्तु निर्गुणोऽपरिणामी च। यद्यस्य बन्धमोक्षौ तदा परिणाम आपद्येत। सत्यं पुरुषे बन्धमोक्षादिकमुपचरितं न तु वास्तवम्। कुत इति ? सवासनक्लेशकर्मविपाकाशयानां बन्धानाम् अपरिणामित्वात् पुरुषे यतोऽसम्भवः। अत एव नास्य पुंसः संसरणरूपः संसारः। सति संसरणे निष्क्रियस्य तस्य सक्रियत्वापत्तिस्तेन च परिणामो दुष्परिहरः स्यात्। तात्त्विकस्तु संसारो बन्धो मोक्षश्च परिणामिन्याः प्रकृतेरेव। यथा जयपराजयौ साक्षात् सम्बन्धेन योद्धृगतावपि स्वामिनि उपचर्य्येते असौ राजा युद्धे जितः पराजितो वा इत्येवम्। तथा बन्धमोक्षयोः प्रकृतिगतयोरपि अविवेकमहिम्ना पुरुषः स्वस्मिन् अस्तितां विकल्पयति। एतदेवाह ईश्वरकृष्णः ॥ ६२ ॥

तस्मान्नबध्यतेऽसौ न मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥

(क्रमशः)

श्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## भासावतरणिका ।

रोषारुणस्त्वासितपूर्वपर्वतः रात्रौ निलीनो जगदाक्रमे क्रतौ ।
व्याघ्रायमानः सहसोत्पतन् गिरेर्ज्यैष्ठेऽतिकष्टं तनुते स धृष्णिमान् ॥

## उद्भट श्लोकाः ।

अवतु वो गिरिसुता शशिभृतः प्रियतमा ।
वसतु ते हृदि सदा भगवतः पदयुगम् ॥२५२॥
याः पश्यन्ति प्रियं स्वप्ने धन्यास्ताः सखि योषितः ।
अस्माकन्तु गते नाथे गता निद्रा च वैरिणी ॥ २५३ ॥

गृह्णाति साधुरपरस्य गुणान्न दोषान् दोषान्विती गुणगणं परिहाय दोषम् ।
बालस्तनात् पिबति दुग्धमसृग्विहाय त्यक्त्वा पयो रुधिरमेव न किं जल..का: ॥२५४॥
गुणैः प्रयुक्ताः परमर्मभेदिनः शरा इवावंशभवा भवन्ति ।
तथाविधा ये च विशुद्धवंशजा व्रजन्ति चापा इव तेऽपि नम्रताम् ॥ २५५ ॥
रामाप्रियो ब्रह्मकुलेऽपि जातः सीतार्दितो हैमगृहे निवासः ।
मन्दोदरी मे शयने विलग्ना स रावणोऽहं दिक्पालहीनः ॥ २५६ ॥ (क्रमशः) ।

श्रीविधुभूषणदेवः । (राँचि)

# विनयाञ्जलिः ।

चेतो जहातु विषयं मुनिभिर्विनिन्द्यं
ज्ञात्वा कथं निरयवर्त्मनि ते सुतृष्णा ।
शश्वन् मया तव हिते कथने प्रवृत्तं
मा यातु सम्प्रति सखे यदि भद्रमिच्छेत् ॥ १ ॥
मा यातु मुक्तिभवनं परिहाय चेतः
वैकुण्ठधाम विषये न हि तत्त्वमस्ति ।
लोके यदीश्वरकृतं किमुतत् पृथिव्यां
नास्तीति शुद्धमनसा नितरां विचिन्त्यम् ॥ २ ॥
गोपीपतेश्चरणपद्मनिषेवनेन
तापत्रयं न हि भवेत् सुतरां विमुक्तिः ।
चेतस्त्वमेव प्रसभं हरिपादयुग्मं
लब्ध्वा रमस्व नु यतो न हि शान्तिरन्या ॥ ३ ॥
पुत्रादिमोहगहने भगवन्मदीयं
गन्तुं सदा प्रयतते किमहं करोमि ।
चेतश्चिरं गुणनिधे ! तव पादयुग्मे
नो वा गमिष्यति यतः किसुचित्रमस्मात् ॥ ४ ॥
संसारमोहमदिरां नितरां हि पीत्वा
लक्ष्मीपते ! तव पदे विमले विशोके ।
याति क्षणं मम विभो ! चपलं न चेतः
यास्यामि घोरनिरये न हि मे सहायः ॥ ५ ॥
संसारभोगमपहाय निरीहदेवं
नारायणं शिवमयं पुरुषं पुराणम् ।
लोकाः कुकर्मनिरता न भजन्त्यधोगं
प्रायो गृहे निरयवर्त्मनि वद्धतृष्णाः ॥ ६ ॥

नैवं विदन्ति सुरयस्तव पादवीर्य्यं
मायां त्वदीय वशगां त्रिगुणामविद्याम्।
अन्ये कुतः परम ! कौ नरसिंह ! विष्णो !
मायेश ! छिन्धि सुतरां गृहजालमोहम् ॥ ७ ॥
लोको न वेत्ति निजमङ्गलमत्युदारं
हिंसा-विहार-निकरेषु सदा प्रमत्तः।
ईश ! त्वमेव निजकार्य्यविशालदक्षः
यस्मान्न पण्डितमनो विरतं हि कृच्छ्रात् * ॥ ८ ॥
सत्यं भवान् त्रिभुवने न हि कश्चिदन्यः
स्वप्नोपमे तव पदं श्रुतिभिर्विमृग्यम्।
कस्माद्ध विहाय मनुजः स्थिरतरामुपैति
चित्तं न तत् त्वयि विभोऽखिललोकनाथे ॥ ९ ॥
हे नाथ ! हे कुलपते ! वसुदेवसूनो !
हे कृष्ण ! हे यदुपते ! कृपया च शश्वत्।
मायां त्वदीय रचितां भवबन्धकर्त्रीं
छिन्ध्याशु देव ! भगवन्निदमेव याचे ॥ १० ॥
क्व त्वं वराङ्कक ! नु यादव ! पङ्कजाक्ष !
वृन्दावने विहरसि श्रुत विष्णुलोके।
सर्वान् विहाय गमने मतिरस्ति तुभ्यं
दास्यं न दास्यसि पदे तव वा सकाशम् † ॥ ११ ॥
गोपेश ! गोपललनाकुलमानबन्धो !
कृष्णाश्रवस्य विनयं कृपणस्य भूयः।
प्राणप्रयाणसमये तव नाम कण्ठे
घोरे विराजतु चिरं त्विदमेव याचे ॥ १२ ॥

श्रीविधुभूषणदेवः। (राँचि)

---

* श्लिष्टोऽयम्। † श्लिष्टोऽयम्।

# उद्भटप्रसङ्गः ।

पुरा किल आर्य्यावर्त्ते रीतिरीदृशी जजागार। ये खलु पितृमातृभ्यां हीनाः शिशवस्ते मुनीनामाश्रमे पालिताः शिक्षिताश्च बभूवुरिति।

रीतिमेतामनुसृत्य वेदव्रतनामा कश्चिद्द्विजकुमारः मातरपितराभ्यां विहीनः हिमालयपर्वतस्य पादनिःसृताया मालिन्याः सरितस्तीरे कस्यचिन्मुनेराश्रमे ग्रामवासिभिस्तद्बन्धुभिर्नीत्वा स्थापितः। स वेदव्रतस्तत्रैव मुनिभिः पाल्यते। तेषां पोषणमासाद्यानुदिनं स वर्द्धते। यथाकालञ्च स उपनयनेन संस्क्रियते। तत एतं व्याकरणमध्यापयति, अथैनं वेदमप्यध्यापायितुं प्रवर्त्तते। क्रमेण च वेदव्रतः शिक्षासौकर्य्येण विद्यासु नैपुण्यमधिकुरुते।

तत्र च यश्चतुर्दशवर्षे पदं निदधाति। स भिक्षामटति इत्येवं नियमश्चिरं प्रचलति। एकदा अपरे अन्तेवासिनो गुरुं निविदन्ति— "भगवन्तः! सतीर्थस्य नो वेदव्रतस्य साम्प्रतं भिक्षाचर्य्यावारः समुपस्थित इति"। गुरुस्तदवगत्य आहूय च वेदव्रतमादिशति "भो वटो! भिक्षामट" इति। वेदव्रतः कथयति "तर्हि मामनुशाधि-भिक्षाटने कः प्रकारः? किं वक्तव्यम्? क्व वा गन्तव्यमिति"।

गुरुरुपदिशति—"इतो दक्षिणां दिशमटतु, ततः पार्वत्यं दृश्यं क्रमशो व्यतीष्यति। ग्राम्यश्च भावः चक्षुर्गोचरतामेष्यति। क्वचित् क्रोड़त्कारण्डवं प्ररूढ़पङ्कजं सरः। क्वचित् प्रशस्ताङ्गनोपेतं चतुःशालं भवनम्। क्वचित् सुधाधवलितमट्टालमित्यादि। तत्र निःशङ्कं व्रज। यं पश्येरस्मादृशं श्मश्रुलं त्रिकच्छेन परिहितवसनम्। तं ब्रूहि हा वप्र! (१) भिक्षां देहीति। शाखेत्येति शब्दिता या व्यञ्जासीः। ता विमलमुख्यः दीर्घकेश्यश्च निश्चिनु। यदि तथाविधां कामपि वीक्षेथास्तर्हि तां वग्धि मा! भिक्षां देहीति।

---

(१) बाबा इति यस्यापभ्रंशः।

ततः स वेदव्रतः कृतानतिर्गुरोर्लब्धानुमतिः दक्षिणां दिशं प्रतिष्ठते। क्रोशद्वयमतीत्य गुरुणा प्रत्यभिज्ञापितं ग्रामं पश्यति। व्रजति च निःशङ्कम्।

अथ परितोऽदृष्टचरं ग्राम्यं दृश्यं वीक्षमाणः एकपदीमनुसरन् कस्यचिद् गृहमेधिनो भवनमुपतिष्ठति। दैवात्तस्मिन्नहनि गृहस्वामी अन्यतो गतवान्। वेदव्रतस्तु न क्वापि प्रतिबन्धं लभमानः तस्यान्तर्वेश्मनि प्रविशति। पश्यति च गुरुणा प्रत्यभिज्ञापितां पुंसंस्थानादन्यादृशीं केशवतीमश्मश्रुमुखीमर्द्धावगुण्ठनवतीम्।

ततः "हा मातः! अयि मा! भिक्षां देहि" इति तां भिक्षां याचते। तदुपश्रुत्य गृहस्थवधूः झटिति परिहृत्य कर्मान्यत् फलमूलादिकमादाय तस्मा अर्पयति। स तु तामालोक्यादृष्टपूर्वां सुन्दराकृतिं विस्मयते। गृहस्थस्त्री भिक्षापात्रं तस्य पुरतो निःक्षिप्य पश्चात् किञ्चिदपसृत्य तिष्ठति। स वेदव्रतः क्षणं स्तम्भितो विस्मितश्चावाङ्मनसगोचरां तां वीक्षमाणस्तर्जन्या निर्द्दिश्य ब्रूते—हा मातः! काविमौ ते वक्षसि पीनौ?। गृहस्थवधूस्तदाकर्ण्य "अहो दुर्विनीतोऽयं दुष्टाभिप्रायः" इत्येवं क्षणमन्यथा चिन्तयित्वा पुनर्निश्चिनोति नास्य दुष्टाभिप्रायो भवितुमर्हति, किन्तु महानस्यार्जवो लोकसीमानमतिवर्त्तते इति। अयं मातरिति संबोधति।

ततः सा कथयति वत्स! कुचावेतौ।

वेदव्रतः। कथमेतौ वहसि?।

गृहस्थस्त्री। ममोदरे पोतो वर्त्तते। स जनित्वा स्तन्यं पास्यति तदर्थमेतौ। अनयोर्मध्ये दुग्धमस्ति।

वेद। क्व लब्धावेतौ? केन वा दत्तौ?।

गृह। विश्वं पालयता नारायणेन दत्तौ।

वेद। अस्मभ्यः पुंभ्यः कथं नारायणेन नैतौ दीयेते?।

गृह। भवन्तस्तु पुमांसः कर्मान्तरैराक्रष्टा देशाद्देशान्तरं पर्य्यटितु-

मर्हन्ति। इतस्तु स्त्रीभ्यो जनित्वा बालकः सद्यः किं पास्यति। तथा सति शुष्ककण्ठौष्ठतालुकतया बालो म्रियेत। तेनैवाऽस्मभ्यो दत्तौ।

वेद। दत्तौ भवतीभ्यः, परन्तु पृष्ठतः कथं न दत्तौ।

गृह। पृष्ठतो दत्तयोरनयोः पोतस्य स्तन्यपानं न सुकरं स्यात्। इतस्तु क्रोड़े शयित्वा स्तन्यं पातुमनायासं शक्नुयात्।

वेद। मातः! कदा ते अर्भको जनिष्यते?।

गृह। दशमासतः परम्।

वेद। दश मासतः परमर्भको जनिष्यते। तदानीं स पास्यति। तर्हि अधुना कथं स्तनौ दत्तौ?।

गृह। वत्स! नारायणस्त्रिलोकीनाथः परमदयालुः। तस्यायमेव निसर्गः जननात् पूर्वत एव भक्ष्यं कल्पयतीति।

वेद। मातः! एवं पुङ्खानुपुङ्खं विचार्य्य नारायणः किं सर्वेभ्यो भक्ष्यमर्पयति? सर्वान् पिपर्त्ति?

गृह। अथ किम्?

वेद। तर्हि मातः! ममापि भक्ष्यं पूर्वतो निर्णीतं स किं दास्यति।

गृह। अथ किम्।

वेद। हामातः! प्रतिगृहाण तदर्पितं फलमूलादिकम्। मह्यं नारायणो दास्यति इत्युक्त्वा लब्धेश्वरविश्वासः स प्रतिगन्तुमारभते। तद्दृष्ट्वा गृहस्थवधूः सनिर्वेदं शतधा प्रार्थयति, किन्तु स कथमपि तन्न गृह्णाति। केवलं तामाभाष्य। हा मातः!

"गर्भस्थस्य च यः पूर्वं वृत्तिं कल्पितवान् पयः।
शेषवृत्तिविधानाय स किं सुप्तोऽथवा मृतः॥"

इत्युक्त्वा द्रुतं स प्रतिनिवर्त्तते।

अथ ततः प्रतिगत्य अन्येन पथा क्वापि पार्वत्ये देशे महान्तं पिप्पलतरुमधितिष्ठन् नारायणं ध्यायति। एवं द्वित्राणि दिनानि

नारायणं ध्यायतस्तस्य व्यतीतानि । अहो दुर्बलो बालोऽनशनव्यसनेनोप-
वेष्टुमशक्नुवानो भूमौ दण्डायमानः शेते । चिन्तयति च नारायणम् ।

नारायणस्तु तस्य तादृशीमालोक्य दशां चिन्तयति । अहो अतीवदुर्ललितोऽयं बालो मदेकविश्वासः । किन्तु मयैव परिपालिते विश्वस्मिन् विनाहारं न कोऽपि विपद्येत । अधमर्णोऽहं जीवजाताय भक्ष्यं प्रदातुम् ।

एवमालोच्य तस्मिन्देशे राजानं स्वप्न एवमादिशति—राजन् ! अमुकस्मिन् शैलसानौ पिप्पलमूले वेदव्रतो नाम बालकः क्षुधापीड़ितो भूमौ लुठति । अद्य प्रभृति पञ्चविंशत्या पुरुषैर्याबद्भुज्यते तत्परि-मितं खाद्यं प्रत्यहं तस्याश्रमं प्रापय । नो चेत् सराष्ट्रं त्वां हन्मि इति ।

तदारभ्य स राजा स्वप्नादिष्टं सर्वं सम्यक् निष्पादयति । वेदव्रतोऽपि स्वाश्रममेव प्रतिवसन् सगुरुः ससहाध्यायश्च वीतचिन्तः शास्त्रे धर्मे च परं प्राविण्यमुपगच्छन् सुखमास्ते । अहो ईश्वरमहिमा इति ।

---

## ( श्मशानम् । )

हे चित्त ! किं सम्प्रति चञ्चलत्वमभ्येषि ? कौतूहलवारिराशौ ।
निमग्नमप्यत्र, कथं नितान्तभयार्दितं ? किं घटते ? कुतो वा ॥१॥
नितान्तदुःशासन-शासकोग्रदृष्ट्या निपीतायु रहो ! नु भीतः ।
जनो यथा, किं सहसा मनस्त्वं स्तब्धीभवस्यत्र सुवेपसे च ॥२॥
जानासि जानामि ; समीक्ष्य नूनं प्रशान्तधीरस्थिरवर्त्तमानम् ।
क्षेत्रं नवीनं नवभावदिग्धमलौकिक-त्रास-विशेषमेषि ॥३॥
एतत् स्वतःसम्भवतीह ; कोऽयं वीरोऽद्वितीयः सबलोऽस्ति जातः ।
विलोक्य यः स्थानमिदं सुखेन स्थातुं समर्थोऽत्र विनिर्भयः सन् ॥४॥
इदन्त्वव नैव ; सहस्रक्षत्वः इहा गता एव वयश्चिराय ।
देहा इमे स्थणमयतां समीयुः, किं साध्वसन्तद् विषमा च चिन्ता ॥५॥

एतत् स्थलं नूतनता-निदानं पुनः पुनश्चित्त ! विलोकितं सत् ।
प्रदर्शयेदेव नवीनजातं सुश्रावयेच्चासु नवीनमर्थम् ॥ ६ ॥
अत्रागतानां सबलोऽभयश्च कोऽसौ महात्मा सदयो विवेकी ? ।
यत्रैव मृत्युर्विषमोऽतिरौद्रो भयङ्करो भीषयितुं समर्थः ॥ ७ ॥
रम्यत्व-पूतत्व-भयङ्करत्व-विभूषितं क्षेत्रमिदन्न किं स्यात् ।
सुनिर्भयान् मोदयितुं समीशं स्वभावभावामृतसेचनेन ॥ ८ ॥
जीर्णत्वचस्तुङ्गशिरःसहस्राः संवेष्टिताः पुष्पितवल्लरीभिः ।
वृक्षाः सदास्मिन् विरुवद्विहङ्गाः सुस्मारयन्तीव सुखं स्वतीतम् ॥९॥
रे चित्त ! पश्याशु ; समन्ततोऽदः क्षुद्रं वनं तद् रुचिरं सपुष्पम् ।
भीत्या समं कामपि तृप्तिमिष्टां किरत्यकामस्य च मानसेऽत्र ॥१०॥
मांसाशिनः साध्वसहेतुभूताः गृध्राः समन्तात् सरवाः शवेषु ।
उत्पत्य तीव्रा बहुशः पतन्ति परस्परद्वेषिण एव हाहा ! ॥ ११ ॥
अश्वत्थशृङ्गेषु घनाश्रितेषु स्थित्वात्र काकाः प्रखरैर्निनादैः ।
निस्तब्धतामासु विभज्य चित्त ! न किं ब्रुवन्तीव समस्थिरत्वम् ॥१२॥
गोमायवः कौतुकिनः समन्तात् श्वभिः समं लोभवशाद् विहृत्य ।
साम्यस्य मैत्रस्य च दर्शयन्ति स्वाधीनतायाश्च निदर्शनानि ॥ १३ ॥
तृणादिभिर्भूमिरुहैश्च घोरमाकीर्णमेतत् लघु विग्रहञ्च ।
सरो न किं ज्ञापयतीह नूनं "सौन्दर्य्यवीर्य्यादिकमस्थिरन्तत्" ॥१४॥
क्वचित् क्वचित् चित्त ! वतार्द्धदग्धकाष्ठानि कृष्णानि भयोत्तराणि ।
समागतान् कार्य्यमतीतमत्र संस्मारयन्तीव चिराय भावि ॥१५॥
अङ्गारराशिः स्वपि भस्मराशिः शुभ्रास्थिचूर्णालिविभूषिताभः ।
विभीषिकाराशिमहो क्षणेन किरत्यहो ! दर्शकमानसेषु ॥ १६ ॥
सच्छिद्रशूर्पस्रगसुत्तकण्ठाः क्वचिद् घटाः केचन ते भवन्ति ।
क्वचिद् विचूर्णत्व मुपेत्य तेऽत्र नैव स्थिरं किञ्चिदिति ब्रुवन्ति ॥१७॥
पावित्र्यदाः पूतविभास्तुलस्यः काश्चित् स्थिरत्वेन विभान्ति चारु ।
विशोषिताः काश्चिदिहानलेन शोकार्दितानां समतां प्रयान्ति ॥१८॥

श्मशाननाम्ना व्यपदिश्यमानमेतत् स्थलं नीरवमीक्षणीयम् ।
वक्तीव किं नो इति पान्थवासः संसार एष प्रभुता-विकाशः ? ॥१९॥
गर्वं वृथा नो मनुजा ! वहेत ; अहङ्कृतिः किं ? क्रियते दिनाय ? ।
अहं नु ! सर्वस्य नितान्तगर्वं खर्वं वयोऽन्ते विदधामि नूनम् ॥ २० ॥
(कुलकं) ।

साम्यैकहेतो ! त्वयि हे श्मशान ! राजा प्रजा वा, सधनो दरिद्रः ।
विद्वान् विमूढ़ो द्विजवैश्य शूद्राः आर्य्योऽप्यनार्य्यः समतां भजन्ति २१
सर्वस्य पूर्वं समतेति मन्ये ; धर्मस्य वर्णस्य ततश्च भेदः ।
अत्रास्ति साम्यं तत एव कर्मानुसारतो भिन्नपथश्चिराय ॥ २२ ॥
गुरुस्त्वमस्मिन् जगति प्रधानं, अध्यापयस्येव नु ! साम्यमन्त्रम् ।
त्वमेव विश्वं, मतिमानदर्पा स्त्वदीक्षणादेव लयं प्रयान्ति ॥२३॥
अहो श्मशान ! त्व मतीवचित्रपवित्रतीर्थं स्तवदर्शनेन ।
नितान्तपापावृत चेतसोऽपि स्याच्चित्तशुद्धिः परिणामभीत्या ॥२४॥
महेश्वरो नित्यसुखी सुखेशो योगोपयुक्तस्थलमाविचिन्त्य ।
हित्वा गृहं रत्नविभाप्रदीप्तं त्वा मेव नो किं लभते चिराय ? ॥२५॥
अङ्गारपुञ्जं, मृदु पुञ्जितास्थि दाहावशिष्टं, ज्वलितं शवञ्च ।
त्वां भस्मराशिञ्च समीक्ष्य केषां नोदेति चित्तेऽखिल-नश्वरत्वम्? ॥२६॥
श्मशान ! संसार-विनश्वरत्वोपदेशकार्य्ये गुरुरद्वितीयः ।
त्वमेव ; वैराग्य-नयोपदेशे न त्वादृशोऽसौ गुरुरीक्ष्यतेऽत्र ॥२७॥
त्वत्क्रीड़नं ज्ञातुमहो क्षमेत श्मशान ! कोऽयं जगतीतलेऽस्मिन् ? ।
यदिच्छयासीदिदमेव मर्त्यं सुनन्दनं, तत्कथमत्र लीनम् ? ॥२८॥
अनन्तचित्तान्यपि मादयन्ति नृत्यानि गीतानि च शान्तिदानि ।
दिव्यानि योऽत्रैव समानिनाय, जहार कष्टं ! न किमत्र तं त्वम् ॥२९॥
भीष्मोऽर्जुनः कर्ण-कृपौ-विकर्णः द्रोणाभिमन्यू क्व च ? वीरदर्पैः ।
येषां धरेयं परिवेपते स्म, नादाः स्थलं किं शरणं त्वमेभ्यः ? ॥३०॥
तत्त्वार्थिनोऽनन्तसुतत्त्वदीक्षास्थले त्वयीच्छन्ति सुखश्चिराय ।

विहर्त्तुं, मत्वैव मुनीरवैन भस्मासने तिष्ठति किन्न मृत्युः ? ॥२१॥
रूपप्रफुल्लाम्बुजमत्र शुष्कं समुज्ज्वलज्ज्वालहुताशनेन।
निपात्यते मृत्युसमीरवेगैरनन्तगर्वाद्रिविशालशृङ्गम् ॥२२॥
नदो तृणानीव लघूनि नित्यं अपाम्पतिं प्रापयतीह तीव्रं।
महाबलीयान् समयो दुरन्तः शुष्कायुषस्त्वां सकलान् क्षणेन ॥२३॥
समन्ततः पश्य नु मानस ! त्वं प्रचण्डतीव्रज्वलनः प्रभावान्।
अनन्तदेहान् दहनः क्षणेन भस्मीकरोत्यत्र भयङ्करोऽसौ ॥ २४ ॥
पश्चात्र तीव्रो ननु धूमसंघ आकाशमार्गं समलं व्यतीत्य।
अनूनवेगैः समनूनमार्गैर्विलीयतेऽसौ प्रकृतौ महत्याम् ॥२५॥
धीरः समीरोऽपि किरत्यनन्तं तत् सौरभं मानस ! पश्य पश्य।
अध्यास्य काष्ठावलिमत्र केचित् हरिं स्मरन्तीव विमुद्रनेत्राः ॥ २६ ॥
विकाश्य दन्तावलिमत्र कश्चित् शवो विहस्येव मुखं ब्रवीति।
प्रमोदपुष्पावलिचन्दनाम्बुसमर्च्चितो यः स इहाद्य धूलौ ॥ २७ ॥
शिरीषपुष्पावलिसंस्तरेऽपि योऽयं पुरा श्राम्यति ताम्यती च।
उद्घातिनीं भूमिमपि श्रयन् सन् न क्लेशलेशन्त्वपि वेत्तुमीशः ॥२८॥
रे चित्त ! विश्वेश्वरतत्त्वराजिं विस्मृत्य यस्तुच्छधनार्जनेषु।
आसीत् समासक्त इहापि सोऽयं विहाय सर्वं गतजीवनोऽस्ति ॥२९॥
परापकारव्रतयापि मत्या आजीवनं यः खलु सञ्चिकाय।
बहूनि रत्नानि च वेशभूषाः स वीतसर्वोऽत्र दिगम्बरोऽस्ति ॥४०॥
असौ पुरा यस्य सुखाशयैव निरन्तरं विश्वमनूनमट्टत्।
विभूतिदीप्तो रुचिरोऽत्र देहः तीव्रानलैर्ग्रस्यत एव सोऽद्य ॥ ४१ ॥

(क्रमशः)

———

# सतीच्छाया ।

( पूर्वतोऽनुवृत्ता )

## ( विमले कलङ्कः )

द्वेष्यं यदि स्यादङ्कदूरतोऽपि द्वेष्टुर्मनः पीड़ति कालकूटैः ।
सान्निध्यमागच्छति चेद्धि तस्मिन् चितानलः संज्वलति स्वचित्ते ॥

ततः प्रभृति यतीन्द्रबाहादुरः सर्वदैव राजगृहमागच्छति प्रतिगच्छति च । सतीच्छाया भाविसुखाशया चेतसि प्रह्लादते । महाराजस्य मनोमोहनस्यानुदिनं तस्यां स्नेहसारः प्रवर्द्धते ।

महाराजेनैतदप्यनुमितं छायायाः यतीन्द्रस्य च परस्परमनुरागः सञ्जात इति । छाया तु वृद्धराजस्य आन्तरिकभक्त्यैव सेवासु प्राणानप्युपेक्षितुं वाञ्छति ।

किन्तु छायां प्रति वृद्धराजस्य स्नेहप्रवृत्तिं नैसर्गिकीमालोक्य वधूराज्ञी अन्तर्दह्यते । कदाचिद्राजा मनोमोहनः पुत्रवधूमुपदिशति । छायां पितृभ्यां हीनां प्रति सद्व्यवहाराय । किन्तु पुत्रवधूः "वधराज्ञी" ततोऽपि विरक्तिं नाटयति । यदि कदाचिच्छाया "राज्ञीमातः" ! इत्येवमाह्वयति तदा सा क्रोधेन रक्तमुखी भवति विषदृष्ट्या कर्कशोक्त्या च छायां भीषयति ।

क्रमशः स्वभावं सदोषमपह्नोतुमनीशा पुत्रवधूश्छायां हिंसितुं प्रवर्त्तते ।

एकदा ग्रीष्मसमये सतीच्छाया पितामहेन राज्ञा सार्द्धं उद्याने पर्य्यटति । प्राभातिकसमीरणस्पर्शात् द्वावेव सुस्निग्धौ भवतः ।

इतस्तु हिंसाप्रकृतेः पुत्रवध्वाः प्रतिहिंसा हृदये प्रज्वलितुं प्रवर्त्तते । तस्मिन्दिवसे जयादासी यदा जागर्त्ति तदा किञ्चिद्वेलाधिक्यं जातं । जागरित्वा सा अपरां दासीं पृच्छति सतीच्छाया क्व गता नाद्यापि किं मुखादिकं न प्रक्षालयति ? । राजवधूः सततं छिद्रमनुसन्दधाति ।

सा वक्रोक्त्या कथयति—अयि जये अधुना तस्या दर्शनं पुनः क्व लप्स्यते ? सा इदानीं उपराज्ञी बभूव। प्रायः अर्द्धरात्रे तिष्ठति सा राज्ञा सार्द्धं मलयानीलं सेवितुमुद्यानं गता। मायाविनी पिशाचीयं कुत आगत्य भवानीपुरस्थितायास्तस्याः कमलायाः प्रायः समस्तं विभवमायत्तीकृतं। अत्रापि तथैव विधातुं जालं पातितम्।

श्रुत्वैतद् जया मर्माहता मनसि राजवधूं निन्दति। सर्वं एव सतीच्छायां देवीमिव मन्यन्ते। किन्तु तस्यां कदर्थामुक्तिं निशम्य मर्मान्तर्निपीड़िता सरोषं जया व्यक्तमाह—

अयि राजवधु ! अहो अबलायां तस्यां बालिकायां कुत्सामीदृशी-मारोपयितुं नार्हसि। न खलु सर्वेषां मनस्तुल्यरूपं जानीथाः। तच्छ्रुत्वा राजवधूर्गर्जतीव वंभन्यते अरे पापीयसि जये ! याहि तां दुश्चारिणीं मद्वाक्याद्ब्रूहि। सा केनाधिकारेण मद्गृहमधिवसति ? तूर्णमस्मान्निर्यातु इति।

वृद्धा जया दासी रुदती उद्याने महाराजाय वधूवृत्तान्तं सर्वं विवृणोति। तच्छ्रुत्वा स राजा मनसि विरज्य क्रोधं संवृत्य च धीरं कथयति जये ! तदर्थं दुःखं मा कृथाः। सा बुद्धिहीना तथा जगाद। तामहं शास्मि। अहो ईदृशी सुशीला बाला क्वापि न क्वापि दृष्टा। दरिद्रावस्थामतीत्यापि सतीच्छाया अधुनापि अविकृतैवास्ते।

जयया तथा विधामसम्भवपरामुक्तिं निशम्य सतीच्छाया लज्जया नम्रमुखीभूय ततो गच्छति।

मध्याह्ने राजा भोक्तुमुपविशति। तदा छाया तालवृन्तमादाय राजानं वेजितुं प्रवर्त्तते। राजा धीरभावेन वधूमाभाष्य कथयति अयि वत्से वधूमातः ! त्वं बुद्धिमती भूत्वा किमित्यसम्बद्धप्रलापमिव छायायां कटूक्तिं विधत्से ? छाया तव पुत्रीव भक्तिं सेवाञ्च विदधाति। तवाप्यस्यां स्नेहः कर्त्तुमुचितः। तच्छ्रुत्वा कोपना राजवधूर्निर्लज्जेव कथयति। मया स्वरूपं कथितं, का नाम गृहस्थयुवतिः सर्वदा पुरुषेण

सार्द्धं विहरति ? प्रातः सायं रात्रौ च इयं त्वया सार्द्धं निर्जने तिष्ठति। तच्छ्रुत्वा बालिका लज्जया क्रोधेन च रक्तमुखी ततो निर्गच्छति।

वृद्धराजः कथमपि मनसो वेगं निगृह्य संरुध्य च क्रोधं कथयति। अयि वत्से! नास्ते किन्ते चक्षुषि लज्जावरणम् ? अहन्तु प्राचीनस्तव श्वशुरस्य। छाया तु पौत्रीतुल्या बालिका, कथमिव तव जिह्वाया ईदृशं जुगुप्सितं वच उद्गिरति हा धिक् ? हा धिक् ?।

ईर्षा कषायितमना पुत्रवधूः कथयति "बाढ़ं यथा चतुर्दशवर्षीया युवत्यपि बालिका। तथा भवानपि षष्टीवर्षवया अपि अशीति परप्राचीन इति। राजा लघीयस्या वध्वाः सार्द्धमधरोत्तरमनुचितमिति निश्चित्य क्रोधं निगृह्य च वहिर्वाटीं प्रतिष्ठते। स चिन्तयति ईदृशी नीचमनस्का पुत्रवधूरयमेव मे अपमानः, किन्तु किं विधास्यामि नापरा कापि, सुषेयम्।

अपराह्णे सतीच्छाया विमर्षभावा निजकक्षे उपविशति। तदा राजा तत्र प्रविश्य उपविश्य च खट्टिकायां सान्त्वयित्वा कथयति— अयिच्छाये! दुर्जनवचनात् सती असती न भवति, त्वमसि बालिका तेन तदर्थं दूयसे। त्वन्तु इतः खल्वास्मदं भवानीपुरस्थं भवनं गन्तुमिच्छसि, किन्तु तथा सति ममातीव दुःखं भवेत्। अद्य कियन्ति दिनानि यावत् यतीन्द्रो नात्रागच्छति। तत्र तस्य पितामहस्य पीड़ैव कारणम्। तस्मिन्नागते तव शुभपाणिग्रहणवार्त्तां करिष्यामि। ततो निष्पाद्य युवयोः पाणिग्रहणमहं सुखी स्याम्। तच्छ्रुत्वा छायालज्जया नम्रमुखी भवति। राजा च समीरणसेवार्थं वहिर्गच्छति।

तदा निर्गच्छति महाराजे तत्र अतुलकर उपतिष्ठते। छाया मप्रसन्नमुखीमालोक्य कथयति अयिच्छाये! किमिति म्लानमुखी दृश्यसे। सा कथयति राजवधूः मां प्रति जुगुप्सितं व्यवहरति। अत इच्छामि कियन्ति दिनानि राज्ञालक्षिता कापि निवसामि। किन्तु भवानीपुरे न यास्यामि तत्र गतायां महाराजो यदि तत्र सर्वदा

मत्स्नेहपरवशः यात्यायाति च। तदा राजवधूः समधिकं कुत्सां विधास्यति। अतः क्व यास्यामीति चिन्तयामि। तदाकर्ण्य मन्दप्रकृतिरतुलकरः मनसि प्रहृष्टः कथयति एवञ्चेत्तवेच्छा तदा श्रीमतः शैलेश्वरचिकित्सकस्य भवने यातु। स तु तव परिचितस्तस्य भार्य्यापि परमसाध्वी, तस्य द्वावेवाल्पवयस्कौ बालकौ नास्त्यपरः कोऽपि तत्र। जयादास्यापि तदेव मतमनुमोदितं छायापि तत्र सम्मता। तेन च घोटकशकटमेकमानाय्य कमपि किञ्चिन्नोक्ता द्रुतं शैलेश्वरचिकित्सकभवनं गच्छति।

चिकित्सकस्य शैलेश्वरस्य स्त्री महासम्मानं सूचयन्ती छायां स्वगृहं प्रवेशयति। तदानीं शैलेश्वरः स्वगृहे नासीत्। रात्रौ स आगत्य पत्नीसकाशात् सर्वं छायावृत्तान्तं शृणोति। परेद्युः सविनयं शैलेश्वरः कथयति, भद्रेतत् भवती स्वगृहमेतद्भवनं जानातु। यदा अनुमंस्यते। तदा सह भार्य्यया अहं भवानीपुरे भवतीं नीत्वा स्वगृहे स्थापयिष्यामि। अहो राजवधूस्तु अतीव नीचाशया ईर्षावशगा "विमले कलङ्कम्" पातयति।

तत्र भवने सर्वोत्तमं भवनं छायाया वासार्थं निर्णीतम्। चिकित्सकस्य एका एकादशवर्षीया बालिका छायायाः सहचारिणी छात्री भवति। महाराजो मनोमोहनः सायन्तनात् परं भवनमागत्य शृणोति सतीच्छाया क्व गतेति। द्रुतमेव भवानीपुरमनुसन्दधाति। किन्तु सा तत्र नास्तीति। राजा अतीव चिन्तासागरे पतति। पुत्रवधूं प्रति च निरतिशयामश्रद्धामास्थापयति।

परेद्युः यतीन्द्रः समागतः। एवं छायावृत्तान्तं निशम्य नितान्तं निर्विण्णश्चिन्तयति। अहो एतदेव लोकैः कथ्यते "विमले कलङ्कः" इति। यतीन्द्रः राजा च सहोपविश्य छायामनुसन्धातुं विस्मरन्ति। उभयोरेव यातनया पीड़ितं मनः अक्षीणि च वाष्पपूर्णानि इति।

इति नवमः परिच्छेदः समाप्तः। (क्रमशः)

# धर्मविवेकः ।

## ( तत्र म्लेच्छजातिविवरणम् )

( पूर्वप्रकाशितात्परम् )

वामापदः समागत्य शिवरामं प्रणम्याग्रे स्थितः ।

शिव । वत्स ! एहि एहि इतो निषीद, अपिकुशली त्वं ।

वामा । श्रीचरणप्रसादात् सर्वं नः कुशलम् ।

शिव । वत्स ! आँ स्मरसि वैशाखमासि कियानुक्तो धर्मविवेकः ।

वामा । आँ स्मरामि म्लेच्छानामाचारो धर्मस्य विवरितुमुपक्रान्तः ।

शिव । आँ स्मरामि, साधु वामापद ! अधुना किं श्रोतुमतः परमिच्छसि ।

वामा । अधुनैतदेकं श्रोतुमस्मि कौतूहली— के ते म्लेच्छाः कतिविधा वा ? को वा तेषामुत्पत्तिकालः ? को वा प्रकारस्तेषामुत्पत्तौ ? कथं वा ते आर्य्य विपरीतमाचरन्ति ? तेषां धर्मः प्राचीनोऽर्वाचीनो वा ? इति सम्यक् यथाशास्त्रमाकर्णयामि पूज्यपादाद्भवतः ।

शिव । के ते म्लेच्छा इति श्रूयताम्—यदाह बौधायनः—

"गोमांसखादको यस्तु विरुद्धं बहु भाषते । सर्वाचारविहीनो यो म्लेच्छ इत्यभिधीयते ॥"

तत्र पञ्चधा म्लेच्छाः श्रूयन्ते। यथा मत्स्यपुराणे १०माध्याये ३—८ सूत उवाच ।

"वंशे स्वायम्भुवस्यासीदङ्गो नाम प्रजापतिः। मृत्योस्तु दुहिता तेन परिणीतातिदुर्मुखी ॥

सुतीर्था नाम तस्यास्तु वेनो नाम सुतः पुरा। अधर्मनिरतः कामी बलवान् वसुधाधिपः ॥

लोकोऽप्यधर्मकृज्जातः परभार्य्यापहारकः। धर्माचारप्रसिद्ध्यर्थं जगतोऽस्य महर्षिभिः ॥

अनुनीतोऽपि न ददावनुज्ञां स यदा ततः। ममन्थुर्ब्राह्मणास्तस्य बलाद्देहमकल्मषाः ॥

तत्कायान्मथ्यमानात्तु निपेतुर्म्लेच्छजातयः। शरीरे मातुरंशेन कृष्णाञ्जनसमप्रभाः ॥" इति

अपरे च म्लेच्छा वशिष्ठस्य शवलाया नाम धेन्वा जाताः। यदा क्षत्रियो राजा विश्वामित्रो दातुमनिच्छन्तं वशिष्ठमनादृत्य बलेन धेनुमाक्रष्टुमारब्धवान्। तदा सा तस्य हस्तादाच्छिद्य वशिष्ठसकासमागत्य लब्धानुज्ञा म्लेच्छान् ससर्ज तं युद्धेन पराजेतुम्। यथा वाल्मीकिरामायणे। १। ५५। १—७। *

"ततस्तानाकुलान् दृष्ट्वा विश्वामित्रास्त्रमोहितान्।
वशिष्ठश्चोदयामास कामधुक् सृज योगतः॥
तस्या हुङ्कारतो जाताः काम्बोजा रविसन्निभाः।
ऊधसस्त्वथ सम्भूता बर्बराः शस्त्रपाणयः॥
योनिदेशाच्च यवनाः शकृद्देशाच्छकाः स्मृताः।
रोमकूपेषु म्लेच्छाश्च हारीताः सकिरातकाः॥
तैस्तु निषूदितं सर्वं विश्वामित्रस्य तत्क्षणात्।
सपदातिगजं साश्वं सरथं रघुनन्दन!॥"

तथा महाभारते १। १७६। ३५—३७।

"असृजत् पह्लवान् पुच्छात् प्रस्रावाद्द्राविड़ान् शकान्।
योनिदेशाच्च यवनान् शकृतः शवरान् बहून्॥
मूत्रतश्चासृजत् काञ्चीञ्छरभांश्चैव पार्श्वतः।
पौण्ड्रान् किरातान् यवनान् सिंहलान् बर्बरान् खशान्॥
चिबुकांश्च पुलिन्दांश्च चीनान् हूनान् सकेरलान्।
ससर्ज फेनतः सा गौर्म्लेच्छान् बहुविधानपि॥

अपरे च म्लेच्छा हैहयवंशीयराजा मत्पितृपरिभावका इति रोषाविष्टेन सगरेण स्वधर्मतश्च्याविता म्लेच्छत्वञ्च प्रापिता इति। तथाच विष्णु पुराणे ४। ३। १५—२१।

"परितुष्टेन च विश्वामित्रेण सशरीरः स्वर्गमारोपितः (त्रिशङ्कुरित्यधिकृतः)। त्रिशङ्कोर्हरिश्चन्द्रः। तस्माद्रोहिताश्वः। ततश्च हरितः। हरिताच्चञ्चुः। चञ्चोर्विजयसुदेवौ। रुरुको विजयात्। रुरुकस्य च वृकः सुतो बाहुः। योऽसौ हैहयतालजङ्घादिभिरवजितोऽन्तर्वत्न्या महिष्या सह वनं प्रविवेश। १५।

तस्याश्च सपत्न्या गर्भस्तम्भनाय गरो दत्तः। तेनास्या गर्भः सप्तवर्षाणि जठर एव तस्थौ। स च बाहुर्वृद्धभावादौर्वाश्रमसमीपे ममार। १६।

सा तस्य भार्या चितां कृत्वा तमारोप्यानुमरणकृतनिश्चयाभूत्। अथैनामतीतानागतवर्त्तमानकालवेदी भगवानौर्वः स्वाश्रमान्निर्यायाब्रवीत्। अलमेतेनासद्ग्रहेण। अखिलभूमण्डलपतिरतिवीर्यपराक्रमोऽनेकयज्ञकृदरातिपक्षक्षयकर्त्ता तवोदरे चक्रवर्त्ती तिष्ठति। नैवं नैवं साहसाध्यवसायिनी भवती भवतु। इत्युक्ता सा च तस्मादनुमरणनिर्बन्धाद्विरराम। १७।

तेनैव भगवता स्वाश्रममानीयत। कतिपयदिनान्तरे च सहैव तेन गरेणातितेजस्वी बालको जज्ञे। तस्यौर्वो जातकर्मादिकां क्रियां निष्पाद्य "सगर" इति नाम चकार। कृतोपनयनञ्चैनमौर्वो वेदान् शास्त्राण्यशेषाणि अस्त्रञ्चाग्नेयं भार्गवाख्यमध्यापयामास। उत्पन्नबुद्धिश्च मातरमपृच्छत्। अम्ब! किमत्र वयम्? क्व वा तातः?। तातोऽस्माकं कः? इत्येवमादि पृच्छतस्तन्माता सर्वमवोचत्। ततः पितृराज्यहरणामर्षितो हैहय-तालजङ्घादिवधाय प्रतिज्ञामकरोत्। प्रायशश्च हैहयान् जघान। शक यवन काम्बोज-पारद पह्लवा हन्यमानास्तत्कुलगुरुं वशिष्ठं शरणं ययुः। १८।

अथैतान् वशिष्ठो जीवन्मृतकान् कृत्वा सगरमाह वत्स! अलमेभिरतिजीवन्मृतकै-रनुसृतैः। १९।

एते च मयैव त्वत्प्रतिज्ञापरिपालनाय निजधर्मं द्विजसङ्गपरित्यागं कारिताः।२०।

स तथेति तद्गुरुवचनमभिनन्द्य तेषां वेशान्यत्वमकारयत्। यवनान् मुण्डितशिरसः। अर्द्धमुण्डान् शकान्। प्रलम्बकेशान् पारदान्। पह्लवांश्च श्मश्रुधरान्। निःस्वाध्याय वषट्कारान् एतानन्यांश्च क्षत्रियांश्चकार। ते च निजधर्मपरित्यागाद् ब्राह्मणैश्च परित्यक्ता म्लेच्छतां ययुः। सगरोऽपि स्वमधिष्ठानमागम्य अस्खलितचक्रः सप्तद्वीपवतीमिमामुर्वीं प्रशशास। २१।

### तथा च प्रायश्चित्ततत्त्वधृतहरिवंशे १४। १५—१९।

सगरस्तां प्रतिज्ञाञ्च गुरोर्वाक्यं निशम्य च। धर्मं जघान तेषां वै वेशान्यत्वं चकार ह॥
अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत्। यवनानां शिरः सर्वं काम्बोजानान्तथैव च॥
पारदामुक्तकेशाश्च पह्लवाः श्मश्रुधारिणः। निःस्वाध्याय वषट्काराः कृतास्तेन महात्मना॥
शका यवनकाम्बोजाः पारदाः पह्लवास्तथा। कोलसर्पाः समहिषा दार्वाश्चोलाः सकेरलाः॥
सर्वे ते क्षत्रियास्तात! धर्मस्तेषां निराकृतः। वशिष्ठवचनाद्राजन् सगरेण महात्मना॥

शकानां शकदेशोद्भवानां क्षत्रियाणां एवं यवनादीनामपि यवनादि देशवासिनामिति ज्ञातव्यम्।

म्लेच्छाश्च यवनास्ते च मोसलमानेङ्गराजा दयः। किन्तु मत्स्य-पुराणे यवनम्लेच्छयोर्जात्या पृथङ् निर्देशो दृश्यते। यथा मत्स्य-पुराणे ३४ अध्याये।

"यदोस्तु जाता यदवस्तुर्वसोर्यवनाः सुताः।
द्रुह्योस्तु तनया भोजा अनोस्तु म्लेच्छजातयः।
पुरोस्तु पौरवो वंशो यत्र जातोऽसि पार्थिव॥"　　(क्रमशः)

---

## तत्त्वप्रपञ्चः ।

( पूर्वप्रकाशितात्परः । )

अथ बुद्धं प्रकृतेरेव बन्धमोक्षादिकम् । केवलं सान्निध्यात् पुरुषे उपचरितमिति च । किन्तु केन साधनेन प्रकृतिः संसरति बध्यते मुच्यते च ? । उच्यते—धर्मेणाधर्मेण ऐश्वर्य्यानैश्वर्य्येण, वैराग्येणावैराग्येण अज्ञानेन चैभिः सप्तभीरूपैः प्रकृतिः कोषकारकीटवत् स्वयं संसरति स्वां दुःखेन बध्नाति च । यथा कोषकारकीटः स्वनिर्मितेन कोषेण आत्मानं बध्नाति । कश्चिच्च कीटः स्वं बन्धदुःखिनं मत्वा कर्त्तित्वा च कोषं निष्क्रामति तथा । केवलमेकेन तत्त्वज्ञानेन विवेकबुद्ध्या पुंप्रकृत्योर्भेदप्रत्ययरूपेण स्वां मोचयति न पुनर्भोगापवर्गौ करोतीति । तथा च सांख्यसूत्रम् ।

"रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोषकारवद्विमोचयत्येकरूपेण" ३ । ७३ ।

एतदेवाह ईश्वरकृष्णः ;—

"रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।<br>सैव च पुरुषार्थं प्रति, विमोचयत्येकरूपेण ॥"

अथ ईदृशे विवेकज्ञाने समुत्पन्ने किं स्यात् ? दीर्घकालनैरन्तर्य्यादरसेवितात् तस्मात् पुंप्रकृतिविवेको जायते । न तत्र संशयलेशोऽपि । न तत्र विपरीतगन्धोऽपि । केवलं विशुद्धं ज्ञानमुत्पद्यते । इयमेव ज्ञानस्य विशुद्धिः अहो अहं सर्वथा निष्क्रियः—नाहमध्यवस्यामि । नाहं सङ्कल्पयामि । नाहमालोचयामि । अतो नास्ति मे कापि आभ्यन्तरीणा क्रिया । अहो नाहं शृणोमि । नाहं स्पृशामि । नाहं पश्यामि । नाहं स्वदे । नाहं जिघ्रामि । नाहं वच्मि । नाहं गृह्णामि । नाहं गच्छामि । नाहं मलमुत्सृजामि । नाहं मूत्रयामि इति नाहं कर्त्ता । अतएव न मम किञ्चित् सत्त्वास्पदीभूतमस्ति । एवं रूपे ज्ञाते न तस्य किञ्चिदपि ज्ञातव्यमवशिष्यते । येन तद्विषयमज्ञानं जन्तून् पुनर्बन्धयिष्यति । तथा च सांख्यसूत्रम् ।३।७५।

तत्त्वाभ्यासान्नेति नेतीति त्यागविवेकसिद्धिः ॥

तथा च श्रुतिः।

"अथात आदेशो नेति नेति न ह्येतदस्मादिति नेत्यन्यत् परमस्ति स एष आत्मा"।

एतदेवाह ईश्वरकृष्णः ;—

"एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।
अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्॥"

तथाच विज्ञान भिक्षुः।३।७५ सूत्रे। 

अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्। चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः॥
जराशोकसमाविष्टं रोगायतनमातुरम्। रजस्वलमसन्निष्ठं भूतावासमिमंत्यजेत्॥
नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा। तथात्यजन्निमं देहं कृच्छ्राद्ग्राहाद्विमुच्यते॥

अथ एवं विशुद्धज्ञानात् परं किं सिध्यति? सत्यं प्रकृतिरेवं निसर्गवती यत् प्रथमं भोगं प्रसूते शेषे च मोक्षमिति। किन्तु विवेके साक्षात्कृते न किञ्चित् प्रसोतव्यमवशिष्यते यत् प्रसोष्यते। यतः तत्त्वज्ञानात् पूर्वमेव धर्माधर्मज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि प्रभवन्ति अतत्त्वज्ञानमूलानि। किन्तु तत्त्वज्ञाने जाते तद्विरोधि अतत्त्वज्ञानं प्रलीयते इति कारणनाशादेव धर्मादयो नोत्पद्यन्ते। ततश्च निष्क्रियः पुरुषः रजस्तमोवृत्तिकलुषया बुद्ध्या अप्रतिविम्बितः उदासीनवत् सात्त्विक्या बुद्ध्या ईषन्मिलितः सन् प्रकृतिं पश्यति। एतदेवाह ईश्वरकृष्णः ;—

"तेन निवृत्तिप्रसवामर्थवशात् सप्तरूपविनिवृत्ताम्।
प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः सुस्थः॥"

अथ पश्यतु उदासीनवत् पुरुषः प्रकृतिम्। किन्तु प्रागेतत् पुनःपुनः सिद्धान्तितं यत् प्रकृतिपुरुषयोः संयोगकृतः सर्ग इति। योग्यता च संयोगः। तत्र भोक्तृयोगता पुरुषस्य चैतन्यम्। भोग्य योग्यता च प्रकृतेर्जड़त्वं विषयत्वञ्च। न चैतयोर्योग्यतयोरस्ति कदापि निवृत्तिः। नैतदाशङ्कनीयं—यत्तदा कर्त्तव्याभावाद्योग्यतयो र्निवृत्ति-रिति। नैवम् एकजातीयकरणीयाभावादपि अन्यजातीयस्य

तदानीमपि कर्त्तव्यत्वात्। यथा श्रोतव्यो वीणाशब्दः श्रुतः सन् निवृत्तोऽपि शुशिरशब्दः श्रोतव्योऽवशिष्यत इति।

अपि च प्रकृतिपुरुषौ द्वावेव विभू—परममहत्परिमाणौ। मुक्त्यवस्थायामपि तयोः संयोगोऽपरिहार्य्यः। एवञ्चेत् तयोः संयोगकृतः सर्गोऽपि न निवर्त्तताम्। मैवं न खलु संयोगमात्रादेव सर्गप्रवृत्तिः। किन्तु सिसृक्षया क्षुब्धयोस्तयोः संयोगात् सर्गः प्रवर्त्तते।

यथा स्त्रीपुरुषयोर्गात्रसंयोगमात्रादेव न सन्तानोत्पत्तिः। परन्तु पुत्रेच्छया यथाकालं संयोगविशेषात्। एवमत्रापि। तथा भवतु प्रकृतिर्विभ्वी पुरुषोऽपि विभुः, तयोः संयोगोऽपि नित्यः स्यात्, किन्तु उदासीत्वेन तयोः संयोगे नास्ति संसारसम्भावना। भोग्यभोगसम्भावना च। सुतरां विवेके जाते उपेक्षित्वादेव सिसृक्षया संयोगाभावान्मुक्तिर्युक्तिसिद्धा। एतदेवाह ईश्वरकृष्णः।

"दृष्टामयेत्युपेक्षक एको दृष्टाहमित्युपरमत्यन्या।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य॥"

## प्रकृतौ प्रकीर्णानि।

सत्त्वं रजस्तम इति एषैव प्रकृतिः सदा।
एषैव संसृतिर्जन्तोरस्याः पारे परं पदम्॥

शब्दस्पर्शविहीनं तद्रूपादिभिरसंयुतम्।
त्रिगुणं तद्‌ जगद्योनिरनादिप्रभवाप्ययम्॥ विष्णुपुराणम्।१।२।२०

अविद्यामाहुरव्यक्तं सर्गप्रलयधर्म्मिणम्।
सर्गप्रलयनिर्मुक्तं विद्यां वै पञ्चविंशकम्॥

सत्त्वं रजस्तम इति प्राकृतन्तु गुणत्रयम्।
एतन्मायी च प्रकृतिर्माया या वैष्णवी श्रुता॥

अथ "मूले मूलाभावादमूलं मूल" (१।६७) मिति सांख्यसूत्रादिभिः प्रकृतिर्नित्येति तूर्य्येणोद्घोषिता। अत्रेयमाशङ्का जागर्त्ति।

"तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम!" इत्यादि पुराणादिवाक्यात् प्रकृतेरपि पुरुषादुत्पत्तिः श्रूयते ततः कथं तस्या नित्यत्वसिद्धिः।

एवं "नित्यशुद्धबुद्धमुक्तस्वभावस्य न तद्योगस्तद्योगादृत" १। १९। इत्यादिना पुरुषस्य नित्यत्वं सिद्धान्तितम्। तदपि।

यतः प्रधानपुरुषौ यतश्चैतच्चराचरम्।
कारणं सकलस्यास्य स नो विष्णुः प्रसीदतु ॥"

इत्यादि पुराणवाक्याद्बाहन्यते। सत्यं सर्गारम्भकसंयोगविशेषोत्पत्तौ तयोरुत्पत्तिर्गौणी स्वीक्रीयते। विशेषणोत्पत्त्या विशिष्टस्याप्युत्पत्तिः शास्त्रे निर्णीतत्वात्। यथा अद्यमत्पुत्रो ब्रह्मचारी जातः। ब्रह्मचर्यस्य जातत्वादेव पुत्रस्यापि जातत्वं तथा "तस्मादव्यक्तमुत्पन्नमित्यत्र" अव्यक्तं पुरुषसंयुक्तमुत्पन्नमिति व्याख्येयम्। एवं पुरुषोऽपि ज्ञातव्य इति।

इति तत्त्वप्रपञ्चे प्रकृतिप्रपञ्चो नाम षष्ठाध्यायः समाप्तः।

---

# HELPS
TO
# THE STUDY OF SANSKRIT GRAMMAR AND COMPOSITION.

## CHAPTER I.
## WORDS ( शब्द प्रकरणम् )

In sanskrit words are divided into three classes; *viz.* (*a*) रूढ ( primitive ), (*b*) यौगिक (derivative) and (*c*) योगरूढ (derivo-primitive).

(*a*) रूढ (primitive) words are such as have no known derivation, but have come to signify the intended objects through convention; as घटः ( pitcher ), गौः ( cow ).

पीयूषवर्ष in his चन्द्रालोक defines it thus; "अव्यक्तयोग-निर्योगयोगाभासैस्त्रिवाग्रिमः। (रूढः)। ते च डव्वादि-भूवादि-मण्ड-

पाद्या यथाक्रमम् ॥" so also कुमारभट: "शब्दात्मिका सती रूढ़िर्भवेद् योगापहारिणी। कल्पनीया तु लभते नात्मानं योगवाधत: ॥" Hence प्रकृति प्रत्ययार्थमनपेक्ष्य समुदायशक्त्यार्थवोधके शब्दे। यथा घट:, गौ: &c.

(*b*) यौगिक (derivative) words are such as are derived from other words according to certain canons; as परिणय: (marriage) ; गमनम् (gait) ; भ्रमणम् (walk).

पीयूषवर्ष has also divided यौगिक words into three classes according to the nature of their derivation ; *viz.* शुद्धतन्मूलसम्भिन्नप्रभेदैर्यौगिकस्त्रिधा। तेच भ्रान्तिस्फूरत्कान्ति कौन्तेयादिस्वरूपिण: ॥" Hence प्रकृति प्रत्ययलभ्यार्थवाचके शब्दे।

(*c*) योगरूढ़ ( derivo-primitive ) words are such as are derived, but can not signify any thing other than what they have come to signify through convention ; as, नीरधि: (ocean), पङ्कजम् (water-lily).

योगरूढ़:—अवयवशक्त्या समुदाय शक्त्या च अर्थवोधके पङ्कजादि शब्दादौ। तन्मिश्रोऽन्योन्य सामान्य विशेष परिवर्त्तनात्। नीरधि:, पङ्कजं सौधं सागरो भूरुह: शशी ॥"

---

## SOME SPECIMENS OF PRIMITIVE WORDS. ( रूढ़ शब्दा: )

| *Words.* | *English equivalents.* | *Sanskrit equivalents.* |
|---|---|---|
| अखिल (adj) | whole | सकलम् |
| अङ्गम् | limbs | अवयव: |
| अयस् (neuter) | iron | लौहम् |
| अन्य: (pro. adj.) | other | अपर: |

| *Words.* | *English equivalents.* | *Sanskrit equivalents.* |
|---|---|---|
| आली | female companion | सखी |
| उभ (pronoun, always dual) | both | उभयम् |
| उषा | dawn | कल्यम् |
| एक: (adjective) | one | सजातीयद्वितीयरहित: |
| ओष्ठ: | lip | रदनच्छद: |
| कनकं, हेम (न्) (neuter) | gold | स्वर्णम् |
| कपोल:, गण्ड: | cheek | हनु: |
| कुट्टिम: | pavement | |
| कुश: | kusa grass | दर्भ: |
| घट:, कलस: (ं) | pitcher | |
| घृतम् | clarified butter | हवि: |
| चञ्चु: | beak | कोटि: |
| चमू: | army | सेना |
| जलम् | water | वारि |
| तटम् (:) (तटी) | shore | तीरम् |
| दन्त: | tooth | दशन: |
| निशा, रात्रि: | night | रजनि: |
| पापं कल्मषम् (:) | sin | किल्बिषम् |
| भू: | earth | पृथिवी |
| मण्डप: (ं) | abode | गृहम् |
| मकरन्द: | the honey of flowes. | पुष्पमधु |
| मधु: | spring | वसन्त: |
| मधु | honey | |
| मिथ्या (indeclinable) | lie, untruth | मृषा |

| *Words.* | *English equivalents.* | *Sanskrit equivalents.* |
|---|---|---|
| मुकुरः, | mirror | दर्पणः |
| मणिः | jewel, gem | रत्नम् |
| पटः | cloth | वस्त्रम् |
| मरीचं | pepper | कोलकं |
| मेखला | girdle, belt | काञ्ची |
| धनम् | wealth | द्रविणम् |
| वाष्पः ( ˙ ) | tears | अस्रु |
| काचः | glass | |
| वलभिः, वलभी | roof, thatch | |
| रेणुः (mas & fem) | dust | धूलिः |
| वल्कलम् | bark garment | त्वक् |
| शकलं | bit | खण्डम् |
| सेतुः | bridge | संक्रमः |
| वनम्, विपिनम् | forest | काननम् |
| शशः, ( शशकः ) | hare | |
| शृगालः (fem. शृगाली) | jackal | जम्बुकः |
| सर्वः (pro. adj.) | all, whole | सकलः |
| राका | the full moon day | पूर्णिमा |
| लता,व्रतती,वल्ली,वल्लरी | creeper | लता |
| कुक्षिः | belly | |
| काञ्ची | an ornament for the zone of a woman | मेखला |

(क्रमशः)

श्रीउपेन्द्रनाथरायः।

श्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## मासावतरणिका ।

हा हताः स्म विगताः स्म मृताः स्म, जल्पतीति जनताकुलमुच्चैः ।
दह्यमानतनुकेव समीरैरुष्णघर्म-पयसा शुचिमासे ॥

## उद्भट श्लोकाः ।

भिक्षा क्षीणतमा करीश्वरमुखो लम्बोदरः सादरः
भुङ्क्तेऽसौ भवनोषितः, पशुपते त्वञ्चापि पञ्चाननः ।
भोक्ता शक्तिधरः कुमारनिपुणो वक्त्राणि बिभ्रत्तु षट्
शम्भो किम्भवितेति चिन्तितवती पायादसौ पार्वती ॥२५७॥

गर्वं नोद्वहते न निन्दति परं नो भाषते निष्ठुरं
प्रोक्तं केनचिदप्रियञ्च सहते क्रोधञ्च नालम्बते ।
श्रुत्वा शास्त्रमनेकलक्षणयुतं सन्तिष्ठते मूकवत्
दोषांश्छादयते गुणान् वितनुते पाण्डित्यमष्टागुणम् ॥२५८॥

कविते ! कुजनसमक्षे पतिता मोपतापिनी भूयाः ।
आनन्दयति किमन्धं मृदुगतिरिन्दीवराक्षीणाम् ॥२५९॥

सांसारिकस्य गृहिणी सकलप्रधाना
धर्माविरोधविषयानतिरिक्तचिन्ता ।
गाम्भीर्य्य धैर्य्य-सदसत् परिचिन्तनाढ्या
दक्षापि नैव मुखरा भवने सुखाय ॥२६०॥

(क्रमशः)

श्रीविधुभूषणदेवः (राँचि) ।

# "सत्यमेव उत्तमो धर्मः। *

सत्यं पिता च माता च सखा भ्राता युधिष्ठिर। भोक्ता पालयिता हन्ता सत्यमाहुर्विपश्चितः
सत्येन जायते मुक्तिः सत्यात्पापचयो भवेत्। सत्येन स्थापिताः पूर्वं चन्द्रसूर्यादयो ग्रहाः॥
बहुविद्याप्रदं नित्यं बहुकीर्त्तिप्रदं शुभम्।
पापघ्नं दुःखनाशञ्च सत्यं तस्माद्वदेत्सुधीः॥ श्रुतिरपि

सत्यं परं परगँसत्यं, सत्येनँ न सुवर्गाल्लोकाच्च्यवन्ते कदाचन, सतां हि सत्यं तस्माँत्सत्ये रमन्ते। तथा च—

## भारतीया कथा।

सुमतिर्नाम विप्रेन्द्रो वेदवेदाङ्गपारगः। व्याघ्रस्य काञ्चनाच्चस्य सत्यमुक्त्वा दिवं गतः॥

अस्ति कश्चित् कावेर्याः सरितः तटे शङ्खतीर्थन्नाम अरण्यविशेषः यक्षगन्धर्वमुनिवृन्दनिषेवितः चम्पकाश्वत्थपुन्नागपनसकपित्थचूतविल्व-कदलीजम्बुनिम्बैः अन्यैः वृक्षषण्डैश्च मण्डितः मयूरपरभृच्चक्र-वाकैः पक्षिगणैश्च शोभितः। तत्र सुमतिर्नाम विप्रश्रेष्ठः वेदवेदाङ्ग-पारगः साक्षात् पितामह इव शिष्यप्रशिष्यसहितः कांश्चित् वेद-मध्यापयन् कतिपयान् व्याकरणादिकं वेदाङ्गं बोधयन् आस्तेस्म। स एकदा शिष्यैः परिवृतः अविशत् कन्दमूलफलान्याहर्तुं वनम्। आहूय च सर्वान् शिष्यान् अब्रवीत् एकैकं प्रति हे शिष्याः मद्वचः शृण्वन्तु यदर्थं वयमागताः। कन्दमूलफलान्येतानि ममान्तिकं आनयध्वम्। आहरिष्ये च अत्र समित्पुष्पं कुशानपि। युष्माकं व्याघ्र-चोरादिहिंस्रमृगभयं माभूत्। इत्यनुगृह्य सर्वान् तान् महातेजाः सः पर्यचोदयत्। पश्यंश्च विचित्राणि वनानि एक एव अचरत्। विषो-ल्बणैः महासर्पैः वृकजम्बुकऋक्षव्याघ्रसमूहैः भयङ्करैः तन्नादैश्च भय-ङ्करं तद्वनं दृष्ट्वा सर्वगतं नारायणं ध्यायन्नेव विचचार। एतस्मि-

---

* विगते तु मासे या SANSKRIT JOURNAL. पत्रिकास्माभिः समालोचिता तस्या निदर्शनमेकमत्राख्यायताम्।

न्तरे मूर्खः मांसलोलुपः एकः व्याघ्रः उड्डीय उड्डीय वेगेन द्विजस्य निकटमागतः। वनवैचित्र्यदर्शनेन विस्मयाविष्टहृदयः दिशो दश विलोकयन् स्थितो ब्राह्मणः आयान्तं व्याघ्रं दृष्ट्वा अपसर्तुमुपचक्रमे। गच्छन्तं ब्राह्मणं प्रेक्ष्य विनिहत्य लांगूलं समुल्लिखंश्च पृथिवीं पद्भ्यां दक्षिणभुजं जग्राह। हन्तुं कृतमतिं रक्ताक्षं दीर्घलांगूलं दीर्घदंष्ट्रं ब्राह्मणः गतभीः आह। भो भो साधो निरागसं मां वृथा त्वं हनिष्यसि। ते मया किमपराद्धं वदस्व तत्। लोके कृतापराधानामेव शिक्षां कुर्वन्ति भूमिपाः। हे सौम्य दुर्जना अपि अपापिनं वृथा न हिंसन्ति। अस्मिन् जन्मनि मया कस्यापि विप्रियं न कृतम्। पूर्वस्मिन् जन्मनि अस्ति चेत् तद्वद। हे मांसलोलुप कन्दमूलफलाहारैः जीवन्तं निर्मांसं मां वृथा बाधसे। परपीड़ापरायणम् असत्यवादिनं देवब्राह्मणनिन्दकं गुरुनिन्दापरं दारधर्मविक्रयिणं पञ्चमहायज्ञविहीनं प्रातःस्नानविवर्जितं जपोपासनहीनं सन्ध्यावन्दनत्यागिनं राक्षसाः पिशाचाः त्वादृशा अपि बाधन्ते। शुचिं गोविन्दभक्तं अधुना मां वृथा बाधसे। शुष्केण अनेन शरीरेण किं भवेत्तव प्रयोजनम्।" इति सत्यं वदतः ब्राह्मणस्य वचनं निशम्य घोरो व्याघ्रः उवाच। हे विप्रशार्दूल क्षुधितस्य मे वचः शृणुष्व। अस्थि वा त्वचं वा त्वत्कलेवरं भक्षिष्ये। उक्तञ्च—

> महापापानि कृत्वापि परपीडामथापि वा।
> आत्मा संरक्षणीयो हि सर्वथा सर्वदेहिनाम्॥" इति

एतद्वचनं घोरं निशम्य प्रहसन् निर्भयः ब्राह्मण आह—"मम समूत्रमलौघैः श्लेष्मराशिभिः पित्तास्थिनिचयैः पूरितम् अनित्यं दुर्गन्धपरिचर्चितम् अस्वतन्त्रम् एतत् शरीरम्। प्रयोजनविहीनेन शुष्कास्थिनिचयेन मे कलेवरेण तव तृप्तिः यदि भवेत् मत्तः भुवि को वा अधिकः कृतार्थोऽस्ति। ददाम्यात्मानमहं ते। भगवान् सर्वसाक्षी मम प्रियं चकार। परं तु मद्वाक्यं श्रूयताम्। ममाश्रमपदं गत्वा तवान्तिकमागमिष्ये। इति—

व्याघ्रः—"बान्धवैः विप्रकृष्टस्य मृत्युवक्त्रगतस्य तव आश्रमे किमस्ति कार्य्यम्" इति। सुमतिराह—अग्निहोत्रगृहगतान् गार्हपत्यादग्नीन् आत्मनि समारोप्य शिष्यान् सुतान् दारांश्च धर्मं बोधयित्वा आगमिष्ये" इति। व्याघ्रो ब्रूते—"अहं जठराग्निना तप्ये भूयः। अनागतो यदि किङ्करवाणि। उपायं वद।" ब्राह्मणः—"ते शपथं करोमि येन तव चित्तं सुनिश्चितं भवेत्। संप्रति ब्रवीमि शृणु। मातृहा पितृहा ब्रह्महा स्तेयी गुरुतल्पगः मद्यपायी गोहन्ता परदारपरद्रव्यपरक्षेत्राणाम् अपहर्त्ता विश्वासघातकः दीनानां दुःखदः असत्यवादी पिशुनः गरदः अग्निदः हव्यकव्यविहीनः एते यां गतिं प्राप्नुवन्ति अनागतश्चेत् तां गतिं प्राप्नुयाम्।" एवं सत्ययुक्तां वाचं निशम्य व्याघ्रः द्विजवरं नमस्कृत्य "स्वमाश्रमपदं गत्वा पुनरागच्छ। मम प्राणान् रक्ष। नमोऽस्तु ते।" इत्यब्रवीत्। ब्राह्मणः स्वदक्षिणकरं व्याघ्रस्य मूर्ध्नि दत्त्वा माभैषीरित्युक्त्वा स्वाश्रमं ययौ। सर्वलोकेशं सृष्टिस्थित्यन्तकारिणं सर्वान्तर्यामिणं वासुदेवं ध्यायन् पौरुषं सूक्तं जपन् गत्वा आश्रमस्थान् शिष्यान् पुत्रान् भार्य्यां चाहूय इदं वचनमब्रवीत्।

शृण्वन्तु मद्वचः पुत्राः सत्यं ब्रूत हितं वचः। वेदे च धर्मशास्त्रे च यो धर्मः प्रोच्यते बुधैः।
तमेव सर्वकालेषु कुरुध्वमविशङ्कया। चराचरात्मकं विश्वं देवतिर्यङ्नरादिकम्॥
विष्णुरूपमिदं विश्वं पश्यध्वं विजितेन्द्रियाः। सर्वधर्ममयं सारं वक्ष्यामि च हिताय वः॥
परदारान् परार्थान् वै स्वप्ने वा न स्मरिष्यथ।

इत्युक्त्वा स ब्राह्मणः अनहंकृतिः अग्निहोत्रगृहमाससाद। भगवन्तं ध्यायन्नेव त्रीनप्यग्नीन् गार्हपत्याहवनीयदक्षिणाख्यान् आत्मनि समारोपयत्। आहूय च स्वकां भार्य्यां पुत्रवतीं साध्वीं प्रियवादिनीं सुमतिरुवाच।

"भो प्रिये शृणु मद्वाक्यं वक्ष्यामि ह्यतिथिप्रिये। पुत्रान् संरक्ष धर्मेण परं श्रेयो भविष्यति॥
धर्मं भजस्व सततं भूतहिंसां समुत्सृज। जहि कामान् स्वदेहस्थान् साधुसङ्गं सदा कुरु॥
हरिमर्चय भद्रं ते सत्यशीला सदा भव। देहेऽस्मिन् बुद्बुदाकारे ममतां त्यज सर्वदा॥"

इति वादिनि सति भर्तरि धर्मिष्ठे भार्या ब्रूते "भगवन् अकाण्डे कथम् एवं धर्मोपदेशः । वेपते मे हृदयम् । सीदन्ति मम गात्राणि । एवं प्रवक्तुं कारणं वद । इति शिरसि अञ्जलिमादाय प्रार्थयमानायां तस्यां "समित्पुष्पकुशार्थं वनं यातस्य मे तनुः क्षुधितस्य व्याघ्रस्य समर्पिता । तन्निमित्तम् एवं वच्मि । तत्सकाशं व्रजाम्यहम् ।" इति ऋषिरवादीत् । एवमुक्ता साध्वी शोककर्शिता हा हतास्मीति भूमौ पपात । सर्वकामेषु निस्पृहः ब्रह्मवित्तमः सः तां समुत्थाप्य अब्रवीत् । हे भीरु अद्य वा अब्दशतान्ते वा प्राणिनां ध्रुवः मृत्युः । तद्विषये चिन्तां माकुरु । मद्वचः श्रूयताम् । कुरु धर्मबुद्धिं सदा । तथा चोक्तम्—

"धर्ममार्गपराणां तु धर्म एव परा गतिः । पतिवाक्यरतानां तु स्त्रीणां मुख्य सुशोभन ॥
धर्मनिष्ठा तपोनिष्ठा सत्यनिष्ठा सदा भव । मदर्थं कुरु कल्याणि यत्किञ्चिद्दै ददामि च ॥"

एवमुक्ता सध्वी ब्राह्मणी तथा करोमीति उटजं विवेश सुतान्विता । तत्र सुप्रक्षालितपादा सर्वदातारं योगिध्येयं पुण्डरीकाक्षं अच्युतं तुष्टाव ।

"लक्ष्मीपते नमस्तुभ्यं सृष्टिस्थित्यन्तकारिणे । चिरकालं ममानन्तसौमङ्गल्यं ददस्वह ॥
अनाथबन्धो देवेश पाहि मां पतिदानतः । त्वत्पादकमलादन्या गतिर्मम न विद्यते ॥
कालात्मन् सर्वभूतात्मन् बालापत्यां तपस्विनीम् । पाहि मां सर्वकार्येषु पतिदानात् प्रजायते
शिष्येषु वा मम सुते कृपा मयि तवास्ति चेत् । सौमङ्गल्यं ददस्व त्वं भूयो भूयो नमोऽस्तु ते ॥"

एवं देवदेवेशं नत्वा स्तुत्वा पुनः पुनः ध्यायन्ती पर्णशालायां गतशोका सा अध्यास्तेस्म । सुमतिस्तु शिष्यैः परिवृतः अतिशीघ्रं गतः व्याघ्रः यत्रास्ते तं देशम् । स्वकान् शिष्यान् दूरे संस्थाप्य गतभीः पौरुषं सूक्तं जपन्नेव व्याघ्रस्य सम्मुखं यायात् । तस्मिन्नवसरे शिष्याः अनेकमन्त्रान् जप्त्वा दिशां पतीन् नमस्कृत्य प्रार्थयामासुः गुरोः आपन्निवृत्तये ।

नमस्तुभ्यं देवराज पाहि लोकपते प्रभो । यज्ञांशदायी भगवानस्मद्गुरुरकल्मषः ॥
वैरस्वत नमस्तुभ्यं धर्मरूप सतां पते । अपमृत्युभयात् पाहि गुरुं नो लोकविश्रुतम् ॥

अपाम्पते नताश्च त्वां पाहि नः परमं गुरुम्। पाहि व्याघ्रभयादस्मात्पाशहस्त महाप्रभो ॥
निर्घोश निस्पृहं शान्तं पाहि नो गुरुमव्ययम्। त्वत्पादं तु वयं सर्वे प्रपन्ना एव सर्वदा।

इति स्तुताः दिक्पतयः देवगन्धर्वयक्षकिन्नरकिंपुरुषैः स्तूयमानाः तं देशमगमन्। पिण्डीकृतां ब्राह्मणस्य तनुं दृष्ट्वा दिवि स्थिताः सर्वे देवाः परमं विस्मयं जग्मुः। ब्राह्मणः "व्याघ्र क्षुधितोऽसि मम तनुः भक्ष्यतां भक्ष्यताम् इति वदन् व्याघ्रं त्वरयामास ब्राह्मणस्य निस्पृहताम्। शरीरे दारापत्यगृहक्षेत्रादिषु वैराग्यं प्राणान् त्यक्त्वापि सत्यवचनपरिपालनश्रद्धां च सर्वे दिवौकसः पर्यालोच्य सर्वशास्त्रविशारदं सुमतिमुद्दिश्य सुत्रामाणं बभाषिरे। "त्रिदिवेश्वर अस्मै व्याघ्राय तृप्तिं प्रयच्छ। धर्मशीलाय ब्राह्मणाय त्रिविष्टप ददस्व।" इति इन्द्रः तथा करोमीत्यभ्युपगम्य सर्वभूतहिते रतं विगतज्वरं ब्राह्मणं समाधाय बभाषे। सुमते ब्राह्मणश्रेष्ठ सत्यप्रतिज्ञा त्वय्येव दृष्टा। ते ददामि स्वर्गम्। तेन सत्येन सुरलोके मया सार्धं विचित्रान् भोगान् भुंक्ष्व। द्रुतं यानमारुह्यताम्।" इति सुमतिः उवाच दिवि स्थितान् देवान् दृष्ट्वा सुविस्मितः। "व्याघ्रस्यापि नाकं ददासि यदि तदा मे तुष्टिः जायेत। नान्यथा दिवं गन्तुं नोत्सहे" इति तद्वचः श्रुत्वा पाकशासन आह "अस्माभिः तव सत्यवचनपरीक्षा कृता। त्वच्छिष्यभार्य्याप्रार्थनापूर्त्यर्थम् आश्रमं गत्वा कञ्चित्कालं वस। व्याघ्रस्त्वन्तर्दधे पश्य। तव पश्चात् दिवं दास्यामीत्युक्त्वा अन्तर्धानमकरोत्। सुमतिरपि आश्रमं प्राप्य भार्य्यायास्तत्सर्वं न्यवेदयत्। शिष्यान् पुत्रांश्च विवाह्य विविधान् भोगान् भुक्त्वा तैस्साकं दिवं गतः।

तस्मात्सत्यं परो धर्मः सत्ये सर्वं प्रतिष्ठितम्। तदेव नाकसोपानं पारावारस्य नौरिव ॥
अविधूयेह पापानि सत्यधर्मरतो नरः। सत्यं सत्यमहं वच्मि सत्यलोके शचीपते ॥"

( SANSKRIT JOURNAL. )

( Pudukota. )

———

# ( श्मशानम् । )

( पूर्वतोऽनुवृत्तम् । )

कङ्कालशेषं जनमितमत्र पश्याशु रे चित्त ! सुतीव्र दृष्ट्या ।
दुराशयानेन च कल्पना-खे विनिर्मितं हर्म्यमपूर्णमेव ॥४२॥

पूर्त्तिं गता हे शव ! मर्त्यलीला तवाद्य, दैवस्य नियोगपाशात् ।
अपास्य बन्धून् प्रियरत्नपङ्क्तीः गच्छस्यतीतन्त्वपि कल्पनायाः ॥४३॥

पत्न्यार्त्तनादः, करुणं सुतानां सुरोदनं, मित्रगणस्य तीव्रः ।
हा हा ध्वनिः, शत्रुगणस्य हास्यं नार्हन्ति गन्तुन्तव कर्णयुग्मम् ॥४४॥

यद्वीक्षणान्ते खरदाहमग्निं आयत्तसार्थे स्म किरत्यजस्रम् ।
तदत्र कुत्रास्ति ? पदाभिमानः गतः क्व ? येनासि पुराप्रमत्तः ॥४५॥

अहो ! श्रुतिर्या करुणार्त्तनादश्रुतौ सदासीद् वधिरेव, तस्याम् ।
न याति धूर्त्त-प्रिय-चाटुकारसमादराभाषणमप्यभीष्टम् ॥४६॥

दुष्टस्वरा कर्कशभाषिणी या पपाविवायू रसना वचोभिः ।
समर्थिनां, सा क्व गताद्य ? कुत्र बाहू परापीड़नदीक्षितौ वा ? ॥४७॥

अहो ! क्व पादौ तव ताविदानीं ? अनारतं यौ च समाश्रितानाम् ।
उरःसु पृष्ठेषु शिरःसुतीव्रप्रहारकार्य्येषु ललज्जतुर्नं ॥४८॥

गन्तुं प्रवृत्तोऽसि, शव ! प्रभावादीशस्य सत्यं ; व्रज साधुभावम् ।
त्वं यादृशं कर्म चकर्थ, नूनं तत् तादृशस्यैव फलं लभेथाः ॥४९॥

रे चित्त ! यो ह्यो मधुरं जहास जहर्ष शुश्राव च वन्दि-गीतिम् ।
निहत्य शत्रून् यश आददे च व्यतीतगर्वः स इहैव, पश्य ॥५०॥

रत्नावली-भूषित-रम्यदेहो रूपेण वित्तेन बलेन योऽसौ ।
दृढ़प्रदीप्तो धरणीं प्रशासविरूप-वित्तोऽत्र भुवीह सोऽयम् ॥५१॥

विशुष्कपुष्पं विरुवत्-षड़ङ्घ्रिः यथा, तथा तुष्टिकरोऽपि मर्त्यः ।
धूलौ शयानं ननु चाटुकारः आप्नोति नैव भ्रमतोऽपि चित्त ! ॥५२॥

सुवर्ण पर्य्यङ्कतले शयानः पर्णालयस्थोऽपि समोऽत्र नूनं ।
विचित्रवस्त्रावृतविग्रहस्य तरुत्वगाच्छन्नतनो स्व साम्यं ॥५३॥

दुर्गन्ध-विभ्रष्ट-कुदृश्यमांस आस्ते त्वभाग्योऽत्र ; विलासनेत्रं।
कटाक्षदृष्टिर्नवरक्तगण्डो रक्ताधरोऽस्याद्य भवन्ति कुत्र ? ॥५४॥
हास्याननो, दुःखमयः, सुभोज्याशनोऽन्नचूर्णानपि नाप्तवांश्च।
दोलां वहन्तोऽत्र निवासिनोऽपि साम्यात्मकेऽस्मिन् समभावभाजः॥५५
पुत्राननं पश्यति सस्मितः स्म यः पुत्र-शोकेन महानधीरः।
यः, सम्पत्तिमान् दीनतमोऽपि यो यः एषां प्रभेदोऽस्ति किमत्र भूमौ?५६
हाहा त्व केयं ? ननु मन्दभाग्या विषादचित्र प्रतिमेव धीरा।
नाथेति दुःखेन सदा वदन्ती कपोलविन्यस्तकरा बभूव ॥५७॥
नितान्त-शान्त-क्षम-धीर पुत्र-शोकादितीयं जननी विषण्णा।
उन्मादिनीवत् करुणार्त्तनादैः पत्रास्तुवृक्षात् किमु पातयेत ? ॥ ५८ ॥
ज्वाला-करालोऽय सुपर्वुधोऽत्र भस्मीकरोत्येव सुनिष्ठुरः सन्।
सौदामिनी-सुन्दरदीप्तिसंघ-प्रदीप्तदेहामपि रूपपङ्क्तिं ॥५९॥
कोऽयं शिशुः ? कस्य कुलाङ्कुरो वा ? अनाथवत् धावति रोदनेन।
मन्ये, ऽस्य बन्धून् बलवान् कृतान्तः काल प्रभावान्नयतीदमेव ॥६०॥
नितान्त रूक्षप्रकृते ! श्मशान ! शोकाम्बुभिः कुर्वत एव पूर्णां।
धरां, कथं त्वं सहसे सुतारं रोरुद्यमानस्य कराहतिं तां ॥६१॥
नवोपयन्तृव्यसनाद्विलुप्त-संज्ञात्र बाला विधवा पपात।
अनाथिका दुर्जनपाप दुष्ट दृष्टेः कथन्त्रातु महो समर्था ॥६२॥
नवीन रम्योज्ज्वलरत्नमाला-विभूषितायाः सरले ललाटे।
हे विश्वबन्धो ! लिखितं कथन्तत् वैधव्यमेवात्र दया न किं स्यात्! ६३
आकर्णतां चित्त ! भयैकहेतुः "हरिध्वनिः" तारतरः क्षणेन।
निनाद एषोऽत्र वतोत्सुकाना-मप्याशु दीर्घायुरपि प्रभुङ्क्ते ॥६४॥
अहो न जाने, मनुजः क एषः निमज्ज्य शोकाम्बुधिवीचिपङ्क्तौ।
अनाथकं बन्धुगणं ; कृतान्त-निदेशतोऽस्मिन् स्वजनै रुपेति ॥६५॥
मृत्यो ! नकिंत्वां करुणा रुणद्धि ? पाषाणसारैः कि मु निर्मितस्त्वं ?
यत्, क्रीड़तस्तं दयितं प्रियायाः पित्रो श्च पुत्रं हरसि क्षणेन ॥६६॥

"विद्या नाम कुरूपरूपमधिकं विद्यातिगुप्तं धनं
विद्या साधुकरी जनप्रियकरी विद्या गुरूणां गुरुः ।
विद्या बन्धुजनार्त्तिनाशनकरी विद्या परं देवता
विद्या राजसु पूजिता च धनिनां विद्याविहीनः पशुः ॥"

गरुड़पुराणे पूर्वखण्डे ११५ अध्याये ८१ ॥

"वरं गर्भस्रावो वरमपि च नैवाभिगमनं
वरं जातप्रेतो वरमपि च कन्याभिजननम् ।
वरं बन्ध्या भार्य्या वरमपि च गर्भेषु वसतिः
न चाविद्वान् रूपद्रविणगुणयुक्तोऽपि तनयः ॥"

भवभूतिः गुणरत्ने ।

---

## गुरुशिष्यसंवादः ।

धर्मात्मा कश्चिदाचार्य्यः गुणवान् लोकभावनः ।
हितप्रेप्सुः सदाचारः स्मेरास्यः सौम्यदर्शनः ॥ १ ॥
किन्त्वभाग्यवशादेव विमुखी वाग्विलासिनी ।
रराज स न तस्मात् तु धनशून्यनरो यथा ॥ २ ॥
इयेष द्रष्टुमौत्सुक्यात् बलीयस्या धनाशया ।
इयाय त्वरितं यत्र स शिष्यो नन्दनन्दनः ॥ ३ ॥
दृष्ट्वा ससम्भ्रमं शिष्यः प्रसन्नः सुमतिव्रतः । *
ननाम शिरसा देवमभ्युत्थान पुरःसरम् ॥ ४ ॥
पप्रच्छ कुशलं तस्य शारीरं मानसं तथा ।
ओमित्येवं वचस्तस्मै निजगाद गुरुस्तदा ॥ ५ ॥
आशिषां राशयः सन्तु प्रोवाच शिष्यमादरात् ।
क्षेमप्रश्नं गुरुस्तस्मिन् चकार हितकाम्यया ॥ ६ ॥

---

* श्लेषः ।

उवास शिष्यगेहे स दिनानि कतिचित् सुखम्।
परस्परं सुखासीन संलापप्रीतिरंहसा ॥ ७ ॥
अनुमेने स शिष्यस्तु बुद्धिमान् सुविवेचकः।
अहो मे खलु दुर्दैवं विद्याहीनो गुरुर्मम ॥ ८ ॥
पप्रच्छैकदिने शिष्यः विनयानतया गिरा।
किं चित्तमोहिनीं बाल्ये विद्यां नार्जितवान् भवान्? ॥९॥
प्रत्युत्तरं ददौ तस्मै सुदुःखेन हृदा स्मरन्।
शृणु वत्स! यतोऽहं वै विद्यां नार्जितवान् पुरा ॥१०॥
पितामहो महाज्ञानी सर्वशास्त्रविशारदः।
शिरोमणिरिति ख्यातः सर्वलोके चराचरे ॥ ११ ॥
पिता च मम तेजस्वी सार्वभौम इति श्रुतः।
विद्यया शोभमानः स रत्नदीपैर्गृहं यथा ॥ १२ ॥
त्रिवेदीति जने ख्यातः वेदवेदान्तपारगः।
सर्वलोकचिदाकर्षी ज्येष्ठभ्राता सहोदरः ॥ १३ ॥
सर्वे वै देवताप्रायाः बुद्धा ते गुरुणा समाः।
अकाले तत्यजुः प्राणान् मम भाग्यस्य विप्लवात् ॥१४॥
गुणी यः खलु संसारे न जीवति चिरं दिनम्।
स्वीयकण्ठे रत्नार्थं गृह्णाति गुणिनं यमः ॥ १५ ॥
स्मारं स्मारं स्मृतिं तेषां माता तच्छोककातरा।
नाध्यापयत मां विद्यां इत्युक्त्वा विरराम सः ॥१६॥
सखेदं दीर्घनिश्वस्य प्रियशिष्यो जगाद सः।
सुष्ठु विचारणं मातुः नेदं तु प्रतिभाति मे ॥ १७ ॥
अस्माद्धि मरणं श्रेयः विद्याहीनात् मृतो वरम्।
वृथैव जीवनं तस्य विद्यां नार्जितवान् यदि ॥ १८ ॥
दिवा यथा विना सूर्य्यं चन्द्रहीना यथा निशा।
सरो यथा विना वारि विद्याहीनो नरस्तथा ॥ १९ ॥

श्रुत्वैवं शिष्यवाक्यं स गुरुः परमशोभनः ।
निर्वेदं प्राप्य मनसि निर्जगाम स्वकं गृहम् ॥ २० ॥
प्रयेते ह्यर्जितुं विद्यां स तृणीकृतजीवनः ।
आनर्ज स शुभां विद्यां सदा परमया मुदा ॥ २१ ॥
ममार स तु नाकाले सर्वलोकप्रपूजितः ।
लेभे स स्वीययत्नात्तु ज्ञानिनामासनं परम् ॥ २२ ॥

श्रीविधुभूषणदेवः (राँचि) ।

---

## अथ रथयात्रा ।

रथांगपाणे रथयात्रयानया (१) वैकुण्ठताऽभूद्बितयस्य सांप्रतम् ।
गिरां कवीनां नववेश्मनोऽस्य च ततश्च चित्रं भुवि साधुनन्दनम्(२)॥१॥

पश्य पद्मापतेः पादपद्मं सद्म महात्मनाम् ।
मनो-मिलिन्दसद्वन्दनमन्दानन्ददं दृशा ॥२॥

पश्य मुदे पदकमलं कमलं कर्तुं न तस्यालम् (३) ।
नाभौ करे च कमलं समलं कुरुते च यः पत्न्याः (४) ॥३॥

पद्मार्पणेन तुष्टो पद्मार्पणेनेव पद्मेशः (५) ।
पद्मेश इव पद्मं (६) लोचनपद्मं प्रकाशयतु ॥ ४ ॥

राधामाधवचरणं कल्याणकारि ।
भजत जना भवभञ्जनबाधाहारि ॥ ५ ॥

वितानतल्पांवरतोरणानि धवित्रछत्रध्वजचामराणि ।
प्रदीपचापास्त्रकरण्डकानि पद्मापतेः पद्ममयानि भान्ति ॥६॥

---

(१) वैकुण्ठता पक्षे वै, कुण्ठता । (२) भुवि महीतले नन्दनं तदाख्यकाननमभूदिति चित्रं पक्षे साधुजनानां नन्दनमानन्दजनकं ततो बभूव । (३) कं जलमिति (४) यः पत्न्या लक्ष्म्याः मुदे पत्नीमिवासे सर्वेषामेव प्रेम भवति इति पद्मसंभवायाः कमलालयायाः स्थानं कमलं नाभौ करे च समलं कुरुते इति भावः । (५) पद्माया रमाया इति । (६) पद्मेशः सूर्य्यः ।

रसविच्छिवेश्वरकृता रसमितरसालसुश्लोकाः।
रसमयरसालकाले रसानुरागिमहन्महस्तुष्ट्यै (७) ॥ ७ ॥
श्रीपं शिवेश्वरशर्म्मा (दरभङ्गा)।

---

## हरिद्वारभ्रमणम्।

अस्त्युत्तरस्मिन् भारते वर्षे महेन्द्र इव देवतानां सुरगज इव दन्तिनां हरिचन्दन इव शाखिनां, सुमेरुरिव पर्वतानां कार्त्तस्वर इव धातूनाम्, अश्वमेध इव क्रतूनां कालिदास इव कवीनां सकलतीर्थ-ललामभूता पुरी हरिद्वारनाम्नी।

पुराणेषु वा तन्त्रेषु काव्येषु वा नाटकेषु जनश्रुतिषु वा इतिहासेषु स्वदेशीयेषु वा वैदेशिकेषु सर्वत्रैवास्या एव पुर्य्याः समं दृश्यते महिमा। किं बहुना एषैव पुरी चतुरुदधिमेखलाया भुवः शीर्षस्थानीयेत्युक्तं बहुषु पुराणेषु।

रत्नानीव जलनिधेरस्या एव पुर्य्याः सन्ति बहवो विभवाः। तेषु सर्वेषु हिमालय-नाम-नगाधिराजः सरिद्वरा गङ्गा मायापुर्य्याद्यभि-धानादि-वरतीर्थानि प्रधानानि। बह्नेव देशान् पावयन्त्यामपि सुर-धुन्यां अस्मिन्नेव पुण्यक्षेत्रे तस्याः समधिकपूतत्वं मनोहारित्वञ्च। तथा चोक्तं पाद्मे—

"सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा। हरिद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥"

गुणवत्त्वेनास्या एव पुर्य्यास्तस्यैव देशस्य तुल्यं नास्त्यन्यदित्युक्तं प्राचीनैस्तद् यथा स्कान्दे।

---

(७) रसमिताः षट्संख्यकश्लोकाः रसविदा शिवेश्वराख्येन रसानुरागिमहन्महस्तुष्ट्यै कृता अवधेयाः। रसा मही तस्यां अनुरागि वाराह च महन्महतेष्ट्ये पक्षे रसेषु गोरसादिषु समनुरागि सहृदयादरकं महन्महस्तुष्ट्यै श्लोकाख्येयाः॥ इति संक्षेपटिप्पणी।

"यथा सर्वेषु देवेषु श्रीशिवः परिकीर्त्तितः। तथायं सर्वदेशेषु हिमवद्देशकः स्मृतः॥
यथा सर्वेषु वेदेषु सामवेदः प्रकीर्त्तितः। तथाऽयं सर्वदेशेषु देशराजो विधीयते॥
यथारण्येषु सर्वेषु नैमिष्यारण्यसंज्ञितम्। तथाऽयं सर्वदेशेषु हिमवद्देश संज्ञितः॥
यथा सर्वशिलानां हि शालग्राम शिला परा। तथा सर्वेषु तीर्थेषु तीर्थराजोऽयमीरितः॥"

तस्मिन्नेव रम्ये प्रदेशे एकदाऽहं पर्य्यटन् समुपाययौ। निशीथेऽहं वाष्पीयशकटमारुह्य हरिद्वाराभिमुखं प्रतस्थे। प्रातरेव यावदुन्निद्रः पश्यामि तावत् वाष्परथाधिकरणपरिचारकैरुच्चारितं हरिद्वारोऽयम् इति वचः वमदिव मधुधारां कर्णकुहरे मे प्रविवेश। शकटादवतीर्य्य पादचारेण कतिपयैर्बन्धुभिः सार्द्धं चलितुमहमारभे। हिमालयात् प्रसृतः "ढाढ्रित्यपरनामा" समीरणः तदा प्रालेयान् वर्षन्निव वहन्नास्ते। क्रमेण तु प्रभातसन्ध्यारागलौहित्यं भजमानं गगनतलमदूरात् पर्वतशृङ्गाद्विकशदिवाचकासीत्। चतसृष्वपि दिक्षु रम्याणि गिरिशृङ्गानि चक्षूंषि आवध्नन्तीव तस्थुः।

अहो नु खलु रमणीयता पर्वतानां यदालोक्यैव तान् सपदि हर्षविस्मयौ जायेते। जनयति च दर्शनं ह्येषां विधातरि भक्तिम्। समुद्रोऽपि पर्वत इव भगवद्भक्तिमापादयति। उभावपि तौ दर्शयतः विस्तीर्णतामीशशक्तेः। रत्नानां धातूनाञ्च पोषणे, आश्रयदाने च सर्वभूतेभ्यः योनित्वेनौषधीनां सन्त्येव बहवः समानधर्माः गिरिसमुद्रयोः। अनेनैव हेतुना मन्ये, धरातलस्थसकलदेशीयानां लोकानां काव्येषु वा शास्त्रेषु धराधरसमुद्रयोः महिमा प्रगीतः। इंलण्डीय कविना वाइरनाख्येन मह्हीध्रात्मनोः साम्यमुपकल्पितम्। तद्यथा,—

"Are not the mountains, waves and skies a part of me and of my soul, as I of them" Childett Harold.

तेनैव कविना महार्णवोऽपि ईश्वरमुखदर्पणस्तस्यैव प्रियतमः सिंहासनञ्चेत्युपकल्पितः। तद्यथा,—

"Thou glorious mirror where the Almighty's from

Glasses ; self in tempest ; in all time—
Calm or con vulsed, in breeze or gale or storm
I cing the pole or in the torrid clime,
Dark—having boundless I end-less or sublime
*The image of eternity the throne*
*of the In visible."*

अस्मदीयशास्त्रेषु काव्येषु च किं पुनः पर्वतसमुद्रयोरात्मसाम्यं सरित्समुद्राणां सर्वेषामेव हरिवपुष्ट्वं सम्यक् प्रकटीकृतम्। यथा चोक्तं श्रीमद्भागवते।

"खं वायुमग्निं सलिलं महीञ्च, ज्योतींषि सत्त्वानि दिशो द्रुमादीन्।
सरित्समुद्रांश्च हरेः शरीरं, यत्किञ्च भूतं प्रणमेदनन्यः॥"

किं तावत् पुनः हिमवतस्तथात्वम्, तस्य देवतात्मकत्वमुक्तं कविना कालिदासेन प्राचीनैश्च पौराणिकैः। तथा चोक्तं कुमारे।

"अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः॥"

कृत्वैवं मनसि हिमवद्ग्रथितदृष्टेर्गच्छतः क्रमेण काकलिरिव विहङ्गानां, मर्मरशब्द इव वनस्थलीशुष्कपत्राणाम्, आमन्द्रस्तनितमिव स्तनयित्नूनाम् कोलाहल इव जनसंमर्दस्य आस्फालनशब्द इव सुरगणस्य, वोढा इव गन्धर्वसंगीतस्य स्तुतिपाठ इव भगवतो महादेवस्य, कलकल इव कैलासनिवासिनां प्रमथानां प्रथमं नातिस्फुटः क्रमेण तु विस्पष्टतामापद्यमानः कश्चित् श्रवणसुखकरः शब्दो मम श्रोत्रविवरमनुविवेश। किमिदं किमिदमिति सहयात्रिकैः पृष्टास्तद्देशीया भागीरथी-वीचीसंघट्टशब्दोऽयमिति निजगदुः। श्रुत्वा च तन्निर्भरसुखहतचेतना इव श्रवणमुपेत्य मुषिता इव सर्वेन्द्रियैश्चलन्तोऽपि जड़ा इव कथयन्तोऽपि मूका इव क्वेऽयं गङ्गेति व्याहरन्तो वयं हरिद्वारपण्यवीथिकामार्गं दुद्रुमः। पण्यवीथीकाराजिमतिक्रम्य क्षणेनैव वयं गङ्गारोधः उपेयिवन्तः। तत्र च क्षणं स्थित्वा

पूर्वस्यां दिशि भानुमत उदयाचलशिखरादुत्थानमुद्वीक्ष्य उपस्पृश्य च गङ्गाम्भस्तीर्थवासिभिर्ब्राह्मणैः सार्द्धं वयं गिरिशृङ्गोपरिस्थ-टिहरी राजावासाभिमुखं गन्तुं प्रारेभिमहि। कियद्दूरञ्च गत्वा अस्माभिरसावावास उपलब्धः।

विनीय चाध्वश्रमान् अपराह्णे वयं पुरीशोभादर्शनाय निर्जग्मिम, अवतीर्य्य च गिरिशृङ्गात् वयं पण्यवीथिका वर्त्मान्यनुसरन् गङ्गासैकतमुपाययिम। तत्र त्वरितवेगां गङ्गां पश्यन्तो वयं परां प्रीतिमुपलेभिमहि। सर्वास्तु काष्ठा मनोहरगिरिशृङ्गैकोपशोभिता आसन्। मन्ये तत्काल एव निस्तब्धताधिष्ठात्री देवी पूर्णरूपेण तत्र विरराज, केवलं गङ्गैव तस्याऽप्रतिद्वन्द्विनी सवीचिकुलकलकलैर्दिक्चक्रवालं मुखरयन्तीव विदिद्युते। भ्रमं स्वाहं स्थानमेकं ददर्श, यत्र बहुशो जलेचराः मीना निःशङ्का जनहस्तेभ्यः आहार्य्यमाददाना आसन्। दृष्ट्वा चेदमकरवमहं चेतसि अहो निर्भीकता मीनानां यद्दृष्ट्वैव तां मनसि हर्षभये युगपदेव जायेते। धन्यास्त एव तद्देशीयाश्च खलु निर्मत्सराः मीनानेतान् न हिंसन्ति। मन्ये वा पार्वती तपःक्षेत्रसान्निध्यादस्मिन्नेव देशे प्राणिहिंसा न दृश्यते, "विरोधिसत्त्वोज्झितपूर्वमत्सर"मित्यादिना पार्वतीतपोवनवर्णनप्रामाण्यात्।

एवं चिन्तयति मयि कश्चित्तद्देशीयो मदन्तिकमुपाययौ। तेन सह बह्वालापश्चाहं तमपृच्छम्। केयं पुरी, किं वास्याः प्रमाणम्, को वास्या महिमेति। तदा तेनोक्तं केदारक्षेत्रान्तर्गतेयं पुरी, श्रुत्वैव तं पुराणोक्तस्य क्षेत्रस्य महिमवर्णनादिकमुदपादि मे चेतसि। सस्मार चाहं स्कन्दपुराणान्तर्गतं वचनम् ;—

"नन्दा पर्वतमारभ्य यावत् काष्ठा गिरिर्भवेत्। तावत् केदारकं क्षेत्रं शिवमन्दिरमुत्तमम्॥
रवस्तम्भं समारभ्य मायाक्षेत्रावधि स्मृतम्। अतिपुण्यतमं स्थानं हिमालयपदान्तिकम्॥

पृष्टश्च स क्व तन्मायाक्षेत्रम्। पुरुषोऽसौ अस्मांस्तत्र परस्मिन्नहनि नेतुं स्वीचकार।

अथ गतेऽस्मिन् वयं गङ्गागर्भस्थानामुपलानां शोभातिशयं वीक्ष्य तेषां कतिपयानां संग्रहे मनो दधिम। अवतीर्य्य च गङ्गाम्भसि नानावर्णान् विविधाकारानुपलानाहृत्य परमामोदमुपलेभिमहे। मनसाहमचिन्तयम् यदास्मिन् देशे गङ्गैव नाभूत् तदैतान्येवोपलानि कठोरहिमवद्गिरिरंशभूतानि विहस्यैव युगयुगान्तरमात्मनामच्छेद्यत्वं मन्यमानानि—आत्तगर्व्वानीवासन्। तान्येवाधुनास्मद्विधानां क्षणभङ्गुरकायानां करतलमधिगतानीत्यहो दुर्विलसित्वं कालस्य। तेषां कतिपयान्येवाहृत्य वयमावासाभिमुखमुपाययिम।

तत्रागताश्च वयं प्रकृते रामणीयकममितस्ततो द्रष्टुकामाः गृहान्निर्जग्मिम। समन्ताद्विसारीणि गिरिशृङ्गाणि नानावृक्षलतासमाकीर्णानि, उन्नमय्यैव स्वां स्वामुन्नतां कन्धरां नितरां शुशुभिरे। तेषामेव पाददेशे नातिविस्तीर्णा चपलचपला गङ्गा नानावीचिमालासङ्कुलावर्त्तमयी रजतमुक्ताफलानुकारिभिः फेनैर्भूमिः कण्ठगतामुक्तावलीव नितरां मधुरकल्लोलिन्यचकासीत्। उत्तरस्यान्तु दिशि हिमवतस्तुषारमण्डितानि शृङ्गाणि उपहसन्तीव धवलधवलैरंशुजालैः सकलपर्वतान्, दधतीव शशिमौलिशिरश्चन्द्रपाददीधीतिजालान्, सन्ध्यारागरञ्जितान्याताम्राणि मन्दाकिनी हैममृणालीनिरागं व्यञ्जयन्तीव सकललोकेषु, अतिरिच्य च तारतरदीर्घेणायामेन सकलपर्वतान्, शैलेयसंमूर्च्छितसूर्य्यकिरणरञ्जितत्वेन दण्डकारण्यस्थरामचन्द्रादीनां मनांसीव सहृदयमनांसि कनकमृग इव मुष्णन्ति शुशुभिरे। अहो बत महिमा हिमवतो यत्र कोऽपि एकमुखेन तं वर्णयितुं समर्थः। महिमगुरुत्वेन वा मन्ये अस्य काव्यशास्त्रेषु देवभूमित्वं कल्पितम्। यतो वै देवतानां मानुषेभ्यः श्रेष्ठता अत स्तदावासानामपि मानुषावासेभ्यो- ऽपि श्रेष्ठत्वं मनोहारित्वञ्च। हिमवान् हि अत्युन्नततया स्वभावरमणीयतया च सर्वथा धरातलस्थसकलस्थानेभ्योऽपि श्रेष्ठतमः। अतोऽस्य देवदेवावासत्वं पुराणकाव्यादिषु प्रसिद्धम्। किं

बहुनाचेतनस्यास्यैव हिमालयस्य श्रेष्ठतावर्णने कविना चेतनधर्मो-ऽपि अस्मिन्नारोपितः। मानुषलोकदुर्लभा गुणा अप्युपकल्पिताः। तद्यथा कुमारे ;—

"दिवाकराद्रक्षति यो गुहासु, लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने, ममत्वमुच्चैः शिरसां सतीव ॥"

मन्ये पृथिव्यां यानि चानुत्तमानि वस्तूनि दृश्यन्ते श्रूयन्ते मनसापि वा कल्प्यन्ते तेषु तेषु सर्वेषु कविताधिष्ठात्री देवी निवसत्येव। अन्यथा कथंतान्येवाश्रित्य धरातलस्थसकलदेशस्थानां कवीनां काव्यनाटकादिषु वर्णनादयो दृश्यन्ते। इंलण्डीयकवेः सेक्सपीयरस्याप्सरसः (fairies) सुगन्धीण्डिज निवासिनः (Spiced Indies) ते खलु चन्द्रपादैरुह्यमानाः नातिशीतोष्णरजन्यां मनोहारि सुमनोभिः संक्रीड़न्ते, मानुषलोकमवतीर्य्य च स्वेच्छया मानव भाग्यचक्राणि विवर्त्तयन्ति। महाकवेः कालिदासस्याप्सरसोऽपि हिमवन्निवासिन्यस्तेषां निवासस्थानमुत्तरहिमालयस्यालकेति नामधेयनगरीविशेषः। सालकातीव मनोहरा। उक्तञ्च मेघदूते—

यत्रोन्मत्तभ्रमरमुखराः पादपा नित्यपुष्पाः।
हंसश्रेणीरचित रसना नित्यपद्मा नलिन्यः॥
केकोत्कण्ठा भवनशिखिनो नित्यभास्वत् कलापाः।
नित्य ज्योत्स्ना प्रतिहत तमो वृत्तिरम्याः प्रदोषाः॥

अस्मद्देशे तु देववाण्यां वापरभाषायां यानि चान्युत्तमानि दृश्यन्ते तेषामनेकानि हिमवद्वर्णनात्मकान्येव दृश्यन्ते। महाकवेः कालिदासस्य मेघदूतकुमारसम्भवयोः श्रेष्ठतमांशाः हिमवद्वर्णनात्मकाः। वरकवीनां काव्यादिग्रथने वरसामग्रीणामेव प्रयोजनं सर्वत्र दृश्यते। इंलण्डीयकवेर्मिलटनाख्यस्य महाकाव्यं स्वर्गवर्णनात्मकं तथैव तु कालिदासस्य रघुवंशाख्यं महाकाव्यं धरातलस्थ श्रेष्ठ कुलतिलकस्य रामस्यांशभूतस्य विष्णोर्वर्णनात्मकमिति। हिमा-

स्तयो हि पृथिवीस्थ-वरवस्तूनां वर इत्येकवाक्यैः स्वीक्रियते सर्वैः। अतो मन्ये तस्यैव धरातलस्थश्रेष्ठकवि-काव्यसामग्री-भूतत्वमिति।

अथ प्रदोषराजेन पराभवं प्रापित इव, त्रपामर्षाभ्यामाताम्राननो निजकरत्त्वयेण सांसारस्यानित्यतां सूचयति, स्वभाग्यविपर्य्यय व्याजेन द्रढ़यतीव वक्ष्यमाणं महाजनवाक्यं—

"प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्त्तुरभून्नपतिष्यतः करसहस्रमपि॥"

भगवति कमलिनीनायके अस्तगिरिशिखरमारोहति सैन्यकुल-कोलाहल इव विजृम्भिते विहायसां करालकूजिते, रक्ताम्बररागव्याजेन प्रदोषराजस्य जयपताकायामिव वियति उड्डीयमानायाम्। कर्पूरक्षोदपुष्टपिण्डयन्त्रव्याजेन विस्तीर्ण इव चन्द्रातपे, दिवाकर-प्रदोष संमर्दमुक्तवनस्थली श्वसित इव वातुं प्रवृत्ते आह्लादकारिणि मातरिश्वनि, विभ्रमपरिमल-गन्ध इवाप्सरसां दिवाकरमुक्ताया धरित्र्याः क्षतव्रताधूपगन्ध इवानुमन्यमानश्चन्द्रालोकसञ्चारिणीनां नानापुष्पविरचितनेपथ्यानामितस्ततः सञ्चरन्तीनां श्वसित इव वनदेवतानां सहसानेकपुष्पगन्धगन्धी वातुं प्रवृत्तः हृदयाह्लादकरः समीरणः। कुतोऽयं गन्ध इत्यस्माभिस्तेषु तेषु रम्यतरेषु शिखर वृक्षान्तरालेषु वनलतामण्डपेषु च किमपि नष्टमिव सुगन्धगन्धवह योनिमन्विष्यद्भिः गिरिशृङ्गाद् गिरिशृङ्गमारोहद्भिः क्रमेण वृक्ष-मुक्तश्रीफलाकीर्णा नानाश्रीफलवृक्षैरुपशोभिताधित्यका लब्धा। तत्र स्थित्वास्माभिः रजनी समागमभीत्येव नाधिकमन्विष्टं तद् गन्ध-वहकारणम्। (क्रमशः)

एम्, ए, श्रीअक्षयकुमारशर्म्मठाकुरस्य।

---

# धर्मविवेकः।

( पूर्वप्रकाशितात्परः )

अपरे च म्लेच्छा यादवानां भयावहा गार्ग्यमुनिपुत्रास्ते च काल-यवनापरनामकाः। यथा विष्णुपुराणे ५ मांशे २३ शोविंशाध्याये—१

परापर उवाच।

गार्ग्यं गोष्ठे द्विजं श्यालः षण्ड इत्युक्तवान् द्विज। यदूनां सन्निधौ सर्वे जहसुः सर्व यादवाः॥
ततः कोपसमाविष्टो दक्षिणाब्धिमुपेत्य सः। सुतमिच्छंस्तपस्तेऽपे यदुचक्रभयावहम्॥
आराधयन् महादेवं सोऽयश्चूर्णमभक्षयत्। ददौ वरञ्च तुष्टोऽस्मै वत्सरे द्वादशे हरः॥
सभाजयामास च तं यवनेशो ह्यनात्मजः। तद्योषित् सङ्गमाच्चास्य पुत्रोऽभुदलिसन्निभः॥
तं कालयवनं नाम राज्ये स्वे यवनेश्वरः। अभिषिच्य वनं यातो वज्राग्रकठिनोरसम्॥
स तु वीर्य्यमदोन्मत्तः पृथिव्यां बलिनो नृपान्। अपृच्छ नारदस्तस्मै कथयामास यादवान्॥
म्लेच्छकोटि सहस्राणां सहस्रैर्बहुभिर्वृतः। गजाश्वरथपत्त्योघैश्चकार परमोद्यमम्॥

वत्स वामापद! यदपृच्छस्त्वन्तेषामुत्पत्तिकालं तन्तु एक-द्वित्रादि गणनया कियन्तं वत्सरं वक्तुं नाहमलम्। किन्तु नव्य-शिक्षितान् पृच्छतु। ते भ्रूभङ्गिलीलयैव वेदोत्पत्तिकालवन्निर्णेतुं शक्नुयुः। किन्तु सगरराजत्वकाले रामायणादौ विश्वामित्रराजत्व-कालादौ च म्लेच्छादि जातिरासीदित्येतावन्निर्णेतुं प्रभवामि इति।

तेषामुत्पत्तौ विविधः प्रकारश्च तत्तन्मुनिवचनाच्छ्रुतः। म्लेच्छानां धर्मस्तु आधुनिक इति युक्त्या लभ्यते। यदा खलु महात्मना सगर-राजेन ते सर्वधर्माद्बहिष्कृताः कृताः। ततः प्रभृति ते वैदिकधर्मं स्मार्त्तधर्मं वा पौराणिकधर्मं तान्त्रिकधर्मं वा समाश्रयितुं नालमा-सन्। किन्तु तस्य शासनात् भीताश्च शक-दरद-पह्लव-काम्बोज-वर्वर-यवन-चीन-हून केरलादिदेशेषु पार्वत्यप्रायेषु मरुभूमिषु च वास-मङ्गीचक्रुः।

एवं बहुतिथे काले, सत्यत्रेताद्वापरेषु व्यतीतेषु कलेरपि प्रायः किञ्चिन्न्यूनाधिकसार्द्धत्रिसहस्रेषु गतेषु मुषा योषुः महम्मदस्य ईश्वरा-वतारत्वेन करुणया प्रादुर्भूय तेषां धर्मं व्यवस्थापयामासुः। सुचिरकालं

धर्मसुखवञ्चितांस्तान् सुखिनश्च चक्रुः। तेषु महम्मदोऽतीव विचक्षण आसीत्। स एवं विधया प्रणाल्या धर्ममास्थापयत् यत् व्युत्क्रमेण नीयमान आर्य्यधर्म एव स्यात्। यथा "मरा मरा" इत्युक्ते वैपरित्य-पाठात् "राम राम" इत्येवं स्यात्। तथाहि—

आर्य्याः पूर्वमुखास्ते च पश्चिममुखाः ईश्वरमुपासते। आर्य्याः शिखां रक्षन्ति। ते च सशिखं वपन्ति। आर्य्याः पृष्ठतः कच्छं दधति। ते च पृष्ठतो मोचयन्ति। आर्य्या गोवधं पातकं ते च पुण्यं मन्यन्ते। आर्य्या वाटा पृष्ठतो बलिं सकृत्प्रहारेण छिन्दन्ति। ते च ग्रीवाधोऽ-सकृत्प्रहारेणार्द्धं पशून् छिन्दन्ति। आर्य्याः स्त्रीपशुं न घ्नन्ति। ते च स्त्रीपशुं विशेषतो हिंसन्ति। आर्य्याः कदलीपत्रादीनां पृष्ठभागे अभ्यवहारादिकं निष्पादयन्ति। ते च निम्नभागे।

एवं प्रायो बहुष्वेव विषयेषु ते आर्य्यविपरीतमाचरन्ति। केवलं आर्य्याणां तान्त्रिकबीजमन्त्रं विपरीतपाठकरणे मन्त्रशक्तिर्हीयेत इति भिया तथा नाचरन्ति। किन्तु व्यञ्जनवर्णं विशिष्य उच्चार-णार्थमकारं दत्वा पेठुः।

तथा हि।—क्रीम् इत्यत्र करीम्। ह्लीम् इत्यत्र हलीम्। क्लीम् इत्यत्र कलीम्। ह्रीम् इत्यत्र रहीम्। इत्येवं पठन्ति। एतावान् भेद इति।

वामा। भगवन्! पूर्वमुक्तं महात्मना सगरेण तेषां सर्वधर्मराहित्यं कृतम्। चेदेवं कथमेषामयं धर्मो भवितुमर्हति?।

शिव। मैवं सगरेण आर्य्यमतसिद्धः सर्वधर्मो निराकृतो नत्वा-धुनिक इति निबोध।

वामा। भगन्! यदि वर्त्तते तेषामपि धर्मः "य तोऽभ्युदय-निःश्रेयससिद्धिः" इत्येवं रूपस्तर्हि किमित्यस्मद्धर्माद्भिद्यते स धर्मोऽ-स्माभिः कथं वा नाश्रीयते?।

शिव। सत्यम्। न खलु अहिंसासत्यास्तेयादिरूपः सामान्यो-

धर्मो भिद्यते। किन्तु विशेषधर्मस्तु भिद्यते एव। स च भेदः आर्य्येष्वपि वर्त्तते। वर्णभेदाद्देशभेदात् कालभेदाच्च।

एवं स च म्लेच्छधर्मोऽस्माभिराश्रयितुं नैव युज्यते।

वामा। कथमिति।

शिव। ब्रूहि वत्स! अस्मद्देशे अस्माकं पैतृको धर्मोऽस्ति न वा।

वामा। अवश्यमेवास्ति।

शिव। अस्ति चेत्तर्हि किमिति पैतृको धर्मः परिहृत्य परकीय-धर्मः समाश्रीयते?।

वामा। समाश्रयने को दोषः? यदि म्लेच्छीयोऽपि धर्मः।

शिव। दोषः धर्मेऽनास्थेति। यस्य खलु स्वधर्मेऽनास्था तस्य परधर्मेऽपि चिराय आस्था स्थास्यतीत्यत्रापि कः प्रत्ययः। यः खल्वेवं चञ्चलमतिकः प्रातरेकस्मिन् धर्मे श्रद्दधाति। मध्याह्नेऽपरस्मिन् साय-न्तने तत्रापि वीतश्रद्धो भवेत्। स सर्वमेव धर्मं जिघ्रन् न क्वापि धर्मे संस्कारं दृढ़तरमापद्यते। सुतरां तेषां धर्मजन्य फलमपि दूरमपैति।

अपि च पैतृके धर्मे पितृपरम्परागतं सत्त्वं वर्त्तते। अनुष्ठितश्च स धर्मः सत्त्वास्पदतया अनायासमायत्तीभवेत् फलञ्च प्रसूते। किन्तु असत्त्वास्पदीभूतस्तु गृहीतो नवो धर्मोऽचिरक्रीतो ग्राम इव न शीघ्र-मायत्तः स्यात्। तत्राधिकारस्थापनमपि वाञ्छातो न स्यात्। परन्तु राजानुकूल्यं समयादिकञ्चापेक्षते। अतएवोक्तं गीतायाम्।—

> "श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
> स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥"

अपि च म्लेच्छदेशास्तु रजस्तमःप्रधानास्तद्देशीयजना अपि तथाविधा एव। सुतरां रजस्तमःप्रकृतिदेशधर्माणां सात्त्विके भारत-वर्षे प्रायःसात्त्विकानामार्य्याणां नोपकर्त्तुं शक्नुयात्। अतएव अहिंसा सत्यादिकं सामान्यधर्मं आर्य्यानार्य्याः सर्व एव समं भजन्तु। किन्तु देशभेदाद्भिन्नो विशेषधर्मः न कैरपि भिन्नदेशवासिभिर्गृह्यताम्। स च

धर्मः खाद्याखाद्यविचारः वेशविन्यासादिः उपासनाप्रकारादिः तत्तत्तीर्थादिदर्शनादिरपि इति। अतएव न कश्चिद्धर्ममवमन्येरन्। न कश्चित् परधर्मं गृह्णीयुः। न स्वधर्मं परित्यजेयुः। न स्वधर्मं त्यक्तुमुपदिशेयुः। न परधर्ममन्यं ग्राहयेयुः। न परधर्ममीर्षया प्रतिवदेयुः। परन्तु सर्वं एव स्वस्वधर्ममाचरेयुः। ततश्च सुखं जीवेयुः। अभ्युदयेयुः। अन्ते च निःश्रेयसं लभेरन्निति। (क्रमशः)

---

## DERIVATIVE WORDS ( यौगिक शब्दाः )।

| *Words.* | *English equivalents.* |
|---|---|
| अनुचरः, अनुयायिन् ( declined like गुणिन् ) | follower |
| अनुजः | younger brother |
| अनृतं,(indeclinable) | untruth |
| अन्तरायः प्रत्यूहः | obstacle |
| अपदेशः, व्याजः | pretext |
| अपवादः | censure |
| अवला, नारी | woman |
| अभिनव, नूतन (adjec.) | new, fresh, blooming |
| अभिरमणीय (adjec.) | very charming |
| अतिगर्हित ( adjec. ) | very blamable |

| *Words* | *English equivalents* |
|---|---|
| अत्यादरः | excessive respect |
| अधिक्षिप्त (adjec.) | reviled, abused |
| अमल, विमल (adjec.) | pure, white |
| अमानुष (adjec.) | superhuman |
| अमोघ (adjec.) | infallible, unfailing |
| अर्जनम् | acquisition |
| अवसानं | close, termination |
| अव्याहत (adjec.) | unobstructed |
| अशनिः, वज्रम् | thunder, thunderbolt |
| अशनम् | food |
| अशुभं | mishap |

| *Words.* | *English equivalents.* |
|---|---|
| अहङ्कार: | pride |
| आकर: | mine |
| आकुल (adjec.) | overwhelmed with grief, absorebd in thought |
| आगन्तुक:, अभ्यागत: | guest |
| आप्त (adjec.) | trustworthy |
| आयतनम् | abode |
| सखी, | female companion |
| आवसथ: | house |
| आस्तरणम् | bed |
| इन्धनम् | fuel |
| इन्द्रियम् | organ of sense |
| उत्सव: | festivity |
| उपरत: पञ्चत्वं गत: (adjec.) | dead |
| उपराग: | eclipse |
| कर्णधार: | helmsman |
| कलकल:, कोलाहल: | uproar |
| कलहंस: | duck, goose |
| कलिका, मुकुल: (') | bud |
| किम्बदन्ती | rumour |
| कौतूहलम् | curiosity |

| *Words.* | *English equivalents.* |
|---|---|
| क्षणिक ( adjec. ) | momentary |
| क्षपा, रजनी, यामिनी | night |
| गोत्नं, वंश: | family |
| घातक: | executioner |
| जलाशय: | pool of water |
| जनता | populace |
| जलयन्त्रम् | water machine |
| तटिनी, स्रोतस्वती, नदी, अपगा | river |
| उत्स: | fountain |
| सर:, ह्रद: | lake |
| तदानीन्तन (adjec) | contemporaneous |
| तरलता, चपलता | fickleness |
| तापस:, ऋषि:, मुनि: | ascetic |
| तिमिरं (') तम: | darkness |
| तूल: | cotton |
| दुरितम् | sin |
| द्रुम:, तरु:, विटपी | tree |
| नग: | mountain, tree |
| पञ्जर: | cage |
| पन्नग:, सर्प:, व्याल: | serpent |
| नाभि: (m & f) | navel |

| Words. | English equivalents. |
|---|---|
| नाभ्यावर्त्तः | the cavity of the navel |
| जामेयः, भागिनेयः | sister's son |
| पवनः, वायुः | wind |
| अन्तरीक्षं | atmosphere |
| पुङ्गवः, वृषभः | bull |
| पेशल (adjec.) | clever, skilful |
| प्रतिक्रियाः, प्रतीकारः | remedy |
| प्रस्तावः | proposal |
| प्रवृत्तिः | commencement |
| मगध | long-pepper |
| महार्ह (adjec.) | costly |
| वादः | report |
| सन्देशः | message |
| विश्रम्भः | confidence |
| व्यतिकरः | occurrence |
| व्यसनम् | adversity |
| समवायः | collection |

| Words. | English equivalents. |
|---|---|
| सौहार्दम्, मैत्री | friendship |
| होमः | oblation |
| धूमः | smoke |
| विश्रामः | rest |
| वल्लकी, वीणा | lute |
| कान्त (adjec.) | dear |
| प्रतारणा | deceit |
| कापुरुषः | a wretch |
| कार्पटः | suitor, pitition-er, candidate |
| किङ्किरातः | parrot |
| किरणः | ray or beam of light |
| गुच्छः | a bundle |
| नायकः | hero |
| प्रजल्पः | prattle, gossip |
| प्रच्युतिः | fall, ruin |

(क्रमशः)

वि, ए, श्रीउपेन्द्रनाथरायः।
(वरिशाल, रायेरकाठि)

श्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती नगानिव ।
मायावलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

## भाषावतरणिका ।

दिशोऽन्धकारा भुवमन्ध-कारा: कृपाणधारा: खलु दृष्टिधारा: ।
बङ्गे निबन्धा जनतापराङ्गा भासो नभा नुस्तदितो न भानुः ॥

## उद्भट श्लोकाः ।

श्वश्रात् प्रार्थय मेदिनीं धनपतेर्बीजं बलाल्लाङ्गलं
कीनाशान्महिषं तवास्ति वृषभस्फालस्त्रिशूलम्भवेत् ।
शक्ताहन्तव भोगपाककरणे स्कन्दोऽस्ति गोरक्षणे,
दग्धाहं तव भिक्षया कुरु कृषिं गौरीवचः पातु वः ॥ २६१ ॥

कति दिवसमनैषीः पद्मिनीसद्मनि त्वं रजनिषु रमितोऽभूः कैरविण्यां रमण्याम् ।
कथय कथय भृङ्ग ! स्वच्छभावेन तावत् सुखमधिकमवाप्सीरत्र वा तत्र वेति ॥२६२॥*॥

कवित्वविस्तं हृतमेव सर्वं त्वदेकचौरेण सखे मदीयं
अयन्तु चौरी मम देहवर्त्ती शास्त्रानुसारान्न च शास्तिकर्त्ता ॥२६३॥

आलीवर्द्दि-नवावमप्यय नवद्वीपेश्वरस्याश्रित:
तत् पश्चान्नवकृष्णभूपतिमसुं रे चित्त चिन्ताशया ।
सर्व्वत्रैव नवेति शब्दघटितं त्वञ्चेत् समालम्बसे
तं देवं परमार्थदं नवघनश्यामं कथं मुञ्चसि ॥२६४॥ ††

---

* कश्चिद्विद्यार्थी पूर्वमध्यापकं त्यक्त्वा अपराध्यापकसन्निधिं गतः । पुनस्तं त्यक्त्वा पूर्व-मध्यापकसन्निधिमागतः । तं प्रत्युक्तिरियम् ॥ †† आलीवर्द्दि नवाव: मुर्शिदावादस्थसिराज-दुल्लानवावस्य मातामहः । नवद्वीपेश्वर: वङ्गीयराजः कृष्णचन्द्रः । नवकृष्णभूपतिः । कलिकाता-शोभावाजारस्थ "शब्दकल्पद्रुम" प्रणेत राधाकान्तदेववाहादुरस्य पितामहः । श्लोकोऽयं नवद्वीपवासि "वाणेश्वर" तर्कपञ्चाननस्य । पण्डितोऽसौ सार्द्धशताब्दात् ( १५० ) उपरितनोनः ।

# अथ श्रीशिवस्तोत्रम् ।

जयहरत्रिदशार्त्तिहरप्रभो सुरधुनीधर हे धरणीपते ।
प्रतिदिनं सुसमाधिरते यते वृषगते वृषजीवनमर्थये ॥ १ ॥
धवलवल्कलशोभिसुखाकृते विधुविधूततमस्ततिसत्कृते ।
भुजभुजङ्गमभूषणभीतिहन् वृषगते वृषजीवनमर्थये ॥ २ ॥
वाराणसीनाथ दयासरित्पते भीतोऽस्मि पापोद्भवजीवनेन ।
कथं गिरीशेन्दुकिरीटकान्ते कर्माणि नो नारक दर्शनानि ॥३॥
गौरीपते निटिललोचन चन्द्रचूड़ श्रीपार्वतीप्रियतमप्रणतैकबन्धो ।
हे दीनपूरुषपते ! जटिलोग्रयोगिन् भूतेश्वरत्वमसि दीनजनावनाय ॥४
गङ्गाधरान्धकरिपो हर नीलकण्ठ श्रीमन् कपर्दकसरित्परिधौतमूर्त्ते ।
दक्षान्तकोरुग भवेश गणेश तात त्वं कर्हिचित् सदयतामुपयासि नो वा५
मृत्युञ्जय द्विपकृताजिनचेल शूलिन् श्रीकण्ठ हे घृतकपाल चिदेकतान।
त्रैगुण्यतोऽपि पदवी ननु दूरतस्ते भूमन् धनुर्धरपते क्व नु यामि दीनः॥६

हे काममर्दन् ! कृतान्तकृतान्तकेच्छिन्
हे भर्ग ! हे प्रमथनाथ पुराभिघातिन् !
हे त्र्यम्बक ! त्वमसि दीनदयार्द्रभावो
धृत्वाष्टमूर्त्तिभिरसुव्रत पासि लोकम् ॥ ७ ॥
हे वामदेव ! जय भीम गिरीश शान्त
कर्पूरपूगभसुदीप्ततनो त्रिनेत्र ॥
हे सर्व शङ्कर ! कुरुष्व कृपां मयीश
चिद्रूप सर्वग सदैव सुमोदबोध ! ॥ ८ ॥

मत्वा भवन्तं सकलार्त्तिहारं प्रनिर्गतस्वात्मपरावभेदम् ।
श्रुत्वा दयालुव्रत चाष्टमूर्त्तिमुपाश्रये धर्मसुवृत्तिहेतोः ॥ ९ ॥
दृष्ट्वातिदीनं निरये पतन्तं कथं श्रमोऽयन्त्विति मन्यसेऽज ।
जाने पुरारे न तवोपकारिणः श्रमोऽस्ति योगिन् धरणीकुटुम्बिनः॥१०
कति त्वया पापिजनाः सुपाविताः कथं न मां त्वं पवसे महेश्वर ।

समस्तजीवार्त्तिहरस्त्वमीश्वरो ममैव पापं बहु मन्यसे कथम् ॥११॥

त्वं सागराख्यान् कलुषान् नृपान् स्वयं समुज्जिहीर्षुः क्षतकामशत्रुः ।

धुनीं सुराणां शिरसा जटाभिर्विकीर्णगर्वां दधिषे परार्थम् ॥१२॥

स त्वं मदीयं भवदुःखजालं निःशेषतो नाशय शूलपाणे ।

दुस्तारसंसारसमुद्रमग्नं त्वं मां समुत्तारय लोकपाल ॥ १३ ॥

त्वं दीनबन्धुस्त्वमनाथनाथस्त्वमेव पापौघविनाशकारी ।

तस्मात्त्वदन्यं कमहं प्रपद्ये दीनोऽप्यनाथोऽपि च पापकारी ॥ १४ ॥

विश्वेश विश्वपरिपालक विश्वहारिन्
वैश्वानराक्ष विषधारकहारधारिन् ।
वैषम्यहारक विशाम्बर विश्ववन्द्य
विश्वार्त्तिहन् जटिल विश्वगते प्रसीद ॥ १५ ॥

प्रसीद देवेश महेश शम्भो भूतेश लोकेश गणेश शूलिन् ।

गौरीपते गौरविभूतिभूषिन् गङ्गाधरान्धकक्षतान्तकतारकारे ॥ १६ ॥

( क्रमशः )

श्रीबुलाकिराम शास्त्रि विद्यानिधिः ।
अमृतसर, पञ्जाब ।

---

## ( श्मशानम् । )

( पूर्वतोऽनुवृत्तम् । )

अनन्तदृश्यानि समन्ततोऽत्र, दृष्टानि रे मानस ! भीतभीतम् ।

अनन्तचक्षूंषि विकीर्य्य भूयः अन्यान्यसंख्यानि नवानि पश्य ॥६७॥

एतज्जगत् पञ्चभिरेव भूतैर्विनिर्मितं, साधुविलीयतेऽपि ।

बेत्स्येव ; किन्तत् भयमत्र तीव्रं ? चिन्ता कुतो वा विषमा घटेत ?॥ ६८॥

संसार एषोऽत्र न नश्वरः किम् ? जड़ो न देहः क्षणभङ्गुरः किम् ? ।

हित्वा मृतं किं विरमन्ति सर्वे नो ? किन्तदेतेषु वृथा प्रयत्नः ? ॥६९॥

अनन्तरत्नैरपि किं फलन्नः ? गन्तुं समं यैर्न मयैव शक्यम् ।

किं पुत्र पत्नी स्वजनैश्च ? यैस्तु विरंस्यते केवलरोदनेन ॥७०॥

किं सज्जितैर्हर्म्यगृहैर्विचित्रैः ? परिच्छदैर्वाऽपविभूषणैः किम् ? ।
किं कोमलैः स्वैः शयनैः ? प्रभूणां, अन्तेऽपि यान्त्यन्यमहो श्रयन्ति ॥७१॥
मानः कथं ? चित्त ! कथं नु ! गर्वः ? द्वेषश्च हिंसा कथमेव तेषाम् ? ।
अलङ्घनीयान्नियतेर्नियोगात् अत्रैव येषां परिणाम एषः ॥ ७२ ॥
रे चित्त ! संसर्गमिमं त्यजेस्त्वं, विधेर्नियोगो बलवान् यतस्त्वाम् ।
प्रच्यावयिष्यत्यथ वासरान्ते मासान्त एवापि च वत्सरान्ते ॥७३॥
विधेहि रे चित्त ! पुरीं विशालमरण्यमेतान् पशु-पक्षि-कीटान् ।
मित्राणि ; मूलं धरणीरुहस्य गृहं ; सु-पर्णास्तरणञ्च शय्याम् ॥७४॥
भजस्व नारायणपादपद्मं, कुरुष्व नारायणनामपानम् ।
लभस्व नारायणभक्तिमग्र्यां, श्मशानभूमिं तरितुं यदीच्छेः ॥७५॥
सुखे च दुःखे च प्रियेऽप्रिये च मानेऽपमाने च शिवेऽशिवे च ।
लाभेऽप्यलाभेऽपि जयेऽजयेऽपि रे चित्त ! साम्यं सुचिरं लभस्व ॥७६॥
रे चित्त ! हिंसा मद-मत्सरत्वे क्रोधञ्च मोहञ्च विलोभनञ्च ।
कामञ्च मिथ्या च निरन्तरन्त्वं निमज्जयेर्विस्मृतिवारिणीह ॥७७॥
रे चित्त ! मूढ़ ! त्वमतीवतूर्णं नारायण-श्रीचरणाम्बुजन्तत् ।
भजस्व ; यत् सादरमाश्रयन्तः संसारमेतं प्रतरन्ति धीराः ॥७८॥
क्षमस्व भीमेक्षण ! हे श्मशान ! त्वद्दर्शनाद् व्याकुलमेव विश्वम् ।
पतङ्गसङ्घा इव चित्रभानौ विशन्ति मोहादनु जन्तवस्त्वाम् ॥७९॥

अखिलभुवनकर्त्तः ! सत्प्रवृत्तिश्च कान्या ?
सदसदपि किमस्मिन् ? कश्च धर्मस्ततोऽन्यः ।
क इह ? किमिव भद्रं किन्तदन्यत् ? न जाने,
नय सुकृतपथन्मां, प्राप्स्यसे येन स त्वम् ॥ ८० ॥

श्रीअन्नदाचरणतर्कचूड़ामणिः
नोयाखालि सोमपाड़ा ।

( नारायणार्पणमस्तु )

# हरिद्वारभ्रमणम् ।

( पूर्वप्रकाशितात्परम् )

रात्रौ विश्रान्ताः प्रभातसमये तल्पमेवाधिशयनानामस्माकं कर्ण-कुहरे कश्चिदभिनव इव प्रतीयमानो विहङ्गमकाकलिध्वनिरनु-विवेश। किन्नामायं विहङ्गमः, किं रूपो वेति जिज्ञासवः यावद् वयं वहिर्निर्गताः पश्यामस्तावद् विचित्ररागरञ्जितान् गिरिशिखर-शाखिशाखासमाश्रितानन्कान् वन्यमयूरान् दृष्टवन्तः। पुरास्माभिः काव्येषु नाटकेषु च शिखिकेकामाधुरी अश्रद्दधानैरेव प्रपठिता। अधुना तु ता एव शिखिकेकाः अस्माकं सातिशयमनोरमा एव जाताः। मन्ये दृश्यस्थानमहिम्ना एव विषयिणां नीरसानामपि चेतांसि सरसतां भजन्ते। अतो यदेव कवीनां चिरं मनोहरं तद्वि-स्थानकालमहिम्ना क्षणमिव विषयिणामपि मनोहरमिति प्रतीयते। अन्यथा या एव शिखिकेकाः पुरास्माकं नातिमनोरमाः अभूवन् कथं ता एव तदा सातिशयमनोरमाः सञ्जाताः। अतो मन्ये यदुक्तम् इंलण्डीयकविना सेक्सपीयरेण ;—

"The lunotic, the lover and the poet
Are of imagination all compaet.'

यत् कवयः प्रेमिकाः उन्मादिनश्च सर्व एव एकजातीयाः समान-धर्माश्च तत् सम्यगेव। अन्ये प्राकृताः यानि यानि वस्तूनि जड़ानि नीरसानि च मन्यन्ते कवयः प्रेमिकास्तथोन्मादिनो हि तान्येव साक्षात् सचेतनानि सरसानि च विश्वसन्ति। अतो युक्तमुक्तं कविना कालिदासेन यक्षविरहिणो मेघसम्बोधनं समर्थयता। तद्यथा मेघदूते।

"कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु"।

उन्मादिषु कविषु प्रेमिकेषु च इदमेव प्रकृतेऽप्रकृतन्यासपरा-यणा एव। वक्ष्यमाणश्लोके कविना कामिनीरूपं वर्णयता

प्रेमिकस्योन्मादिनश्चैकात्म्यं स्पष्टमेव दर्शितम्। तद्यथा साहित्य-दर्पणे ;—

"किं तारुण्य तरोरियं रसभरोद्भिन्ना नवा वल्लरी।
वेलाप्रोच्छलितस्य किं लहरिका लावण्यवारां निधेः॥
उद्गाढ़ोत्कलिकावतां स्वसमयोपन्यासविश्रम्भिणः।
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः॥"

किं बहुना उन्मादिप्रेमिकयोस्तादृशी एव समानधर्मता यत् कविना विष्णोरंशावतारः स्वयमेव श्रीरामो जानकीभ्रमेण तन्वीं तटाशोकलतामालिङ्गितुमुद्यत इति चित्रितः। तद्यथा रघौ जानकी-मुद्दिश्य रामवाक्ये ;—

"इमां तटाशोकलतां च तन्वीं स्तनाभिरामस्तवकाभिनम्राम्।
त्वत् प्राप्तिबुद्ध्या परिरब्धुकामः सौमित्रिणा साश्रुरहं निषिद्धः॥"

को हि न जानात्युन्मादिनो राज्ञः पुरूरवसः पर्वतमुद्दिश्य विश्रुतं तत् सम्बोधनं तद्यथा विक्रमोर्वश्याम् ;—

"सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी।
रामा रम्ये वनान्तेऽस्मिन्मया विरहिता त्वया॥"

अतो दृश्यते यद् यस्मिन् वस्तुनि प्राकृताः किमपि सौन्दर्यं सादृश्यं वा न पश्यन्ति तत्र कवयः प्रेमिकास्तथोन्मादिनश्च सौन्दर्य-राशिं विपुलञ्च सादृश्यं परिलक्षयन्तीति। अनेनैव हेतुना मन्ये कविना सेक्सपीयरेण वासन्ती-रजनी-स्वप्नाभिधे नाटके (midsum mernightsdream) रमणीरत्नस्य अप्सरो राज्ञ्याः टिटानीयायाः वटमाख्ये पुंसि आदरातिशयो दर्शितः, उक्तञ्चापि तेनैव कविना तत्र।

——"The lover all is fanticr
Sees Helens beauty in a brow of egypt.

कविभूमिसनाथानां कविताधिष्ठात्रीदेव्याः प्रेष्ठायतनदेशवर्त्ति-नामप्यस्माकं रवौ कालिदासस्येव "स्निग्धाश्च केकाः" शिखिनां बभूवुरिति किमपि न चित्रम्।

अथ कियत्कालानन्तरमेव तेनैव वैदेशिकेन सार्द्धं वयं माया पुर्य्यभिमुखं जग्मिम। अध्वनि वयं मायापुरीसम्बन्धिनीं पौराणिकीं वार्त्तां कथयन्तः भागीरथीतीरयायिनां रथ्यामाश्रित्य चलितुमारभामहे। इदं तु मायाक्षेत्रं द्वादशयोजनपरिमितम्। तस्य प्रमाणं यथा स्कान्दे;—

"गङ्गाद्वारात्कृष्ण प्राच्च रनखम्भावधिं भुवे। तथा नन्दा गिरिः पश्चात् काष्ठां तं ब्रह्मनन्दन॥
मायाक्षेत्रं समाख्यातं गङ्गाद्वारे सुपुण्यदे। ब्रह्मणः स्थानतो यावद् योजनानि दशद्वयम्॥
प्रमाणं क्षेत्रराजस्य गदितं ब्रह्मपुत्रक॥"

मायापुरीसम्बन्धिनीमिमामाख्यायिकां पौराणिकाः प्रचक्षते। पुराकिल दक्षो नाम प्रजापतिरस्मिन्नेव क्षेत्रे महायज्ञं चकार। पितृकृतस्वामिनिन्दामसहमाना दक्षस्य कन्या भवपूर्वपत्नी सती देवी अस्मिन्नेव क्षेत्रे पितुर्यज्ञाग्नावेव प्राणानुत्ससर्ज। शिवोऽपि क्रुद्धः प्रमथगणैः दक्षकृतयज्ञस्य कदनं कृत्वा प्रमथहस्तेन दक्षं विरूपी चकार। देवादिभिर्यज्ञस्य समाप्तये संस्तुतो महेशस्तथेत्युक्त्वा पश्चात् स्वरूपमापादितेन दक्षेण कृतस्तवः सन्तुष्टश्च तस्मिंस्तस्यैव प्रार्थनामापूरयन्नुवाच;—

"इदं क्षेत्रं महापुण्यं यावद्वैयज्ञभूमिका।
यत्र माया निमित्तं हि जातं सर्वं प्रजापते।
तस्मादिदं महाक्षेत्रं मायाक्षेत्रं भविष्यति॥"

इति स्कान्दपुराणम्।

गङ्गागमात् पश्चादस्यैव क्षेत्रस्य गङ्गाद्वारमिति संज्ञा जाता। तद्यथा स्कान्दे;—

"इदं तीर्थं महापुण्यमभूद् गङ्गागमे पुनः।
गङ्गाद्वारमिति ख्यातं स्मरणात् पापनाशनम्।

अस्यां मायापुर्य्यां माया देवी नाम्नी गौरीमूर्त्तिस्तथैव दक्षेश्वरो नाम शिवलिङ्गो वर्त्तते।

तत्र तयोर्दर्शनानन्तरं वयं इंरेजराजकृतं गङ्गाखातं ददृशिम।

अहो बत प्रबलप्रतापो मानुषाणां तेषु च पुनरिंलण्डीयानां ये खल्वलस्थामपि प्रबलवेगां गङ्गामनायासेनान्येनैव पथा द्वितीयभगीरथा इव निन्युः। तस्यैव गङ्गानिखातस्योपरि अस्ति कश्चिद्विपुलकायः सेतुबन्धः यस्तु मयदानवनिर्मितेन्द्रप्रस्थ सभेव जनयति विस्मयं मानुषाणामन्वर्थाञ्च करोति पुरीं मायानाम्नीं। यदुच्यते मानवानां ज्ञानबलमेव महाबलं तत् सत्यमेव। अन्यथा, कथं क्षुद्रा अपि मनुष्याः प्रबलप्रतापां नैसर्गिकीं प्रकृतिम् तथा महाबलान् वन्यान् जन्तूनपि वशतामानिन्युः। अहो बत महिमापि कालस्य यद् यदेव वस्तु पुरा मनसापि कल्पनापथं नाययौ तदेवाधुनानुदिनदर्शनयोग्यं जातम्। को नाम पुरालस्थां गङ्गां सेतुना बद्धुं मनसाप्यचिन्तयत्? अतो युक्तमुक्तं मनीषिभिः कालमहिमानं प्रकटयद्भिः—

"अप्सु प्लवन्ति पाषाणाः मानुषा घ्नन्ति राक्षसान्
कपयः कर्म कुर्वन्ति कालस्य कुटिला गतिः॥"

सेतुना तेनैव गच्छद्भिरस्माभिः क्षणेन गङ्गायाः अपरपुलिनं सम्प्राप्तम्। अतीव निर्जनोऽसौ देशः वनशोभा तु तत्र सातिशयमनोरमा। अतिसन्निकृष्टमेवासीन्नीलाचलो नामाचलः गिरिरसौ उद्ग्रीव इवात्युन्नततया कालकृतायाः सेतुबन्धादिक्रियायाः साक्षिरूपेणातिष्ठत्। मन्ये जगति सर्वं चलमित्यनेनैव पर्वतानामचल इति संज्ञा जाता। कालविलसितेन सर्वं क्षयं यान्ति न त्वचलः। गिरयो हि साक्षिण इव विपर्य्ययकुलानां अभिज्ञानभूता इव तत्तत् प्रदेशस्य चिरं सममेव वर्त्तन्ते। अतो युक्तमुक्तं भवभूतिना—

"पुरा यत्र स्रोतः पुलिनमधुना तत्र सरिताम्।
विपर्य्यासो जातो घनविरलभावः क्षितिरुहाम्॥
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदम्।
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति॥"

तस्यैवाद्रेः शिखरदेशे अस्ति देव्याश्चण्डिकायाः मन्दिरम्।

तस्मिन्नेव मन्दिरे अस्ति कश्चिच्छवमांसभोजी अघोरपन्थी साधुः। तस्याद्रेः पाददेशं गता वयं तस्यैव घनवनवृक्षलताकीर्णतया, चाधिक-दुर्गमतया, पर्वतवासिकिरातमुखाक्कुलवन्यद्विपशार्दूलाद्याकीर्णतया च नोत्सेहिमहे वयं तमधिरोढुम्। श्रुता चास्माभिस्तदेयं वार्त्ता यदिंलण्डीयः कश्चित्तत्र मृगयार्थं यातः अस्माकं तत्र गमनात् कियद्दिनपूर्वमेव शार्दूलेन विनिपातितः। श्रुत्वेदमस्माभिर्दूरादेवीं चण्डिकां प्रणम्य गङ्गातीरमभ्युपयातम्।

तत्र चातिमनोज्ञायां वेलायां परिभ्रमन्नहं शैलस्थदेवीमन्दिर-शोभामीक्षमाणः क्षणं स्थित्वा मनस्यकरवम्, यद्युक्तमेव देव्या आयतनं गिरिशिखरदेशः। महत्तमायाः जगन्मातुरुपासना महत्तर एव गिरिराजशृङ्गे शोभते। युक्तञ्चेदमुक्तं कविना वाईरणाख्येन प्राचीनपारसिकानामायतनमन्तरेण पर्वतपृष्ठे एव ईश्वराराधनं वर्णयता। तद्यथा ;—

"Not vainly did the early Persian make.
His altar the high places and the Peak.
Of earth o'ergazing mountains and thus take.
A fit and unveil'd temple these to seek.
The spirit in whose honour shrines are weak.
Uprear'd of human hards."

तस्यामेव वेलायां सञ्चरन्तो वयं नीलाचलसम्बन्धिनीं पौराणिकीं कथां जल्पयामासिम। पुरा किलावन्तीनगर्य्यामश्मचित्तो नाम कश्चिद् ब्राह्मणदारको बभूव। स तु बाल्य एव वयसि विनाकृतो मातापितृभ्यामुन्मार्गतां गतश्चौरैः सार्द्धं चोरयितुकामः मायापुर्य्या-मुपाययौ। अश्मचित्तस्तु तस्मिन्नेव मायाक्षेत्रे ऋषिमुखात् क्षेत्रस्य माहात्म्यादिकं श्रुत्वा धूतपापः परं निर्वेदं प्राप्य केनापि मिषेणापर-तस्करेभ्यो गृहीत्वा विदायमृषिजनसन्निधावेव जगाम। तैरेवोपदिष्टः अस्मिन् नीलपर्वतान्तिके तपस्तप्त्वा प्रीणयित्वा च देवादिदेवं महेशं प्रमथेश्वरतां लेभे। तदाप्रभृति पर्वतोऽयं नीललोहिताद्रिनाम्ना-

नीलाचल इति ख्यातो बभूव। अत्र तु स्नानमात्रेण महत् पुण्यं भवतीति शिववाक्यं तद्यथा स्कान्दे ;—

"गङ्गातीरे महत् कुण्डं वर्त्तते मम सर्वदा।
तत्रापि स्नानमात्रेण मम रूपी न संशयः॥"

तदास्माभिरिदं कल्पितमस्ति को नाम प्रभावातिशयपुण्य-क्षेत्राणां यत्तेषु स्नानमात्रेणैव महापुण्यसञ्चयो भवेदिति। एवं-प्रकाराः बहवः श्लोकाः सन्ति पुराणशास्त्रादिषु यैरिदमेवोपदिष्टं यत्तीर्थविशेषेषु स्नानादिमात्रेणैव पाप्मानः सर्व एव क्षयं यान्ति। नव्यास्तु इमान् श्लोकानलीकाननर्थमूलांश्चेति नाद्रियन्ते। परं शास्त्राण्यालोच्येदमेवानुमीयते यच्छास्त्रकाराः खलु इमान् श्लोकान् प्राकृतजनहितार्थायैव रचितवन्तः। तीर्थयात्रादिमात्रकेण सर्वेषा-मेव पापसंक्षयो भवतीति तेषां न युक्तिः। तीर्थादिस्नानमात्रेणान्त-र्मलविनाशो न भवतीति तेषां युक्तिरेव। तद्यथा मनुः—

"अद्भिर्गात्राणि शुध्यन्ति वचः सत्येन शुध्यति।
विद्यातपोभ्यां भूतात्मा मनः सत्येन शुध्यति॥"

उक्तञ्चापि श्रीमद्भागवते।

"यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः।
यत्तीर्थबुद्धिश्च जले न कर्हिचित् जनेष्वभिज्ञेषु स एव गोखरः॥"

तथाहि रघुनन्दनधृताह्निकतत्त्ववचने ;—

"शौचन्तु द्विविधं प्रोक्तं वाह्यमाभ्यन्तरन्तथा।
मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धिस्तथान्तरम्॥
गङ्गातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः।
आ मृत्योः स्नातकश्चैव भावदुष्टो न शुध्यति॥"

इत्यादिभिर्बहुभिः श्लोकैरिदमेवानुमीयते यदस्ति महदन्तरं खलु वाह्याभ्यन्तरशौचयोस्तथा तीर्थस्नानादिमात्रेणान्तरं शौचं न जायते अतो मुक्तिरपि न लभ्यत इति। . .

तीर्थस्नानादिश्रुतिप्रतिपादकानां ग्रन्थानां सैव युक्तिर्दृश्यते।

पूर्वोक्तस्कन्दपुराणान्तर्गते नीलाचलमाहात्म्येऽपि दृश्यते यत् स्नानमहिम्नैव द्विजस्यात्मचित्तस्य पापानि सर्वाण्येव क्षयं गतानि। पापक्षयात्मनःशुद्धिमन्तरेण केवलं तीर्थदर्शनस्नानादिनैव पुण्यसञ्चयो न भवतीति सतां युक्तिः। परं यद्दृश्यते स्नानादिना पापक्षयकारित्वं तीर्थस्य तद्धि पुण्यक्षेत्राणां प्रभावातिशयद्योतनार्थमेव। प्रभावातिशयात् पुण्यक्षेत्राणां दर्शनादिमात्रेणैव मनः कलुषतां जहाति, जायते च तस्मिन् पाप्मनि निर्वेदः। शरीरमनसोस्तादृगेव निकटतमः सम्बन्धः यद् यद्धि शरीरस्येन्द्रियाणाञ्च सुखकरः असुखकरो वा तद्धि अस्माकं मनसि वपुषि मुखमण्डले च स्फुटमेव प्रतिभाति। अनेनैव हेतुना मन्ये इंलण्डीय कविना ओयार्डस् ओयार्थेन तस्य लुसीति नाम धेयायाः मानस्याः कामिन्याः शरीरमनसोर्गठने तारकादिनैसर्गिकव्यापाराः शिक्षयितार एव नियुक्ताः। उक्तञ्चापि तेनैव कविना यल्लुस्याः श्रीसम्पादने मधुरकल्लोलिन्यः गिरिनिर्झरिण्य एव शिक्षयित्र्यः भवितार इति। तद्यथा ;—

"—and she shall lean her ear.
In many a secret place.
Where rivulets dance their wayward round.
And beauty born of murmuring sound.
Shall pass into her face."

संस्कृतकाव्यनाटकादिषु किं बहुना, पुण्यक्षेत्राणामृषितपोवनानां च जनचेतसि शमादिगुणकारित्वं, हिंस्रश्वापदकुलेषु तथा वृक्षलतादिषु च तेषां प्रभावातिशयो दर्शितः। तद्यथा कुमारे।

"विरोधिसत्त्वोज्झितपूर्वमत्सरं द्रुमैरभीष्टप्रसवार्चितातिथिः।
नवोटजाभ्यन्तरसम्भृतानलं तपोवनं तच्च बभूव पावनम्॥"

सन्त्येवंविधानि पुण्यक्षेत्राणि येषां दर्शनमात्रेणैव पापक्षयो भवेत्। उक्तञ्चापि काशीखण्डे ;—

"यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः।
तथा पृथिव्यामुद्देशाः केचित् पुण्यतमाः स्मृताः॥
प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसा।
परिग्रहान्मुनीनाञ्च तीर्थानां पुण्यता स्मृता॥"

तीर्थञ्चापि मानसभौमादिभेदेन द्विविधम्। मानसं यथा ;—

"सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः।
सर्वभूतदया तीर्थं सर्वत्रार्जवमेव च॥
दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते।
ब्रह्मचर्य्यं परं तीर्थं तीर्थं चाप्रियवादिता॥
ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम्।
तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा॥"

यः खलु मानसेषु भौमेषु वा तीर्थेषु स्नाति स परां गतिं लभते इति शास्त्रं। तद्यथा ;—

"उभयेष्वपि यः स्नाति स याति परमां गतिम्।"

तीर्थादिदर्शनादेव जनानां पापसंक्षयो भवितुमर्हति, परं ये खलु अतिकठोराः पापात्मानस्तेषां न तथा जायत इति। मनःशुद्धि-मन्तरेण तीर्थफललाभासम्भवात्। तद्यथा मत्स्यसूक्ते ;—

"चित्तमन्तर्गतं दुष्टं तीर्थस्नानेन तस्य किम्।
शतशोऽपि जलैर्धौतं सुराभाण्डमिवाशुचि॥"

उक्तञ्चापि ज्ञानसङ्कलिनीतन्त्रे ;—

इदं तीर्थमिदं तीर्थं भ्रमन्ति तामसा जनाः।
आत्मतीर्थं न जानन्ति कथं मोक्षो वरानने॥

तथाहि योगिनी तन्त्रे ;—

"न तीर्थानि न दानानि न व्रतानि न चाश्रमाः।
दुष्टाशयं दुष्टमतिं पावयन्ति कदाचन॥"

पापात्मनां तीर्थफलभागित्वं न प्रतिपादितमपि काशीखण्डे। तद्यथा ;—

"यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते॥
प्रतिग्रहादुपावृत्तः सन्तुष्टो येन केनचित्।
अहङ्कारविमुक्तश्च स तीर्थफलमश्नुते॥
अदाम्भिको निरारम्भो लघ्वाहारी जितेन्द्रियः।
विमुक्तः सर्वसङ्गैर्यः स तीर्थफलमश्नुते॥

अक्रोधनोऽमलमतिः सत्यवादी जितेन्द्रियः ।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥
अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः ।
हेतुनिष्ठश्च पञ्चैते न तीर्थफलमश्नुते ॥"

तीर्थादेश्चित्तशुद्धिप्रदायकत्वात् तीर्थकृतपाप्मनः सातिशयविषमयत्वं प्रतिपादितं शास्त्रेषु । यत्तु तीर्थस्नानादिफलश्रुतिकथनं तद्धि प्राकृतानामुपकारायैव । यतस्तेषां ज्ञानराहित्यात् स्थानमाहात्म्यमन्तरेण चित्तशुद्धेरसम्भवात् । ये खलु आत्मतत्त्वज्ञा न येषां तीर्थयात्रादिकं कार्य्यमकार्य्यं वा । तेऽपि प्राकृतजनानुग्रहाय तीर्थयात्रादिकमाचरन्ति । शिष्टञ्चेदं भगवता श्रीकृष्णेन गीतायाम्

"सक्ताः कर्म्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्य्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ॥"

अतो यदुच्यते आधुनिकैस्तीर्थयात्रादेर्निष्फलतां प्रतिपादयद्भिस्तन्न समीचीनमिति मन्यामहे वयम् । तीर्थयात्रादेः पूर्वोक्तानेकविध श्रेयःसाधनत्वात् ।

तीर्थानां पापनाशित्वमेवमनुस्मरन्तो वयं कनखलयायिना वर्त्मना वासाभिमुखं चलितुमारेभिमहि । कनखलो हि अतीव प्राचीनः सुपुण्यदश्च तीर्थः कनखलस्य नाम श्रुत्वैव कनखलसम्बन्धिनी मेघदूतपदावली आविरभूत्मे चेतसि ;—

"तस्माद्गच्छेरनु कनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ॥
गौरीवक्त्रभ्रुकुटीकुटिलं या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥"

तस्य तीर्थस्य सुपुण्यदत्वे प्रमाणं यथा स्कान्दे ;—

"गङ्गाद्वारे कुशावर्त्ते नीलके विल्वपर्वते ।
स्नात्वा कनखले तीर्थे पुनर्जन्म न विद्यते ॥"

कनखल इति नाम्नः कारणं यथा स्कान्दे ;—

"खलः को नाम मुक्तिं वै भजते तत्र मज्जनात्।
अतः कनखलं तीर्थं नाम्ना चक्रुर्मुनीश्वराः॥"

कनखलो हि अधुना समृद्धो जनपदः अस्यैवान्तिके अस्त्येकं महद्-यन्त्रकम्। यद्धि इंरेजबुद्धिकौशलात् भागीरथीस्रोतोरयेणैव चाल्यते। मानुषादिभिरचालितान्यपि यन्त्रस्य बृहन्ति चक्राणि महारवं कुर्वन्ति। अविश्रान्तमहोरात्रं चलन्ति चूर्णयन्ति च गोधूमांश्चान्यांश्च शस्यसमूहान्।

ततस्तस्मात् प्रदेशात् प्रतिनिवृत्य वयं विल्वकेश्वरदर्शनं कृत्वा निमज्य च गङ्गाम्भसि आवासं प्रतिनिवृत्ताः। कियद्दिनं तस्यामेव पुण्यभूमौ स्थित्वा हृषीकेशाद्यनेकदुर्गमतीर्थवार्त्तामाकलय्यदुर्गमा-तिशयत्वात्तद्दर्शनसुखवञ्चिताः कतिपयैरेवाहोभिर्वयम् गृहं प्रति-निवृत्ताः। इति

एम, ए, श्रीअक्षयकुमारशर्मठाकुरस्य।

---

## धर्म्मविवेकः

( पूर्वप्रकाशितात्परः )

वामापदः समागत्य प्रणम्य च शिवरामं पार्श्वे स्थितः।

शिवः। वत्स! वामापद! मया च यथाज्ञानं धर्मविवेको विज्ञापितः श्रीमता च सप्रीति समाकर्णितः तत्त्वतोऽवगतश्च। पर-मितः किं श्रोष्यते।

वामा। श्रीमद्भिर्गुरुचरणैरेव भावि वक्तव्यत्वेनानुज्ञातो विशेष-धर्मः श्रोष्यते विविधग्रन्थनिर्णीतः।

शिव। वत्स शृणु तावदादौ विशेषधर्मः यथा,—

सुकेशिरुवाच ।

किं लक्षणो भवेद्धर्म्मः सदा यज्ञादिकाः क्रियाः ।
यमाश्रित्य न सीदन्ति वैदाद्यास्तु तदुच्यताम् ॥

ऋषय ऊचुः ।

देवानां परमो धर्म्मः सदा यज्ञादिकाः क्रियाः ।
स्वाध्याय-वेदवेत्तृत्वं विष्णुपूजारतिः स्मृतिः ॥
दैत्यानां बाहुशालित्वं मात्सर्य्यं युद्धसत्क्रिया ।
विन्दनं नीतिशास्त्राणां हर शक्तिरुदाहृता ॥
सिद्धानामुदितो धर्म्मो योगयुक्तिरनुत्तमा ।
स्वाध्यायं ब्रह्मविज्ञानं भक्तिर्द्वाभ्यामपि स्थिता ॥
उत्कृष्टोपासनं ज्ञेयं नृत्यवाद्येषु वादिता ।
सरस्वत्यां स्थिरा भक्तिर्गान्धर्वो धर्म्म उच्यते ॥
विद्याधरत्वमतुलं विज्ञानं पौरुषे मतिम् ।
विद्याधराणां धर्म्मोऽय भवान्यां भक्तिरेव च ॥
गान्धर्वविद्यावेदित्वं भक्तिः स्थाणौ तथा स्थिरा ।
कौशल्यं सर्वशिल्पेषु धर्म्मः कैम्पुरुषः स्मृतः ॥
ब्रह्मचर्य्यममानित्वं योगाभ्यासरतिर्दृढ़ा ।
शर्वत्र कामचारित्वं धर्म्मोऽयं पैतृकः स्मृतः ॥
ब्रह्मचर्य्यं यताशित्वं जप्यज्ञानञ्च राक्षस ! ।
नियमा धर्म्मवेदित्वमार्षं धर्म्मं प्रचक्षते ॥
स्वाध्यायं ब्रह्मचर्य्यञ्च दानं यजनमेव च ।
अकार्पण्यमनायासं दया हिंसा क्षमादयः ॥
जितेन्द्रियत्वं शौचञ्च माङ्गल्यं भक्तिरुच्यते ।
शङ्करे भास्करे देव्यां धर्म्मोऽयं मानवः स्मृतः ॥
धनाधिपत्यं-भोगानि स्वाध्यायं शङ्करार्च्चनम् ।
अहङ्कारमशौचञ्च धर्म्मोऽयं गुह्यकेष्विति ॥

परदाराभिमर्षित्वं परार्थेऽपि च लौलुपम् ।
स्वाध्यायस्त्र्यम्बके भक्तिर्धर्मोऽयं राक्षसः स्मृतः ॥ *
अविवेकताथाज्ञानं शौचहानिरसत्यता ।
पिशाचानामयं धर्मः सदा चामिष गृध्नुता ॥
योनयस्तु द्वादशैताः सह धर्माश्च राक्षस ।
ब्रह्मणा कथिताः पुण्या द्वादशैव गतिप्रदाः ॥

इति वामनपुराणे ११ अध्यायः ॥

वत्स ! वामापद ! अधुना विष्णुपुराणीयो धर्मो विस्तरात् श्रूयताम् । तथा च तत्र ३ यांशे । ८ माध्याये । २०——

सगर उवाच ।

तदहं श्रोतुमिच्छामि वर्णधर्मानशेषतः ।
तथैवाश्रमधर्मांश्च द्विजवर्य्य ब्रवीहि तान् ॥

और्व उवाच ।

ब्राह्मणक्षत्रियविशां शूद्राणाञ्च यथाक्रमम् ।
त्वमेकाग्रमना भूत्वा शृणु धर्मान् मयोदितान् ॥
दानं दद्यात् यजेद् देवान् यज्ञैः स्वाध्यायतत्परः ।
नित्योदकी भवेद्विप्रः कुर्य्याच्चाग्निपरिग्रहम् ॥
वृत्त्यर्थं याजयेच्चान्यान् अन्यानध्यापयेत् तथा ।
कुर्य्यात् प्रतिग्रहादानं गुर्वर्थं न्यायतो द्विजः ॥ (क्रमशः)

---

* तथा च योगवाशिष्टे वैराग्ये । षष्ठसर्गे ।

षष्ठमी विहिते तस्मिन् माया राक्षसनायकाः । अकिरंस्ते महीं यागे मांसेन रुधिरेण च ॥
अवधूते तथाभूते तस्मिन् यागकदम्बके । कृतश्रमो निरुत्साहस्तस्माद्देशादुपागतः ॥
न च मे क्रोधमुत्स्रष्टुं बुद्धिर्भवति पार्थिव । तथाभूतं हि तत्कर्म न शापस्तस्य विद्यते ॥

तथा च वाल्मीकीये बालकाण्डे १९ सर्गे । ८ ।

"तथाभूता हि सा चर्य्या न शापस्तत्र विद्यते ॥" तथा च भट्टौ ।

आर्त्ता द्विजास् देवयजीन् निहन्मः कुर्मः पुरं प्रेतपुराधिवासम् ।
धर्मो ह्ययं दाशरथे निजो नो नैवाध्यकारिष्महि वेदवृत्ते ॥

## कलापव्याकरणम् ।

कलापव्याकरणमेतदपाणिनीयमिति बौद्धव्याकरणमिति च केचिदल्पश्रद्धां प्रथयन्ति। तत्तु साम्प्रतमसाम्प्रतं वेति किञ्चिदालोचितुमप्यसमुत्सहे। तत्रापि दीपज्ञा एव प्रमाणम्। अस्य च नाम निरुक्तिस्त्रिधा। तथाहि ईषत्तन्त्रत्वात् कातन्त्रम्। कलापस्य कलापिनो मयूरस्य कार्त्तिकेय वाहनस्य सम्बन्धात् कलापं। तथाच कथासरित् सागरे। ७म तरङ्गे। कार्त्तिकेयेनोक्तं।

"अधुना स्वल्प तन्त्रात्वत् कातन्त्राख्यं भविष्यति।
मद्वाहन-कलापस्य नाम्ना कालापकं तथा॥"

एवं कुमारस्य कार्त्तिकेयस्य प्रसादाल्लब्धमिति कौमारमित्यपि कथ्यते।

कातन्त्रव्याकरणमेतत् सातवाहनराजस्य मन्त्री शर्ववर्मा नामषट्केन इमं शिक्षयामीति गुणाढ्येन तस्य द्वितीयमन्त्रिणा सार्द्धं विवदमानो व्यरचयत्। सातवाहनभूपः कदा राज्यमशासदित्युपायो नासाद्यते विशिष्य निर्णेतुम्। परन्तु बुक्कराजस्य प्राक्तन इत्येतावदनुमीयते। बुक्कराजोऽपि पञ्चशतवत्सरात् पूर्व्वतनीन इति सर्वानुमतः प्रवादो जागर्त्ति।

व्याकरणमेतत् पूर्वाचार्य्यैरपि सायनादिभिः प्रमाणितमिति नावज्ञेयं सुधीभिः। रचयिताप्यस्य शर्ववर्मा। असौ तु नार्वाचीनः। चतुर्वेदभाष्यकर्ता सायनाचार्य्येण ऐतरेयारण्यके "कौमारव्याकरणे" इत्युल्लिलिखे। यथा—

"तदा इदं बृहतीसहस्रं सम्पन्नं तस्य यानि व्यञ्जनानि तच्छरीरं यो घोषः स आत्मा य उष्माणः स प्राणः" २आं, २अं, ४र्थ १मन्त्रः।

अस्य भाष्यम्।—"तस्य" बृहतीसहस्रस्य मध्ये "यानि" ककारादीनि "व्यञ्जनानि" सन्ति, तेषु शरीरदृष्टिं कुर्य्यात्। ककारादीनां हलिति पाणिनीयसंज्ञा। व्यञ्जनमिति श्रौतसंज्ञा। तामेवोपजीव्य कौमारव्याकरणे "कादीनि व्यञ्जनानीति सूत्रितम्। यो घोषः" झकार-धकारादिवर्णः "स आत्मा" मध्यशरीरम्। "ये तु उष्माणः" शकार-

चकारादयः, ते शाखवाग्नुस्वरूपाः। घोषीषादिसंज्ञापि कौमारे सूचिता। "वर्गप्रथम-द्वितीयाः शषसाश्चाघोषाः। घोषवन्तोऽन्ये। उष्माणः शषसहाः।" इति।

सायनाचार्य्यस्तु बुक्कमहीपतेर्मन्त्रित्वमध्यास्ते स्म। एष खलु वृत्तान्तः सर्व्वैरेव प्रविदितः। कौमारव्याकरणस्य रचयितुः शर्व्ववर्म्माचार्य्यस्य चरितमद्भुतं गुणाढ्यविरचितस्य पैशाचभाषामयस्य "वृहत्कथा" नामक ग्रन्थस्यानुवादरूपे सोमदेवभट्टविरचिते "कथासरित्सागरेऽपि विस्तृतमस्तीत्यनेनाप्यस्य व्याकरणस्य नार्वाचीनता प्रतीयताम्।

अपि च कथासरित्सागरे चाणक्यस्याप्युल्लेखो दृश्यते यथा—

"क्षितिं खनन्तमद्राक्षीत् चाणक्याख्यं द्विजं पथि।" ५।१०९

एवं तत्रैव अर्जुनात् षष्ठः पुरुषः सहस्राणीको राजावर्णितः। न तत्परेषामश्वमेधजादीनां नामाऽपि दृश्यते। यथा—

"तस्यां राजा शतानीकः पाण्डवान्वयसम्भवः।
जनमेजयपुत्रोऽभूत् पौत्रो राज्ञः परीक्षितः॥ ६॥
अभिमन्युप्रपौत्रस्य यस्यादिपुरुषोऽर्जुनः" ॥ ७॥
"ततस्तस्य सुतो यज्ञे सहस्रानीकसंज्ञकः।
शुशुभे स पिता येन विनयेन गुणी यथा" ॥ ११॥

इति कथामुखे द्वितीयलम्बके।

किन्तु सहस्राणीकस्य परवर्त्तिनाम् अश्वमेधजादीनां नामोल्लेख-स्तत्र नास्तीत्यतोऽनुमीयते चाणक्यमन्त्रिकस्य राज्ञश्चन्द्रगुप्तस्य सहस्रानीकस्य च प्राक्तनकालवर्त्ती समकालवर्त्ती वा शर्व्ववर्म्माचार्य्य इति।

तच्च शर्व्ववर्मचरितं "कथासरित्सागरतः समुद्धृत्याद्य प्रदर्श्यते यथा—कथासरित्सागरे षष्ठतरङ्गे।

"एवमुक्त्वा कथामध्ये काणभूत्यनुयोगतः।
गुणाढ्यः प्रकृतं धीमाननुस्मृत्याब्रवीत् पुनः॥
ततः कदाचिदध्यास्त वसन्तसमयोत्सवे। . .
देवीकृतं तदुद्यानं स राजा सातवाहनः॥

विहरन् स चिरं तत्र महेन्द्र इव नन्दने ।
वापीजलेऽवतीर्णोऽभूत् क्रीडितुं कामिनीसखः ॥
असिञ्चत् तत्र दयिताः सहेलं करवारिभिः ।
असिच्यत स ताभिश्च वशाभिरिव वारणः ॥
मुखैर्धौताञ्जनाताम्रनेत्रैर्जहुर्जलाप्लुतैः ।
अङ्गैः सक्ताम्बरव्यक्तविभागैश्च तदङ्गनाः ॥
विच्छलत्पत्रतिलकाः स चक्रे वनमध्यगाः ।
च्युताभरणपुष्पास्ता लता वायुरिव प्रियाः ॥
तथैका तस्य महिषी राज्ञः स्तनभरालसा ।
शिरीषसुकुमाराङ्गी क्रीडन्ती श्रममभ्यगात् ॥
सा जलैरभिसिञ्चन्तं राजानमसहा सती ।
अब्रवीन्मोदकैर्देव ! परिताडय मामिति ॥
तच्छ्रुत्वा मोदकान् राजा द्रुतमानाययत्तदा ।
ततो विहस्य सा राज्ञी पुनरेवमभाषत ॥
राजन्नवसरः कोऽत्र मोदकानां जलान्तरे ? ।
उदकैः सिञ्च मा त्वं मामित्युक्तं हि मया तव ॥
सन्धिमात्रं न जानासि मा-शब्दोदकशब्दयोः ।
न च प्रकरणं वेत्सि मूर्खस्त्वं कथमीदृशः ॥
इत्युक्तः स तया राज्ञ्या शब्दशास्त्रविदा नृपः ।
परिवारे हसत्यन्तर्लज्जाक्रान्तो झटित्यभूत् ॥
परित्यक्तजलक्रीडो वीतदर्पश्च तत्क्षणम् ।
जातावमानो निर्लक्ष्यः प्राविशन्निजमन्दिरम् ॥
ततश्चिन्तापरो मुह्यन्नाहारादिपराङ्मुखः ।
चित्रस्थ इव पृष्टोऽपि नैव किञ्चिदभाषत ॥
पाण्डित्यं शरणं वा मे मृत्युर्वेति विचिन्तयन् ।
शयनीयपरिन्यस्तगात्रः सन्तापवानभूत् ॥

अकस्मादथ राज्ञस्तां दृष्ट्वावस्थां तथाविधाम्।
किमेतदिति संभ्रान्तः सर्वः परिजनोऽभवत्॥
ततोऽहं शर्ववर्मा च ज्ञातवन्तौ क्रमेण ताम्।
अत्रान्तरे च स प्रायः पर्य्यक्षीयत वासरः॥
अस्मिन् काले न च स्वस्थो राजेत्यालोच्य तत्क्षणम्।
आवाभ्यां राजहंसाख्य आहूतो राजचटकः॥
शरीरवार्त्तां भूपस्य स च पृष्टोऽब्रवीदिदम्।
नेदृशो दुर्मना देवो दृष्टः पूर्वं कदाचन॥
विष्णुशक्तिदुहित्राद्य मिथ्यापण्डितया तथा।
विलक्षीकृत इत्याहुर्देव्योऽन्याः कोपनिर्भरम्॥
एतत्तस्य मुखाच्छ्रुत्वा राजचेटस्य दुर्मनाः।
शर्ववर्मद्वितीयोऽहं संशयादित्यचिन्तयम्।
व्याधिर्यदि भवेद्राज्ञः प्रविशेयुश्चिकित्सकाः॥
आधिर्वा यदि तत्रास्य कारणं नोपलभ्यते॥
नास्त्येव हि विपक्षोऽस्य राज्ये निहतकण्टके।
अनुरक्ताः प्रजाश्चैता न हानिः परिदृश्यते॥
तत् कस्मादेष खेदः स्यादीदृशः सहसा प्रभोः ?।
एवं विचिन्तिते धीमान् शर्ववर्मेदमब्रवीत्॥
अहं जानामि राज्ञोऽस्य मन्युमौर्ख्यानुतापतः।
मूर्खोऽहमिति पाण्डित्यं सदैवायं हि वाञ्छति॥
उपलब्धो मया चैष पूर्वमेव तदाशयः।
राज्ञ्यावमानितश्चाद्य तन्निमित्तमिति श्रुतम्॥
एवमन्योऽन्यमालोच्य रात्रिं तामतिवाह्य च।
प्रातरावामगच्छाव वासवेश्म महीपतेः॥
तत्र सर्वस्य रुद्धेऽपि प्रवेशे कथकमप्यहम्।
प्राविशं मम पश्चाच्च शर्ववर्मा लघुक्रमम्॥ (क्रमशः)

## व्याकरणम् ।

## DERIVO PRIMITIVE WORDS ( योगरूढ शब्दाः )

| *Words.* | *English equivalents.* | *Words.* | *English equivalents.* |
|---|---|---|---|
| हिमकरः शशी, श्वेतभानुः हिमांशुः | moon | अजः ( fem. अजा ) | goat |
| निरधिः, वारिधिः, पयोनिधिः, सागरः | ocean, sea | अम्बुवाहः, अम्बुदः पयोवाहः, तोयदः, जलदः, वारिदः | cloud |
| पङ्कजम्, अब्जम्, कुशेशयम्, सरोजम् | water-lily | चरः | spy |
| भूरुहः, महीरुहः | mushroom | अंशुमाली, सहस्रांशुः | sun |
| | | चक्रवालम् | horizon |

---

## COMPOUND WORDS.

| *Words.* | *English equivalents.* | *Words.* | *English equivalents.* |
|---|---|---|---|
| एकपदे | all of a sudden | पानपात्रम्, पान-भाजनम्, पानभाण्डं | drinking vessel |
| एकैकशः | one by one | युवराजः | prince |
| कथमपि | with great difficulty | वत्सतरी | bull-calf, |
| किमिति | what for | वनदेवता | wood nymph |
| पृषोदरः | air, wind | वेगानिलः | violent gust |
| जलाटनी | leech | स्फटिकमणिः | crystal stone |
| जलाटनः | heron | हेमन्तः | cold, winter |
| जलाष्टकः | shark | पोतभङ्गः | ship wreck |
| तन्तुसारः | bettlenut tree, | पोतरच्चः | rudder |
| पानागारः | tavern | जलाम्बिका | well |
| पानगोष्ठिका, पानगोष्ठी | drink- | तन्तुकीटः | silk-worm |

| *Words.* | *English equivalents.* |
|---|---|
| तन्तुवायः | weaver |
| तन्तुशाला | weaver's workshop |
| पारितोषिकम् | reward |
| पारिपन्थिकः | robber, highway man |
| मणिबन्धः | the wrist |
| मणिमाला | necklace of jewels. |

---

## ENGLISH TO SANSKRIT.

### SUBSTANTIVES (विशेष्यपदानि )

| *Words.* | *Sanskrit equivalents.* |
|---|---|
| Advantage | लाभः, हितम् |
| Adventure | चरितम्, चेष्टितम् |
| Agony | आतङ्कः |
| Ancestral property | पैत्रिकं रिक्थम् |
| Question paper | प्रश्नपत्रम् |
| Arrival | उपस्थितिः |
| Association | संसर्गः, सङ्गः |
| Attachment | अनुरागः, आसक्तिः, प्रणयः |
| Attendant | परिजनः, अनुचरः |
| Avarice | लुब्धता, लोभः |
| Banner | पताका, वैजयन्ती |
| Base | भूमिः |
| Basin | द्रोणी, जलाशयः |
| Bit | शकलम् |
| Cake | अपूपः, पिष्टकम् (:) |
| Change (for the better) | विशेषः, विपर्य्यासः, परिवर्त्तः |
| Citadel | दुर्गम् |
| Class | वर्गः |
| Court | सभा |
| Hall of audience | आस्थानमण्डपः |
| Culprit | अपराधी |
| Current | रयः, वेगः |
| Danger | सङ्कटम्, आपद्, कृच्छ्रम् |
| Deed | चरितम्, चेष्टितम् |
| Delay | विलम्बः, कालातिपातः |

| Words | Sanskrit equivalents. |
|---|---|
| Detail | विशेषः, विस्तरः |
| Dignity | आभिजात्यम्, प्रतिष्ठा गौरवम् |
| Duty | धर्मः कर्त्तव्यम्, करणीयम् |
| Education | अध्यापनम्, शिक्षणम् |
| Emperor | अधिराजः, चक्रवर्त्ती |
| Entreaty | प्रार्थनम् |
| Envy | मात्सर्य्यम् |
| Epithet | विशेषणम् |
| Exertion | परिश्रमः, आयासः |
| Famine | दुर्भिक्षम् |
| Field | क्षेत्रम् |
| Fowler | व्याधः |
| Glory | यशः, उदाहरणम् |
| Gratitude | कृतवेदित्वम्, कृतज्ञता |
| Heretic | पाखण्डः |
| Honesty | आर्ज्जवम्, निष्कापट्यम् |
| House-wife | गृहिणी |
| Humour | छन्दः |
| Independence | स्वातन्त्र्यम्, स्वैराचारः |
| Industry | उद्यमः, कार्य्याभियोग, |

| Words | Sanskrit equivalents. |
|---|---|
| Jaw | दंष्ट्रा, दशनः |
| Majesty | महाराजः, देवः |
| Mass | पटलम्, जालम्, राशिः |
| Merchant | वणिक्, श्रेष्ठी |
| Merit | गुणः, पुण्यम् |
| Morality | नीतिः |
| Noise | कलकलः |
| Number | निकरः |
| Occasion | अवसरः |
| Oration | वाक्प्रबन्धः |
| Owner | स्वामी |
| Painter | चित्रकरः, आलेखकः |
| Plain | समस्थली, समभूभागः |
| Plaintiff | अर्थी, अभियोगकृत, वादी |
| Plaintive cry | आर्त्तस्वरः |
| Pleasure hill | क्रीड़ापर्वतकः |
| Pupil | अन्तेवासी, शिष्यः |
| Rag | चीरं |
| Rogue | धूर्त्तः, जाल्मः, कितवः |
| Self-respect | स्वाभिमानः |
| Sister's husband | भगिनीपति |
| Slaughter house | वध्यगृहम् |
| Student | विद्यार्थी |

| Words | Sanskrit equivalents. |
|---|---|
| Syllable | अक्षरम् |
| Taunt | उपालम्भः |
| Temple, shrine | देवायतनम् |
| Threshold | देहली |
| Power of speech | वाग्विभवः |
| Touch stone | निकषः |
| Tributary prince | सामन्तः करदः |
| Tribute | करः बलिः |
| Troop | सैन्यदलम्, अनीकम् |
| Zeal | भक्तिः, उत्साहः |
| Wretched man | नरापसदः नरहतकः |
| Principal capital | परिपणम् |
| Tutelary deity | कुलदेवता |
| Turn | पर्य्यायः, वारः |
| Umbrella | आतपत्रम् |
| Vernal season, spring | मधुमासः वसन्तः |
| Warning | प्रबोधनम् |
| Want | अभावः |
| Street | परिरथ्या |
| Wages, salary | वेतनम्, वर्त्तनम् |

## ADJECTIVES ( विशेषणानि )

| Words | Sanskrit equivalents. |
|---|---|
| Ancient | पुरातन |
| Astonishing | विस्मयावह, आश्चर्य्यकर |
| Attracted | आकृष्ट, हृत |
| Base | अधम क्षुद्र |
| Carnivorous | क्रव्याद, पिशिताशन |
| Certain | ध्रुव, नियत |
| Charming | रमणीय, सुभग, कान्त |
| Commendable | प्रशस्य, श्लाघ्य |
| Contracted | सङ्कुचित, संपिण्डित |
| Dear | प्रिय, कान्त |

(क्रमशः)

श्रीउपेन्द्रनाथरायः ।

बरिशाल, रायेरकाठि ।

श्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

त्रिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायावलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

## भाषावतरणिका ।

आक्रामतो विष्णुपदं समतः कालाभ्रतो भैरवमत गर्जतः ।
शीत्यान्तराधस्त नु पुष्पवन्तकौ भाद्रे न्यमज्जन्न धरार्णवीचकैः ॥

## उद्भट-श्लोकाः ।

यः पूतनामारणलब्धवर्णः काकोदरो येन विनीतदर्पः ।
यशोदयालङ्कृत एव पातु नाथो यदूनामथवा रघूणाम् ॥२६५॥

माध्वीकं पतितं पिबन्ति मधुपाः गायन्ति पुंस्कोकिलाः
घूर्णन्ते तरवः पतन्ति पथिका मूर्च्छन्ति वीतप्रियाः ।
दोर्मूलं मथनाम्बुजन्मनृपहृशः सिञ्चन्ति चूतद्रुमाः
स्वैरं पल्लवमुद्गिरन्ति सफलाश्चैवं विचित्रा गतिः ॥२६६॥

रे रे दिगम्बर ! पलायसि दूरतस्त्वं शुल्वाराहरणजनभयेन तात ? ।
नवास्ति ते यदि पुनः कथमत्र शङ्का कोऽयं विदग्धनगरे विविधविचारः ॥६७॥

---

२६५। यदूनां नाथः कृष्णः। कृष्णपक्षे पूतनायामारणे लब्धवर्णः विचक्षणः। काकोदरः कालीयनागः। यशोदया मात्रा अलङ्कृतः। रघूणां नाथो रामः। रामपक्षे यः पूतनाला रणे लब्धवर्णः युद्धविशारदः। कु कुत्सितं कं जलं उदरे मध्ये यस्य सः काकोदरः समुद्रः। यशसा दयया च अलङ्कृतः।

२६७। वस्त्रचौरभीत्या पलायितं कञ्चिल्लक्ष्य प्रत्युक्तिरियम्।

रांचिवर्णना ।

यस्मिन् देशे कुक्कुरेति रवः श्रूयते वा कदाचित् ढक्कावाद्यं परिणयदिने का करोतीति प्रसिद्धम् ।
स्त्रीणां सौन्ध्या ललितनयनं दृश्यते वा न किञ्चित् कस्मादस्मान्नरकजिदहं प्रापितः पापदेशम्॥१

श्रीविधुभूषणदेवः । (रांचि)

## शिवस्तोत्रम् ।

( पूर्वप्रकाशितात् परम् । )

*  *  *  *
*  *  *  *

दुःखाभिघातिन् विपदां विनाशिन् सम्पत्तिदायिन् निजभक्तरक्षिन् ।
दीनार्त्तिहारिन् नरकप्रणाशिन् संसारतारिन् भगवन् प्रसीद ॥१८॥
गङ्गाप्रवाहिन् गजचर्मचेलिन् नगेशशायिन् त्रिपुरप्रमाथिन् ।
दक्षाङ्गघातिन् क्रतुनाशकारिन् शूलिन् पिनाकिन् भगवन् प्रसीद॥१९
दयाम्बुमूर्त्ते शशिखण्डमौले हे धूर्जटेऽष्टप्रकृते गजारे ।
त्रायस्व मां पाहि गिरीश रक्ष भवान् हि भव्यं विदधातु शश्वत्॥२०॥
यद्यप्ययोग्योऽस्मि भवद्दयायास्तथापि भूतेश कृपां कुरुष्व ।
पुत्रे कुपात्रेऽप्यपराधयुक्ते करोति हि प्रेम पिता स्वभावात् ॥ २१ ॥
कृता न देवद्विजतीर्थसेवा न धर्मतत्वादि-विचारणापि ।
परं शरण्यो भगवान् महेशः श्रुत्वेत्यहं ते शरणं समीये ॥ २२ ॥
यद्धर्मनिष्ठं द्विजदेवभक्तं सुकर्मिणं रक्षसि नो विचित्रम् ।
मन्ये यदा मां गुणकर्महीनं दयार्द्रचेताः प्रदयिष्यसे त्वम् ॥ २३ ॥
अतो भवन्तं करुणानिधानं याचेऽति दीनो गुणकर्महीनः ।
ममापराधान् कृपया क्षमस्व यतोऽस्म्यहन्ते शरणं समेतः ॥ २४ ॥
पापोपि नीचोपि जनोऽतिदीनः सद्धर्मविद्यागुणकर्महीनः ।
शम्भवत्वन्नामजपात् स्वरेति किं दुर्लभं ते शरणं गतस्य ॥ २५ ॥
नाहं समर्थोऽस्मि महामहिम्नः कर्त्तुं स्तुतिं देव तव प्रकर्षात् ।
ब्रह्मादयोऽपीश न शक्नुवन्ति तत्तुच्छबुद्धिः किमहं वराकः ॥ २६ ॥
इत्थं मया तेऽङ्घ्रि युगे निवेदितं प्रभोर्दयालोः कृतगर्ह्यवृत्त्या ।
स्वनाटकीं चिन्तयतोऽस्वभावां बाधां कृताधोगतिवर्द्धमानाम् ॥ २७ ॥
जय जय मृड शम्भो चन्द्रमौले गिरीशधृतकरवरशूलोत्तुङ्गचण्डाट्टहास ।
सविनयनयदक्षं धर्मतो जीवनं चेत् त्रिनयन हर चित्रं किं त्वदीये प्रसादे२८

अभ्यर्थनास्तोत्रमिदम्पुरारेः नित्यं पठेद्यः प्रयतः प्रभाते ।
शम्भोः प्रसादात्तु भवेत् स दुःखी लभेत चित्तेप्सितमर्थजातम् ॥२९॥
अमृतसरः पुरवासी विद्यानिधिबुलाकीरामः शास्त्री ।
भगवच्छशाङ्कमौलेः प्रार्थनास्तोत्रं चकारेदम् ॥ ३० ॥

इति श्रीशिवप्रार्थनास्तोत्रं सम्पूर्णम् ।

पण्डितः श्रीबुलाकीरामशास्त्री विद्यानिधिः
एम्, बी, कालेज, अमृतसर, पञ्जाब ।

---

## कल्पना ।

हे कल्पने ! मानस-राज्यदेवि ! त्वत्सेवकानां हृदयेषु नित्यम् ।
तमो निकृत्योज्ज्वलचन्द्रिकाभिः प्रदर्श्यतां रम्य पदार्थसार्थः ॥ १ ॥
अस्मिन् सुशान्तिप्रदवस्तुसंघे तिष्ठत्यपि त्वं परियाचनीयः ।
अङ्गेषु सत्सु प्रथितेऽन्तरीक्षे द्रष्टुः सुलभ्यो रुचिरः सुधांशुः ॥ २ ॥
छायाप्रधानद्रुममूलदेश-शिलासनस्थोऽपि तव प्रसादात् ।
सुखीभवेत् हर्म्यसुवर्णशय्याधिष्ठ त्वया हीन मसंभ्यतीत्य ॥ ३ ॥
का कः कवि स्त्वां सरले ! शुभाभे ! देवीमिवासौ न समर्चतीह ?
के वा सदा नो जननीमिव त्वामुपासते कौतुकहृष्ट चित्ताः ? ॥४॥
त्वमेव सम्पन् महती कवीनां, कवित्वमप्यत्र शुभे ! त्वमेव ।
त्वमेव सारो, हृदयन्त्वमेव मानो यशः शान्तिसुखे त्वमेव ॥ ५॥
स्वर्गेषु चेतःसु महाकवीनां मन्दाकिनी त्वं ; सुखशान्तिहेतो !
मनोऽन्तरीक्षे रुचिरे प्रदीप्तः क्षपापतिः पूर्णकलस्त्वमेव ॥ ६ ॥
रसज्ञसार्थः कृपया भवत्याः पर्णालयस्थोऽपि दिवः सुखानि ।
विन्देत ; शाकाशनजीविकोऽपि लक्ष्मी-सुपक्वान रुचिं स्वदेत ॥७॥
त्वमत्र चेदङ्घ्रिरजो धरायां नैवाक्षिपस्तन् मनुजः परीक्षम् ।
अतः कथं ज्ञातुमहो ! गुहास्थं प्रभां विना नेच्छत एव रत्नम् ॥८॥
तव प्रसादो मधुरः सुखेन निशश्चुपो दर्शयितुं क्षमेत ।

दिव्यान् पदार्थानऽपि कर्णहीनान् वीणा-ध्वनिं श्रावयितुञ्च नूनम् ॥९॥
याहस्वरूपां भवतीमवाप्य कवीरसज्ञः सहसा कदापि।
विष्णोः पुरं चन्द्रपुरं, कदापि गच्छेद्विमानाममरावती न्ताः ॥१०॥
तव प्रसादात् कवयः कदापि रसाप्लुता नन्दनकाननन्तत्।
प्रविश्य ह्र्षोत्तरमिन्द्रियाणां भजन्ति सार्थक्यमिहीश्वस्य ॥११॥
ऋते कृपायास्तव मानवः किं कविः स्वतन्त्रो भवतीतरस्मात्।
जन्तोः ? सहस्रांशुकरं विनाहो किं शारदम्पद्ममपीह भाति ? ॥१२॥
हे कल्पने ! माममरावतीन्तां द्रुतायते प्रापय यत्र नूनं।
मन्दाकिनी-मन्दतरङ्ग जातप्रकम्पित-स्वर्णपयोजमास्ते ॥१३॥
यन्निर्जराणामपि सुन्दरीणां ह्रासैर्विधौतं चरणाञ्ज पूतम्।
यत्रोर्वशी पुष्पशरान्तरीचे विराजते पूर्णकलः शशीव ॥१४॥
तिलोत्तमाविश्वविमोहरम्या रम्भा कलापि श्रवणे सुराणाम्।
निरस्तपीयूषभराणि यत्र क्षिपन्ति गीतानि सुखश्रवाणि ॥१५॥
कूजन्ति रात्रिन्दिवमत्ररम्याः सुखं विहङ्गाः मधुपाः समन्तात्।
भ्रमन्ति, गायन्ति पिकाः सुकण्ठाः रसाल पुष्पावलिमानिपीय ॥१६॥
प्रफुल्लपुष्पोज्झत सौरभन्तं विचुम्बित-स्वःसरिदम्बुवीचिः।
धीरः समीरः सततं विकीर्य्य वसन्तशोभामिह दर्शयेत ॥१७॥
प्रफुल्लपुष्पा इह पारिजाताः, प्रभाभियुक्ता नवकल्पवृक्षाः।
विकाशि-राजीव-विहङ्गजात-रम्याणि राजन्ति चिरं सरांसि ॥१८॥
दलन्ति पुष्पाणि चिरं सुखानि, चरन्ति रोलम्बरुतानि यत्र।
गायन्ति चूतेषु पिकाः प्रमोदं भ्रमन्ति रम्या विहगाः सदैव ॥१९॥
(कुलकं)

त्वमेव पीयूषसरः सरोजं, सरोजपङ्क्तेर्मकरन्द सारः।
सुखञ्च शान्तिश्च धनञ्च मित्रं त्वमेव लोकस्य समर्चनीया ॥२०॥
त्वं शारदी पार्वणयामिनीयं तत्रापि चन्द्रः खलु निष्कलङ्कः।
तस्मिन् सुधा देव-सुखोपभोग्या, तत्रैव सारः सुखशान्ति हेतुः ॥२१॥

हे कल्पने ! ते कवयो भ्रमन्ति रसातले खे भुवि च क्षणेन ।
पाताल कूपस्थितरत्न राशीन् पश्यन्ति च त्वत्-कृपया सुखेन ॥२२॥
न गन्तुमीशो बलवान् समीरो न याति यस्मिन् द्युमणेर्मरीचिः ।
मनोऽपि यत् स्प्रष्टुमहो ! न शक्तं तत्रापि देवी भवती क्षणेन ॥२३॥
तव प्रसादात् कवयो महेन्द्रं निजासनात् पातयितुं समर्थाः ।
भिन्दन्ति नाकं, सुसुखं चरन्ति रुन्धन्ति वायुं, जलधिं तरन्ति ॥२४॥
त्वन्देवलोकस्य सदा पवित्र-प्रमोदपुञ्जं परिदर्श्य पुंसः ।
करोषि शान्तान्, नरकं प्रदर्श्य कृतान्तलोके विदधासि भीतान् ॥२५
हे कल्पने ! स्मिन् सरसे वसन्ते कृष्णः स्वयं गोपविलासिनीभिः ।
यत्रैव नृत्येच्च सुनर्त्तयेच्च तं गोकुलं प्रापय मां क्षणेन ॥२६॥
शुभङ्करि ! त्वं व्रज देवि ! लङ्कां यत्राकृते सङ्गर एव रामः ।
कालेऽपरस्मिन्नऽपि शारदारविन्दप्रभां पूजयतिस्म दूर्गां ॥२७॥
सीता सती यत्र सती धरित्रीमाप्लावयन्ती दिवसन्निनाय ।
शोकाश्रुभिः द्रष्टु महन्त्वशोकवनन्तदिच्छामि विशोकहेतुम् ॥२८॥
क्षेत्रं कुरोर्दर्शय दृश्यमुख्यं यस्मिन्नहो ! भारतवीरवर्गः ।
परस्परं तीक्ष्णशिलीमुखेन हतः शयानो निमिमील चक्षुः ॥२९॥
पवित्र चारित्रविभूषितोऽसौ भीष्मो निजेच्छा-मरणोऽपि यत्र ।
दृढां प्रतिज्ञां प्रतिपाल्य नित्यं शस्त्रं परित्यज्य चिरं स्म शेते ॥३०॥
यत्राभिमन्युन्ननु सप्तभिस्तं तीक्ष्णायुधैस्तैरथिभिर्विनाश्य ।
वीरास्यजाले युगपद्दनाभः कलङ्कराशिः परिकीर्य्यते स्म ॥३१॥

(गुणवती)

देवि ! त्वया मां करुणालवेन विधाय पृष्ठानुचरं सुशीघ्रम् ।
अच्छोदतीरं सरसं प्रकृत्याः गम्येत रम्यञ्च भयङ्करञ्च ॥३२॥
सुनील-सुस्निग्ध-नितान्तसान्द्रपत्रावृता भूमिरुहा लताश्च ।
शिरः समुन्नीय सदैव यत्र विचिन्तयन्तीव हरिं परेशं ॥३३॥
यदम्बु पद्मानि तरङ्गसङ्गाद्द्रष्टुमनः सादरमाहरन्ति ।

यस्मिन् स्रवत्-सारस-चक्रवाक-हंसादयः सप्रमदं भ्रमन्ति ॥३४॥
यत्पश्यतां शान्तिमयं मनांसि हृत्यन्तमगाप्य पुनः पुनस्तत् ।
द्रष्टुं समिच्छन्ति, कदापि तस्मात् निवृत्ति मायान्ति न तानि नूनम्॥३५॥
क्वैव दुःखाश्रुविभूषितां महाश्वेतां सतीं मूर्त्तिमतीं दयामिव ।
सम्पश्यतः कस्य नु दृष्टितो ननु कीलालधारा भिनिपपात न स्वतः ॥३६॥
(कुलकम् ।)
सुमेरुशृङ्गं नय मां शरण्ये ! यत्राभितो रत्नकुलानि भान्ति ।
देवाश्च देव्यश्च सदा रमन्ते विहाय देवालयमप्यनन्ताः ॥ ३७ ॥
हिमालयं दर्शय नः सुखेन यस्मिन् कुमारी रुचिरापि दुर्गा ।
प्रीत्या च भक्त्या च महेशमाप्तुं तपस्यति स्मा गणित-स्व-पतिम् ॥३८॥
सुरम्यभावावलि-रत्नराजि फलानि निक्षिप्य सुखं कवीनाम् ।
सदा मनोनन्दनकल्पवृक्षोपमे ! पिपासा न निवर्त्तये: किम् ॥ ३९ ॥
अर्क-प्रतप्तः पथिकः सदैव छायान्तरोः, स्वच्छपयः सुपेयम् ।
यथा तृषार्त्तो, भवतीं श्रयामि संसाररोगव्यथितस्तथाहम् ॥ ४० ॥
माता कवीनां भवती समुत्सो मोदस्य, हेतुः परमोत्सवानाम् ।
पूज्या च वन्द्या परिचिन्तनीया शान्तिप्रदात्री सदया द्वितीया ॥४१॥
हे कल्पने ! त्वं शुभभाग्यभाजां चित्तेषु यद्वत् न तथेतरेषाम् ।
सूर्य्यो यथा राजति निर्मलेष्वादर्शेषु तद्वत् समलेषु नैव ॥ ४२ ॥
अन्विष्यसे पूज्यस ईप्ससे च संप्रार्थ्यसे सेव्यस ईक्ष्यसे च ।
तथापि चित्तेषु हि सन्निधानां देवि! त्वमेषां रमसे न किं हा!॥४३॥
अन्यैव दर्शनविदाम्मनसि त्वमम्ब! अन्यैव काव्यविदुषां स-रसि! कवीनां
अन्यैव मङ्गलमयि ! स्मरतां जनानां अन्यैव शिल्पनिपुणत्व-समा-
श्रितानाम् ॥ ४४ ॥

हे कल्पने ! प्रचुरभाग्यविधात्रि ! देवि !
शान्ति-प्रसादपरमप्रमदैकहेतो !
आत्मीयतामिह मनो दवदस्य्मेतत्.
संरक्ष्यतामनुगतार्थिजनस्य नित्यम् ॥ ४५ ॥

वाग्देवता प्रियसखी भवती बभूव,
दैवादसावहह ! पिञ्जर-पक्षि-कल्पः ।
गत्वा क्षयोऽहमभवं. कृपया सुखेन
मां दर्शयेत् प्रतिदिनं भुवनं क्षणेन ॥ ४६ ॥

श्रीअन्नदाचरण तर्कचूड़ामणिः
नोयाखाली सोमपाड़ा ।

---

## सरला ।

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥

एकदा धराया अवसानं गते शिशिरे दोर्दण्डप्रतापे दिवसस्य परिणतिं याते कश्चित् पञ्चविंशतिवर्षदेशीयो यौवने सर्वमनोरमे वर्त्तमानो विन्ध्यस्य सानुदेशम् सान्ध्यसमीरणोपसेवितं विचरन् अबलाजनवदनपयोधरसमुत्थितं कञ्चन रोदनध्वनिमश्रौषीत्। ततस्तस्य मानुषसहभवकुतूहलपरवशस्य तामेव रटनसम्भूतेर्दिशमुद्दिश्य प्रतिष्ठमानस्य काचित् अव्याजमनोहराङ्गी, रुदती निरवशेषं, छिन्दती भरागतशोकाभिभवेन आननकमलविस्रस्तं केशकलापम् उरगविड़म्बिनम्, अनुकुर्वती सततनयनागतवाष्पप्रवाहेण अच्छोदं मानसम् अनेकस्रोतस्वतीकारणं, परिहीनापि धनिजनोचितेन वेशमण्डनादिना रूपिणी विन्ध्याधिष्ठात्री देवी, त्रिलोचनभस्मावशेषं स्मरमनुशोचन्ती भगवती रतिरिव, तरुणी नयनयोः पुरतो निपतिता। आलोक्यैव युवानं तरुणी आकस्मिकव्यसनोपहृतत्रपा ससम्भ्रममागच्छन्ती त्रासगद्गदवाग् एनम् अभिहितवती महाभाग !

न जाने कं भवन्तमवगच्छसि, तथापि नैषाकृतिः व्यभिचरति गुण-मनुरूपमिती च्छाहामि भवन्तमधुनैव मदनुगमनपरं मद्धितायेति। ततस्तामनुगच्छन् नातिदूरमेव पश्चिमे वयसि वर्त्तमानं कञ्चित् नरं नवीनदूर्वादलशयनीये विचेष्टमानं वर्षीयसीञ्च काञ्चन पार्श्व-वर्त्तिनीं तदवस्थां शिलापट्टमधिशयानामद्राक्षीत्। ततः शोक-कुतूहलयोर्मध्यवर्त्तिना यूना कथमेतदिति पृष्टा बाला अविरलमश्रु-मोक्षं कुर्वती अनेकधा आत्मभाग्यं निन्दन्ती तदाननसम्मुखीना प्रत्यवादीत्। श्रूयतां महाभाग! एतावेव मम हतभागिन्या जनयितारौ भूपतेरनयदण्डात् आत्मरक्षार्थिनौ निभृतं देशान्तरं प्रस्थितौ अध्वखेदविनोदनाय विजनेऽत्र तरुपादमूले उपविष्टौ। मया च उपचारार्थमनुसरन्त्या पितरौ क्षुत्परीतावालोक्य प्रत्यासन्न-तरुपाददेशात् किञ्चित् फलमाहृत्य क्षुन्निवृत्तये प्रदत्तम्। अहह, अहमेवंविधा दुष्कृतकारिणी पापीयसी यस्याः सत्कृतमपि दुष्कृ-ताय कल्पते, हिताचरणमपि महदहितम् आवहति। मदाहृतं तत्फलं विषदिग्धम्। भोजनमात्रेण पितरौ दशामेतामापन्नौ। अहो मे कर्मणां विपाकः। यया स्वहस्तेनैव निपातितौ स्वजनयितारौ इत्यभिदधाना सोरस्ताड़ं रोदितुमारेभे। यूनोऽपि तदाकर्णयतो भीतिविस्मयाभ्यामभूत् हृदयं युगपत् वशीकृतम्। सर्वैव तनुः पुलकिता सञ्जाता। प्रसृतश्च सर्वतः शिशिरशीतलः स्वेदलवः। ततो भेषजप्रयोगार्थी यावत् निरूपयति सर्वाङ्गम् तावत् विषं सर्वत्र परिव्याप्तं कृष्णायितानि रोमरन्ध्राणि नीलिमानमापादिता शिराराजी अतिक्रान्ता सर्वप्रतीकारवेला इति व्यलोकयत्।

अथ पितरौ चरमवेला प्रत्यासन्नेत्याकलय्य अभिहितवन्तौ "जाते! मारोदीः। परिष्वजस्व युगपद् आवाम् उभावेव। त्वमे-वावयोराश्वासतन्तुः। महात्मन् परमेशप्रसादात् प्राप्तोऽधुना भवतः समागमः। भवत्सकाशम् आवयोः न्यासः स्थापितः। एषा आवयोः

दुहिता सरला मूर्त्तिमती सरलतेव। अनुगृह्णातु आर्य्यः अस्या ग्रहणेन येनावयोः मरणं वीतचिन्तं भवेत्। वत्से सरले! माविस्मर कदापि जगदीशं दीनबन्धुम्। अनेन प्रत्यासन्नं भवार्णवं तरितुं समर्था भविष्यसि" इति वदतोस्तयोरसवो बहिर्गताः। तदालोक्य हा किमेतदिति कथयित्वा मूर्च्छिता सरला अवनीतले निपतिता। अहो प्रकृत्या दौरात्म्यम्। अत्रापि लज्जालेशविरहितः चन्द्रमाः अशेषकिरणविमण्डितः विलासी रतिपरः आत्मानमुपस्थापितः। समीरणश्च मलयसुरभिलिप्तः विभ्रमिजन इव सर्वतोऽत्र विचरति।

ततः प्रत्यासन्नवापीगर्भात् कुमुदसौरभानुलिप्तं सलिलमानीय सततं परिषिञ्चन् उत्तरीय प्रान्तेन च वीजयन् युवा महतायासेन चिरेण तस्याः संज्ञां प्रत्यनैषीत्। संज्ञां प्रतिलभ्य बाला उन्मत्तेव कदा सोरस्ताड़म् आत्मानम् अवनौ न्यपातयत् कदा वा हा तात! मच्छरण हा अम्ब! मत्कृतप्राणे कुतोऽसि—अहमेव राक्षसी युवयोः विनाशाय जाता। दग्धप्रजापतेरियदेवमन्त्रिमाणे जीवितप्रदाने च प्रयोजनं निष्पन्नं यत् युवयोर्व्यापादनं मयैव कर्त्तव्यम्। स्वयं कृत्वा कमपरं जनं दूषयामि। किं करोमि, कमुपयामि शरणम्। को वा मां पितृघातिनीं करिष्यति दयाम्" इति विललाप। ततः किं कर्त्तव्यविमूढ़ः शोकोपहतहृदयो युवा निरर्थमेनां प्रबोधयितुमारेभे। अनेन शोकदीर्घा अशेषा सा क्षपा प्रभाता।

अथ समागतायामुषसि युवा प्रत्यासन्नतरोः काष्ठमाहृत्य दवेन अनयोः यथार्हं दाहक्रियां सम्पाद्य तरुणीद्वितीयः तस्मात् विजनकान्तारात् निष्क्रान्तो बभूव।

ततः दीर्घं परिश्रमक्लान्तां ताभ्यां दिवावसाने जनपदस्यान्ते कश्चिदुटजः वृजदन्ताधिकृतः समासादितः तत्र आतिथ्यं गृहीतम्।

इति श्रीमद् उपेन्द्रनाथ विरचिता प्रथमा वल्ली।

(क्रमशः)

उपविश्याथ निकटे विनतः स मया नृपः।
अकारणं कथं देव! वर्त्तसे विमना इति॥
तच्छ्रुत्वापि तथैवासीत् स तूष्णीं सातवाहनः।
शर्ववर्म्मा ततश्चेदमद्भुतं वाक्यमब्रवीत्॥
श्रुतिमन्तं मां कुर्विति प्रागुक्तं देव! मे त्वया।
तेनाहं कृतवानद्य स्वप्नमाणवकं निशि॥
स्वप्ने ततो मया दृष्टं नभसश्च्युतमम्बुजम्।
तच्च दिव्येन केनापि कुमारेण विकाशितम्॥
ततश्च निर्गता तस्माद् दिव्या स्त्री धवलाम्बरा।
तव देव! मुखं सा च प्रविष्टा समनन्तरम्॥
इयद्दृष्ट्वा प्रबुद्धोऽस्मि सा च मन्ये सरस्वती।
देवस्य वदने साक्षात् संप्रविष्टा न संशयः॥
एवं निवेदितस्वप्ने शर्ववर्मणि तत्क्षणम्।
मासस्तमौनः साकूतमवदत् सातवाहनः॥
शिक्ष्यमाणः प्रयत्नेन कालेन कियता पुमान्।
अधिगच्छति पाण्डित्यमेतन्मे कथ्यतां त्वया॥
मम तेन विना शोभा लक्ष्मीर्न प्रतिभासते।
विभवैः किं नु मूर्खस्य काष्ठस्याभरणैरिव॥
ततोऽहमवदं राजन्! वर्षैर्द्वादशभिः सदा।
ज्ञायते सर्वविद्यानां मुखं व्याकरणं नरैः॥
अहं तु शिक्षयामि त्वां वर्षषट्केन तद्विभो।
श्रुत्वैतत् सहसा सेर्ष्यं शर्ववर्मा किलावदत्॥
सुखोचितं जनः क्लेशं कथं कुर्य्यादियच्चिरम्?।
तदहं मासषट्केन देव! त्वां शिक्षयामि तत्॥
श्रुत्वैतदसम्भाव्यं तमवोचमहं रुषा।

षड्भिर्मासैस्त्वया देवः शिक्षितश्चेत् ततो मया ॥
संस्कृतं प्राकृतं तद्वद् देशभाषा च सर्वदा ।
भाषात्रयमिदं त्यक्तं यन्मनुष्येषु सम्भवेत् ॥
शर्व्ववर्म्मा ततोऽवादीत् न चेदेवं करोम्यहम् ।
द्वादशाब्दान् वहाम्येष शिरसा तव पादुके ॥
इत्युक्त्वा निर्गते तस्मिन्नहमप्यागमं गृहम् ।
राजाप्युभयतः सिद्धिं मत्वा शस्तो बभूव सः ॥
शर्व्ववर्म्मा चवीहस्तः प्रतिज्ञां तां सुदुस्तराम् ।
पश्यन् सानुशयः सर्व्वं स्वभार्य्यायै शशंस तत् ॥
सापि तं दुःखितावोचत् सङ्कटेऽस्मिंस्तव प्रभो ! ।
विना स्वामिकुमारेण गतिरन्या न दृश्यते ॥
तथेति निश्चयं कृत्वा पश्चिमे प्रहरे निशि ।
शर्व्ववर्म्मा निराहारस्तत्रैव प्रस्थितोऽभवत् ॥
तच्च चारमुखाद् बुद्ध्वा मया प्रातर्निवेदितम् ।
राज्ञे सोऽपि तदाकर्ण्य किं भवेदित्यचिन्तयत् ॥
ततस्तं सिंहगुप्ताख्यो राजपुत्रो हितोऽब्रवीत् ।
त्वयि खिन्ने तदा देव ! निर्व्वेदो मे महानभूत् ॥
ततः श्रेयो निमित्तं ते चण्डिकाग्रे निजं शिरः ।
छेत्तुं प्रारब्धवानस्मि गत्वास्मान्नगराद् बहिः ॥
मैवं कृथा नृपस्येच्छा सेत्स्यत्येवेत्यवारयत् ।
वागन्तरिक्षादथ मां तन्मन्ये सिद्धिरस्ति ते ॥
इत्युक्त्वा नृपमामन्त्र्य सत्वरं सर्व्ववर्म्मणः ।
पश्चाच्चारद्वयं सोऽथ सिंहगुप्तो व्यसर्जयत् ॥
सोऽपि वातैकभक्षः सन् कृतमौनः सुनिश्चयः ।
प्राप स्वामिकुमारस्य शर्व्ववर्म्मान्तिकं क्रमात् ॥
शरीरनिरपेक्षेण तपसा तत्र तोषितः ।

प्रसादमकरोत् तस्य कार्त्तिकेयो यथेप्सितम् ॥
आगत्याथ ततो राज्ञे चाराभ्यां स निवेदितः ।
सिंहगुप्तविशिष्टाभ्यामुदयः शर्ववर्मणः ॥
तच्छ्रुत्वा मम राज्ञश्च विषादप्रमदौ द्वयोः ।
अभूतां मेघमालोक्य हंसचातकयोरिव ॥
आगत्य शर्ववर्माथ कुमारवरसिद्धिमान् ।
चिन्तितोपस्थिता राज्ञे सर्वा विद्याः प्रदत्तवान् ॥
प्रादुरासंश्च तास्तस्य सातवाहनभूपतेः ।
तत्क्षणं किं न कुर्याद्धि प्रसादः पारमेश्वरः ॥

अथ तमखिलविद्यालाभमाकर्ण्य राज्ञः
प्रमुदितवति राष्ट्रे तत्र कोऽप्युत्सवोऽभूत् ।
अपि पवनविधूतास्तत्क्षणोन्नाम्यमानाः
प्रतिवसतिपताका बद्धनृत्या इवासन् ॥
राजार्हरत्ननिचयैरथ शर्ववर्मा
तेनार्चितो गुरुरिति प्रणतेन राज्ञा ।
स्वामीकृतश्च विषये वरुकच्छनाम्नि
कूलोपकण्ठविनिवेशिनि नर्मदायाः ॥
योऽथे चारमुखेन पण्मुखवरप्राप्तिं समाकर्णयत्
संतुष्यात्मसमं श्रिया नरपतिस्तं सिंहगुप्तं व्यधात् ।
राज्ञो त्वामपि विष्णुशक्तितनयां विद्यागमे कारणं
देवीनामुपरि प्रसह्य कृतवान् प्रीत्याभिषिच्य स्वयम् ॥

इति षष्ठः तरङ्गः ।

# सौजन्यमाहात्म्यम् ।

पुरा किल नागपुर पत्तने माधवरावेति ख्यातनामा कोऽपि गृहमेधी, समुपभुक्तानेकराजाधिकारपदोऽनुभूतवैश्रवण समविभवोऽपि कालवशात् सञ्जाताकुञ्चितगौरवश्च कथमपि कालमतिवाहन्निवसति स्म। पूर्वार्जिताशेषवसुव्ययतया स काले नात्येतरपर्य्युन्दञ्चन-भाराक्रान्तो बभूव। तेनापदर्णवनिमज्जितोऽपि स धीरो न तत्याजाबाल्यसम्बर्धिताभिजनवदुचितान् सद्गुणान्। अथ कदाचित् समुपस्थितं तस्य गृहे स्वतनुजन्मनो विवाहकार्य्यम्। तदर्थं स तत्रत्यादेव कस्माच्चिदुत्तमर्णात् पञ्चसहस्रकार्षापणर्णमग्रहीत्। यावत्स उत्तमर्णस्य सदने तत् द्रविणमुपाहरत्। तावत् तत्र तावत्यैव संख्याया धनस्यर्णलेखं गृहीत्वा कोप्यन्यः श्रेष्ठी समागत्यैनं स्वकीयं दत्तपूर्वर्णं ययाचे। तदा विदारितं सहसा चिन्तयास्य हृदयम्। ततोऽतिविनयेन तेन समार्थितः स श्रेष्ठी।

माधव। कृतमृणमिदं मयात्मनः सूनोर्विवाहकार्य्यार्थम्। अतः कृपया नेदानीं त्वयाहं याचनीयः।

श्रेष्ठी। श्रुतं मयैतस्मात् धनाच्चिकीर्षन्ति भवन्तः किमप्यर्णमपि संशोधयितुमिति।

माधव। तदपि नालीकम्। तथापि न मया संशोध्या भवेयुरिदानीं भवादृशा बहुदेया विधृतलिखिताश्च।

श्रेष्ठी। तर्हि केभ्यो दित्सन्ति भवन्तः सांप्रतम्।

माधव। तानहं दित्सुरधुना। न सन्ति येषां सविधे मम लिखितानि। यतश्चञ्चलत्वाच्चायुषोऽहमकृतोद्धार एवामरिष्यं तदा विधृतलिखितास्ते स्वर्णमुपाहर्त्तुमक्षमाऽभवन्।

श्रेष्ठी। अनेनागृहीतलिखिता एव वरमस्मादिति प्रतिभाति। एवं चेत्तर्ह्यहमपि तथैव भवामि। किमनेन रक्षणैकहेतुना लिखितेन।

इत्युक्त्वा तस्य सौजन्यप्रहृष्टाशयः स उत्तमर्णो द्रागेव तल्लिखितर्णपत्रं ददार। अब्रवीच्च तं पुनरिदानीमहमप्यविष्टतलेखः संवृतः। अतो मदीयमप्यर्णं मे तर्हि भवता अपाकरणीयम्। सञ्जातकुतूहलो माधवस्ततस्तस्मिन्नेव क्षणे तदखिलं गृहीतर्णं द्रविणं तस्मै श्रेष्ठिने समर्पयामास सवृजिकम्। अभूच्च स्वतनुजन्मनो विवाहकार्य्यांतराय खेदखिन्नः। श्रेष्ठी च सकलं तद्धनं गृहीत्वा दृष्ट्वा च माधवरावं पर्य्याकुलमानसं तस्य तनयमाकारयत्। आगते च तस्मिन् तनये स्वसुतनिर्विशेषेण प्रेम्णा तं स्वाङ्के निधाय सस्नेहं तस्य हस्ते तदेवाखिलं धनमुपदाह्यमिवार्पयत्। तदा स श्रेष्ठी माधवरावश्च उभावपि परस्परमनवलोकयन्तौ स्नेहभराश्रुपूर्णनयना वधोमुखौ सन्तिष्ठन्तावभूताम्।

श्रीबलवन्त कमलाकरः।

उज्जयिनी।

---

## धर्मविवेके, विशेषधर्मः ।॥

( पूर्वप्रकाशितात्परम् )

सर्वभूतहितं कुर्य्यात् नाहितं कस्यचिद्द्विजः।
मैत्री समस्तभूतेषु ब्राह्मणस्योत्तमं धनम् ॥ २४ ॥
ग्रावे रत्ने च पारक्ये समबुद्धिर्भवेद्द्विजः।
ऋतावभिगमः पत्न्यां शस्यते चास्य पार्थिव ॥ २५ ॥
दानानि दद्यादिच्छातो द्विजेभ्यः क्षत्रियोऽपि हि।
यजेच्च विविधैर्यज्ञैरधीयीत च पार्थिव ॥ २६ ॥

शस्त्राजीवो महीरक्षा प्रवरा तस्य जीविका ।
तस्यापि प्रथमे कल्पे पृथिवीपरिपालनम् ॥ २७ ॥
धरित्रीपालनेनैव कृतकृत्यो नराधिपः ।
भवन्ति नृपतेरंशा यतो यज्ञादिकर्मणाम् ॥२८॥
दुष्टानां शासनाद्राजा शिष्टानां परिपालनात् ।
प्राप्नोत्यभिमतान् लोकान् वर्णसंस्थाकरो नृपः ॥२९॥
पाशुपाल्यं वाणिज्यञ्च कृषिञ्च मनुजेश्वर ! ।
वैश्याय जीविकां ब्रह्मा ददौ लोकपितामहः ॥३०॥
तस्याप्यध्ययनं यज्ञो दानं धर्मश्च शस्यते ।
नित्यनैमित्तिकादीना मनुष्ठानञ्च कर्मणाम् ॥३१॥
द्विजातिसंश्रयं कर्म तादर्थ्यं तेन पोषणम् ।
क्रयविक्रयजैर्वापि धनैः कारूद्भवेन वा ॥३२॥
दानञ्च दद्यात् शूद्रोऽपि पाकयज्ञैर्यजेत च ।
पित्र्यादिकञ्च वै सर्वं शूद्रः कुर्वीत तेन वै ॥३३॥
भृत्यादिभरणार्थाय सर्वेषाञ्च परिग्रहः ।
ऋतुकालाभिगमनं स्वदारेषु महीपते ! ॥३४॥
दया समस्तभूतेषु तितिक्षानभिमानिता ।
सत्यं शौचमनायासो मङ्गल्यं प्रियवादिता ॥३५॥
मैत्रस्पृहा तथा तद्वदकार्पण्यं नरेश्वर ! ।
अनसूया च सामान्या वर्णानां कथिता गुणाः ॥३६॥
आश्रमाणाञ्च सर्वेषामिति सामान्यलक्षणाः ।
गुणांस्तथापद्धर्मांश्च विप्रादीनामिमान् शृणु ॥३७॥
क्षात्रं कर्म द्विजस्योक्तं वैश्यकर्म तथापदि ।
राजन्यस्य च वैश्योक्तं शूद्रकर्म न वै तयोः ॥३८॥
सामर्थ्ये सति तत् त्याज्यमुभाभ्यामपि पार्थिव ! ।
तदेवापदि कर्त्तव्यं न कुर्य्यात् कर्मसङ्करम् ॥३९॥

इत्येते कथिता राजन् ! वर्णधर्मा मया तव ।
धर्ममाश्रमिणां सम्यक् ब्रुवतो मे निशामय ॥४०॥
इति अष्टमोऽध्यायः ।

---

## नवम अध्यायः ।

और्व उवाच ।

बालः कृतोपनयनो वेदाहरणतत्परः ।
गुरुगेहे वसेद्भूप ! ब्रह्मचारी समाहितः ॥ १ ॥
शौचाचारवता तत्र कार्य्यं शुश्रूषणं गुरोः ।
व्रतानि चरता ग्राह्यो वेदश्च कृतबुद्धिना ॥ २ ॥
उभे सन्ध्ये रविं भूप ! तथैवाग्निं समाहितः ।
उपतिष्ठेत् तथा कुर्य्यात् गुरोरप्यभिवादनम् ॥ ३ ॥
स्थिते तिष्ठेत् व्रजेद् याति नीचैरासीत् तथा सति ।
शिष्यो गुरौ नृपश्रेष्ठ ! प्रतिकूलं न सम्भजेत् ॥ ४ ॥
तेनैवोक्तः पठेद्वेदं नान्यचित्तः पुरःस्थितः ।
अनुज्ञातश्च भिक्षान्नमश्नीयाद्गुरुणा ततः ॥ ५ ॥
अवगाहेदपः पूर्वमाचार्य्येणावगाहिताः ।
समिज्जलादिकञ्चास्य कल्यं कल्यमुपानयेत् ॥ ६ ॥
गृहीतग्राह्यवेदश्च ततोऽनुज्ञामवाप्य वै ।
गार्हस्थ्यमावसेत् प्राज्ञो निष्पन्नगुरुनिष्कृतिः ॥ ७ ॥
विधिनावाप्तदारस्तु धनं प्राप्य स्वकर्मणा ।
गृहस्थकार्य्यमखिलं कुर्य्याद् भूपाल ! शक्तितः ॥ ८ ॥
निवापेन पितॄनर्चेत् यज्ञैर्देवांस्तथातिथीन् ।
अन्नैर्मुनींश्च स्वाध्यायैरपत्येन प्रजापतिम् ॥ ९ ॥

बलिकर्मणा च भूतानि वाक्सत्येनाखिलं जगत् ।
प्राप्नोति लोकान् पुरुषो निजकर्मसमर्जितान् ॥ १० ॥
भिक्षाभुजश्च ये केचित् परिव्राट् ब्रह्मचारिणः ।
तेऽप्यत्रैव प्रतिष्ठन्ते गार्हस्थ्यं तेन वै परम् ॥११॥
वेदाहरणकार्य्येण तीर्थस्नानाय च प्रभो ।
अटन्ति वसुधां विप्राः पृथिवीदर्शनाय च ॥१२॥
अनिकेता ह्यनाहारा ये तु सायंगृहाश्च ते ।
तेषां गृहस्थः सर्वेषां प्रतिष्ठायोनिरेव च ॥१३॥
तेषां स्वागतदानादि वक्तव्यं मधुरं नृप ।
गृहागतानां दद्याच्च शयनासनभोजनम् ॥१४॥
अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥१५॥
अवज्ञानमहङ्कारो दम्भश्चैव गृहे सतः ।
परितापोपघातौ च पारुष्यञ्च न शस्यते ॥१६॥
यस्तु सम्यक् करोत्येवं गृहस्थः परमं विधिम् ।
सर्वबन्धविनिर्मुक्तो लोकानाप्नोत्यनुत्तमान् ॥१७॥
वयःपरिणतो राजन् कृतकृत्यो गृहाश्रमी ।
पुत्रेषु भार्य्यां निःक्षिप्य वनं गच्छेत् सहैव वा ॥१८॥
पर्णमूलफलाहारः केशश्मश्रुजटाधरः ।
भूमिशायी भवेत् तत्र मुनिः सर्वातिथिर्नृप ॥१९॥
चर्मकाशकुशैः कुर्य्यात् परिधानोत्तरीयके ।
तद्वत् त्रिसवनं स्नानं शस्तमस्य नरेश्वर ॥२०॥
देवताभ्यर्चनं होमः सर्वाभ्यागतपूजनम् ।
भिक्षाबलिप्रदानञ्च शस्तमस्य नरेश्वर ॥२१॥
वन्यस्नेहेन गात्राणामभ्यङ्गश्चास्य शस्यते ।
तपस्यतश्च राजेन्द्र शीतोष्णादिसहिष्णुता ॥२२॥

यस्त्वेतां निहितश्चर्य्यां वानप्रस्थश्चरेन्मुनिः।
स दहत्यग्निवद्दोषान् जयेल्लोकांश्च शाश्वतान् ॥२३॥
चतुर्थश्चाश्रमो भिक्षोः प्रोच्यते यो मनीषिभिः।
तस्य स्वरूपं गदतो मम श्रोतुं नृपार्हसि ॥२४॥
पुत्रद्रव्यकलत्रेषु त्यक्तस्नेहो नराधिप।
चतुर्थमाश्रमं स्थानं गच्छेन्निर्धूतमत्सरः ॥२५॥
त्रैवर्गिकांस्त्यजेत् सर्वानारम्भानवनीपते।
मित्रादिषु समो मैत्रः समस्तेष्वेव जन्तुषु ॥२६॥
जरायुजाण्डजादीनां वाङ्मनःकर्मभिः क्वचित्।
युक्तः कुर्वीत न द्रोहं सर्वसङ्गांश्च वर्जयेत् ॥२७॥
एकरात्रस्थितिर्ग्रामे पञ्चरात्रस्थितिः पुरे।
तथा तिष्ठेत् यथा प्रीतिर्द्वेषो वास्य न जायते ॥२८॥
प्राणयात्रानिमित्तञ्च व्यङ्गारे भुक्तवज्जने।
काले प्रशस्तवर्णानां भिक्षार्थं पर्य्यटेद् गृहान् ॥२९॥
कामः क्रोधस्तथा दर्प-मोह-लोभादयश्च ये।
तांस्तु दोषान् परित्यज्य परिव्राट् निर्ममो भवेत् ॥३०॥
अभयं सर्वसत्त्वेभ्यो दत्त्वा यश्चरते मुनिः।
न तस्य सर्वसत्त्वेभ्यो भयमुत्पद्यते क्वचित् ॥३१॥
कृत्वाग्निहोत्रं स्वशरीरसंस्थं शारीरमग्निं स्वमुखे जुहोति।
विप्रस्तु भिक्षोपगतैर्हविर्भिः चिताग्निना स व्रजति स्म लोकान् ॥३२
मोक्षाश्रमं यश्चरते यथोक्तं शुचिः स्वसङ्कल्पितबुद्धियुक्तः।
अनिन्धनं ज्योतिरिव प्रशान्तं स ब्रह्मलोकं जयति द्विजातिः ॥३३॥

इति नवमोऽध्यायः।

# दशमोऽध्यायः ।

सगर उवाच ।

कथितञ्चातुराश्रम्यं चातुर्वर्ण्यक्रिया तथा ।
पुंसः क्रियामहं श्रोतुमिच्छामि द्विजसत्तम ॥१॥
नित्यां नैमित्तिकीं काम्यां क्रियां पुंसामशेषतः ।
समाख्याहि भृगुश्रेष्ठ सर्वज्ञो ह्यसि मे मतः ॥२॥

और्व उवाच ।

यदेतदुक्तं भवता नित्यनैमित्तिकाश्रितम् ।
तदहं कथयिष्यामि शृणुष्वैकमना नृप ॥३॥
जातस्य जातकर्मादिक्रियाकाण्डमशेषतः ।
पुत्रस्य कुर्वीत पिता श्राद्धञ्चाभ्युदयात्मकम् ॥४॥
युग्मांस्तु प्राङ्मुखान् विप्रान् भोजयेन्मनुजेश्वर ।
यथावृत्ति तथा कुर्य्यात् दैव्यं पित्र्यं द्विजन्मनाम् ॥५॥
दध्ना यवैः सवदरैर्मिश्रान् पिण्डान् मुदा युतः ।
नान्दीमुखेभ्यस्तीर्थेन दद्याद्दैवेन पार्थिव ॥६॥
प्राजापत्येन वा सर्वमुपचारं प्रदक्षिणम् ।
कुर्वीत तत्तथाऽशेषवृद्धिकालेषु भूपते ॥७॥
ततश्च नाम कुर्वीत पितैव दशमेऽहनि ।
देवपूर्वं नराख्यं हि शर्मवर्मादिसंयुतम् ॥८॥
शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रसंश्रयम् ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥९॥
नार्थहीनं नवाशस्तं नापशब्दयुतं तथा ।
नामङ्गल्यं जुगुप्सं वा नाम कुर्य्यात् समाक्षरम् ॥१०॥
नातिदीर्घं न ह्रस्वं वा नातिगुर्वक्षरान्वितम् ।
सुखोच्चार्य्यन्तु तन्नाम कुर्य्यात् यत् प्रवणाक्षरम् ॥११॥

ततोऽनन्तरसंस्कारसंस्कृतो गुरुवेश्मनि।
यथोक्तं विधिमाश्रित्य कुर्य्याद् विद्यापरिग्रहम् ॥१२॥
गृहीतविद्यो गुरवे दत्त्वा च गुरुदक्षिणाम्।
गार्हस्थ्यमिच्छन् भूपाल कुर्य्याद्दारपरिग्रहम् ॥१३॥
ब्रह्मचर्य्येण वा कालं कुर्य्यात् सङ्कल्पपूर्वकम्।
गुरोः शुश्रूषणं कुर्य्यात् तत्पुत्रादेरथापि वा ॥१४॥
वैखानसो वापि भवेत् प्रव्रजेद्वा यथेच्छया।
पूर्वसङ्कल्पितं यादृक् तादृक् कुर्य्यान्महीपते ॥१५॥
वर्षैरेकगुणां भार्य्यामुद्वहेत् त्रिगुणः स्वयम्।
नातिकेशामकेशां वा नातिकृष्णां न पिङ्गलाम् ॥१६॥
निसर्गतो विकलाङ्गीमधिकाङ्गीञ्च नोद्वहेत्।
नाविशुद्धां सरोगां वा कुलजां वातिरोगिणीम् ॥१७॥
न दुष्टां दुष्टवाचाटां व्यङ्गिनीं पितृमातृतः।
न श्मश्रुव्यञ्जनवतीं नचैव पुरुषाकृतिम् ॥१८॥
न घर्घरस्वरां क्षामवाक्यां काकस्वरां न च।
नानिबद्धेक्षणां तद्वत् वृत्ताक्षीं नोद्वहेत् स्त्रियम् ॥१९॥
यस्याश्च लोमशे जङ्घे गुल्फौ यस्यास्तथोन्नतौ।
गण्डयोः कूपकौ यस्या हसन्त्यास्ताञ्च नोद्वहेत् ॥२०॥
नोद्वहेत् तादृशीं कन्यां प्राज्ञः कार्य्यविशारदः।
नातिरुक्षच्छविं पाण्डुकरजामरुणेक्षणाम् ॥२१॥
आपीनहस्तपादञ्च न कन्यामुद्वहेद्बुधः।
न वामनां नातिदीर्घां नोद्वहेत् संहतभ्रुवम् ॥२२॥
न चातिच्छिद्रदशनां न करालमुखीं नरः।
पञ्चमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् ॥२३॥
गृहस्थस्तूद्वहेत् कन्यां न्याय्येन विधिना नृप।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः ॥२४॥

| *Words* | *Sanskrit equivalents.* |
|---|---|
| Devoted | आसक्त |
| Difficult | दुष्कर, दुःसाध्य |
| Disguised as | वेशं परिदधान |
| Disgusted | निर्विस्म |
| Disloyal | व्यपरक्त |
| Dispelled | निरस्त |
| Divine | दिव्य |
| Doomed by fate | दैवोपहत |
| Due | देय |
| Dull | मन्दबुद्धिः |
| Engrossed | निमग्न, आकुल |
| Extraordinary | अद्भुत, अनन्य-सामान्य |
| Favourite | वल्लभ, प्रिय |
| Fierce | उग्र, भीषण |
| Fierce tempered | कोपन, सुलभकोप |
| Gentle | मृदु, शान्त |
| Helpless | अशरण, अनाथ, दीन |
| Impossible | दुःसाध्य, अशक्य |
| Liberal | वदान्य, त्यागी, उदार |
| Liked | कान्त, अभिमत |
| Love lorn | विधुर |

| *Words* | *Sanskrit equivalents.* |
|---|---|
| Lovely | चारुगात्र, कान्त, सुदर्शन |
| Manifold | नाना, बहुविध |
| Modern | अर्वाचीन, आधुनिक |
| Narrow minded | कृपणमति |
| Noble | कुलीन |
| Old | स्थविर, वृद्ध, प्रवयस पश्चिमे वयसि वर्त्तमानः |
| Perplexing | उद्वेगकारिन् |
| Plaintive | करुण |
| Preferable | श्रेयस्, श्लाघ्यतर, वरं |
| Rather | ईषत्, किञ्चित् |
| Sad | उद्वेगकर, शोकावह, दुःखप्रद |
| Shy | चकित |
| Silken | कौशेय |
| Trodden, trampled down | परिमृदित |
| Very light, easy to digest | परिलघु |
| Slipery, slimy | पिच्छिल |
| Fragile, brittle | भङ्गुर |
| Silent | वाचंयम |
| Shivering | वेपमान |
| Twin | यमज |

# VERBS.

| *Words.* | *Sanskrit equivalents* |
|---|---|
| Answers | प्रतिवक्ति, प्रतिभाषते |
| Approves | अनुमोदते |
| Becomes | अनुरूपं भवति<br>उपपन्नं भवति |
| Befalls | आपतति<br>उपनमति |
| (I) bid farewell | आमन्त्रये<br>आपृच्छे |
| Boasts | श्लाघते, विकत्थते |
| Breaks upon | सन्धिच्छेदं करोति |
| Congratulates | अभिनन्दति |
| Demands | पृच्छति |
| Desists | विरमति |
| Divides | विभजते |
| Drawsnear | प्रत्यासीदति |
| Escapes | निर्गच्छति, निष्क्रामति |
| Fails | विफलीभवति<br>मोघीभवति |
| Finishes | समापयति |
| Getsabroad | प्रसर्पति,<br>प्रकाशतां गच्छति |
| Gives over | समर्पयति |

| *Words* | *Sanskrit equivalents.* |
|---|---|
| Grazes | विचरति |
| Hesitates | आशङ्कते |
| Indicates | द्योतयति |
| Informs | निवेदयति<br>विज्ञापयति |
| Overtakes | आसादयति |
| Pays off | शोधयति<br>निर्यातयति |
| Puts up with | सहते |
| Reaches the ears | श्रुतिपथम्<br>आपतति |
| Has recourse to | अङ्गीकरोति<br>आतिष्ठति |
| Reduces to ashes | भस्मीकरोति<br>भस्मसात् करोति |
| Rises against | अभिद्रुह्यति |
| Wins over | वशं नयति |
| Warns | प्रबोधयति |
| Waits | प्रतिपालयति<br>प्रतीक्षते |
| Shivers | वेपते |
| Offends | अपराध्यति |

# PHRASES AND IDIOMS.

In one's absence—परोक्षे, असन्निधाने ।

Accidentally—दैववशात्, सहसा ।

From the beginning—आमूलात्, आदितः ।

Concerning—अधिकृत्य ।

Inconsultation with—संमन्त्र्य संवाद्य ।

Early in the morning—महति प्रत्यूषे ।

Completely—निःशेषम्, एकान्ततः ।

Certainly—नियतमेव, ध्रुवं, खलु ।

Sole object of love—स्नेहस्य एकायनीभूता ।

As far as possible—यावच्छक्यम् ।

Treading in the foot steps—पदानुसरणं कृत्वा ।

By my own son Bharata I swear—आत्मजेनैव भरतेन शपामि ।

Service is truly called by the wise the dog's office—सेवां कृतधियः स्थाने श्ववृत्तिं विदुः ।

Affection always apprehends mishap to its object—स्नेहः सततं पापाशङ्की ।

The mother and the motherland are more precious than heaven itself—जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ।

He who feels for all creatures as for himself, is the truly wise man—आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः ।

A bad workman quarrels with his tools—निन्दति कञ्चुककारं प्रायः शुष्कस्तनी नारी ।

It is not always easy to find words which are at

the same time both instructive and pleasant—हितं मनोहारि च दुर्लभं वचः।

It is better to roam with wild animals than keep company with foolish men—वरं भ्रान्तं वनचरैः सह न पुनः मूर्खजनसम्पर्कः।

Better a daughter be born than a foolish son—वरं कन्या जाता न च अविद्वान् तनयः।

Oh! the concert has commenced—हन्त प्रवृत्तं सङ्गीतकम्।

Alas! fie upon me, an unhappy being—हन्तधिङ् मामधन्यम्।

A fool only is troubled by love—मूढोहि मदनेन आयास्यते।

The indeclinables (अव्यय) play a very important part in the construction of sentences in sanskrit; we therefore give here the different uses of the most important of them.

## अथ।

It marks the beginning of a statement; as, अथारभ्यते प्रश्नपत्नम् (now begins the question paper). It is used in the sense of 'afterwards', 'then'; as, अथैकदा तद्वनवासिनः सर्वे मृगाः सिंहस्य अन्तिकमागताः (Then one day, all the beasts of the forest went to the lion). It is used in the sense of asking questions; as, अथशक्तोऽसि भोक्तुम्? It is often used in the sense of 'if', 'supposing that' 'in case'; as अथ मरणम् अवश्यमेव जन्तोः (in case, death is certain to befall all animals).

श्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवाद्यैरपि कर्म्माणि कारयन्ती जनानिव ।

मायाबलस्थाते सेयमव्या श्रीशिवसुन्दरी ॥

## भाषावतरणिका ।

अपैति मेघः कृतकृत्य-भृत्यवत्, उपैति तारावरणादभीरुवत् ।

निरेति पाथः सरितोऽपराधवत्, उदेति चन्द्रोऽयमिशे स्वतन्त्रवत् ॥

## उद्भट-श्लोकाः ।

प्रेमालापैः प्रियवितरणैः प्रीणितालिङ्गनाद्यै

र्मन्दाक्रान्ता तदनु नियतं बध्यतामेति वाणी ।

एवं शिवावचनसुधया राधिकायाः सखीनां

प्रीतः पायात् स्मितसुवदनो देवकीनन्दनो वः ॥ २६८ ॥

विज्ञोऽसि त्वं वदसि सततं दीयतां दीयतां मे

दा-धातूनां भवति सदृशं रूपमेतच्चतुर्णाम् ।

दानार्थौ द्वौ द्वयमपि भवेत् पालने खण्डने वा

नो जानीमः कथयति भवान् कस्य धातोः प्रयोगम् ॥ २६९ ॥ *

केचिद्वदन्ति धनहीनजनो जघन्यः केचिद्वदन्ति गुणहीनजनो जघन्यः ।

धीरा वदन्त्यखिलशास्त्रचयं निशम्य नारायणस्मरणहीनजनो जघन्यः ॥२७०॥

पयोद हे वारि ददासि वा न वा त्वदेकचित्तः पुनरेव चातकः ।

वरं महत्या म्रियते पिपासया [illegible] परेषां न करोत्युपासनाम् ॥ २७१ ॥

---

* डुदाञ् दाने । दाण दाने । देङ् दैङ् पालने । दोऽवखण्डने । इति चत्वारो दाधातुगणाः ।

# शिव-स्तोत्रम् ।

विषमोल्वणविषमेव ननु भवान्, पीत्वा लोकं संरक्षितवान् ।
परमोपकृतो हि विषमात्त्व, ! नहि भूवलये त्वत्समकश्च: ॥१॥
मानसजोऽस्मिन् सत्सङ्कल्पं, जगति सदा कुरुते हि विकल्पम् ।
इति तन्नाशं त्वं हर कृतवान्, शङ्करनामातोऽसि नु भगवान् ॥२॥
परमपदं चेदिच्छसि लब्धुं, शक्तो भव योगं प्रारब्धुम् ।
इति निरवधि किं त्वं हर रहसि, शवनिलयस्थ: सन् शिक्षय सि ॥३॥
भस्माधीनं स्यादङ्गमद:, प्रत्याज्योऽतो भो अस्य मद: ।
ज्ञापयितुं सर्वं ननु देहं, भस्मालिप्तं त्वं धरसीह ॥ ४ ॥
कुर्वन्ति जना ये मम यजनं, वृजिनं तेषां तूर्णं गमनम् ।
कुरुते मम संमार्हाल्मेन, प्रकटयसीदं त्वं कार्य्येण ॥ ५ ॥
स्मरति भवन्तं चेत् कोऽपि भवं, भवति कदापि न तस्येह भव: ।
भगवति शङ्कर ! तुष्टे भवति, भवपदभवने स्यात् सिद्धिरिति ॥ ६ ॥
पश्यति सममिह नित्यं सर्वान्, विषमनयन-धरकोऽपीह भवान् ।
वितरत्यभयं भीमोऽपि सदा, तव चरितमहं ज्ञास्यामि कदा ॥७॥
भवभयहरणं शङ्करचरणं, भवतु मदीयं कामं शरणम् ।
विधुशेखरकविरेष हि भक्त: हे हर याचे त्वामासक्त: ॥८॥

श्रीविधुशेखरशर्मण: ।
श्रीयुक्त कथारत्नन्यायरत्नस्यान्ते वासिन: ।
कलिग्राम टोल पोष्ट चाँचल, मालदह ।

---

# धन्याष्टकम् ।

तज्ज्ञानं प्रशमकरं यदिन्द्रियाणां
तज्ज्ञेयं यदुपनिषत्सु निश्चितार्थम् ।

ते धन्या भुवि परमार्थनिश्चिता ये
ह्या शेषा भ्रमनिलये परिभ्रमन्ति ॥ १ ॥
आदौ विजित्य विषयान् मदमोहराग-
द्वेषादिशत्रुगणमाहृतयोगराज्याः ।
ज्ञानामृतं समनुभूय परात्मविद्या-
कान्तासुखा वनगृहे विचरन्ति धन्याः ॥ २ ॥
त्यक्त्वा गृहे रतिमधोगतिहेतुभूता-
मात्मेच्छयोपनिषदर्थरसं पिबन्तः ।
वीतस्पृहा विषयभोगपदे विरक्ता
धन्याश्चरन्ति विजनेषु विमुक्तसङ्गाः ॥ ३ ॥
त्यक्त्वा ममाहमिति बन्धकरे पदे द्वे
मानापमानसदृशाः समदर्शिनश्च ।
कर्त्तारमन्यमवगम्य तदर्पितानि
कुर्वन्ति कर्मपरिपाकफलानि धन्याः ॥ ४ ॥
त्यक्तैषणात्रयमवेक्षितमोक्षमार्गा
भैक्षामृतेन परिकल्पितदेहयात्राः ।
ज्योतिः परात्परतरं परमात्मसञ्ज्ञं
धन्या द्विजा रहसि हृद्यवलोकयन्ति ॥ ५ ॥
नासन्न सन्नसदसन्नमहान्न चाणु-
र्न स्त्री पुमान्न च न पुंसकमेकबीजम् ।
यैर्ब्रह्मतत्त्वकमुपासितमेकचित्तै-
र्धन्या विरेजुरितरे भवपाशबद्धाः ॥ ६ ॥
अज्ञानपङ्कपरिमग्नमपेतसारं
दुःखालयं मरणजन्मजरावसक्तम् ।
संसारबन्धनमनित्यमवेक्ष्य धन्या
ज्ञानासिना तदवशीर्य्य विनिःसरन्ति ॥ ७ ॥

शान्तैरनन्यमतिभिर्मधुरस्वभावै
रैकत्वनिश्चितमनोभिरपेतमोहैः।
साकं वनेषु विजितात्मपदस्वरूपं
शास्त्रेषु सम्यगनिशं विमृशन्ति धन्याः॥ ८॥
अहिमिव जनयोगं सर्वदा वर्जयेद् यः
कुणपमिव सुनारीं त्यक्तुकामो विरागी।
विषमिव विषयान् यो मन्यमानो दुरन्तान्
जयति परमहंसो मुक्तिभावं समेति॥ ९॥
सम्पूर्णं जगदेव नन्दनवनं सर्वेऽपि कल्पद्रुमाः।
गाङ्गं वारि समस्त वारिनिवहः पुण्याः समस्ताः क्रियाः।
वाचः प्राकृतसंस्कृताः श्रुतिगिरो वाराणसी मेदिनी
सर्वावस्थितिरस्य वस्तुविषया दृष्टे परे ब्रह्मणि॥१०॥
इति श्रीमच्छङ्कराचार्य्यविरचितं धन्याष्टकं सम्पूर्णम्।

---

## यौधिष्ठिरी बुद्धिः।

महाभारतीय वनपर्वणि यक्षयुधिष्ठिरयोरनुवादरूपं
प्रश्नोत्तरम्। ३१२ अध्याये।

यक्ष उवाच।

कः आदित्यमुन्नयति? के वा तं परितः प्रचरन्ति? को वा तमस्तं प्रापयति? क्व वा स प्रतितिष्ठति॥ १॥

युधिष्ठिर आह।

ब्रह्म आदित्यमुन्नयति? देवास्तस्य चतुर्दिक्षु प्रचरन्ति? धर्मस्तमस्तं नयति। सत्ये च स प्रतितिष्ठति॥ २॥

यक्ष उवाच। ब्राह्मणाः कथं श्रोत्रियाभवन्ति? कथं वा महदस्तु

विन्दते ? केन वा जनः सहायवान् भवति ? हे राजन् ! केन वा बुद्धिमन्तः स्युः ? ॥ ३ ॥

युधिष्ठिर आह । वेदान् अधीयानाः ब्राह्मणा भवेयुः । तपसा विन्दते ब्रह्म । धैर्य्येणैकेन सहायवान् स्यात् । ब्राह्मणाः पित्रादि-गुरुजनान् क्षत्रियादयस्तु ब्राह्मणान् पित्रादींश्च गुरून् सेवमानाः बुद्धिमन्तः स्युः ॥ ४ ॥

यक्ष उवाच । किं तत्र ब्राह्मणानां देवत्वम् ? कश्च धर्मः सतां सदृशः ? किं वा ब्राह्मणानां नरत्वम् ? किं वैषामसाध्वाचर-णम् ? ॥ ५ ॥

युधिष्ठिर आह । यथाविधि वेदव्रतैवैषां देवभावः । तप एवैषां साध्वाचरणम् । मरणमेव केवलमेषां मनुष्यभावः परनिन्दै-वैषामसाध्वाचरणम् ॥ ६ ॥

यक्ष उवाच । किं क्षत्रियाणां देवत्वम् ? कश्च साधूनामिव ? कश्चैषां मानुषो भावः ? किमेषामसतामिव ॥ ७ ॥

युधिष्ठिर आह । धनुर्वेदनैपुण्यमेषां देवत्वम् । यज्ञ एषां सतामिव । युद्धे भीतिर्मानुषो भावः । शरणागतस्यारक्षणमसाध्वनु-ष्ठानम् ॥ ८ ॥

यक्ष उवाच । यज्ञियमसाधारणं किं साम ? किं यजुर्यज्ञिय-मसाधारणम् ? का का सविशेषा यज्ञं वृणुते ? यज्ञः कां नाति-क्रामति ॥ ९ ॥

युधिष्ठिर आह । प्राणवायुरेव यज्ञियं प्रधानं साम । मन एव यज्ञियमसाधारणं यजुः । ऋगेवा वृणुते यज्ञम् । ऋचमेव नाति-क्रामति यज्ञः ॥ १० ॥　　*　　*　　*　　*

यक्ष उवाच ( मूलम् ) ।

इन्द्रियार्थाननुभवन् बुद्धिमान् लोकपूजितः ।
सम्मतः सर्वभूतानामुच्छ्वसन् को न जीवति ॥ ११ ॥

युधिष्ठिर आह।

देवता पितृभृत्यानां पितॄणामात्मनश्च यः।

न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति॥ १२॥

यक्ष उवाच।

किं स्विद्गुरुतरं भूमेः किं स्विदुच्चतरञ्च खात्।

किं स्विच्छीघ्रतरं वायोः किं स्विद्बहुतरं तृणात्॥ १३॥

युधिष्ठिर आह।

माता गुरुतरा भूमेः खात् पितोच्चतरस्तथा।

मनःशीघ्रतरं वातात् चिन्ता बहुतरा तृणात्॥ १४॥

यक्ष उवाच। कः सुप्तोऽपि न निमीलति? कस्य जातो न कम्पते? कस्य हृदयं नास्ति? का वा वेगेन वर्द्धते॥ १५॥

युधिष्ठिर आह। मत्स्यः सुप्तो न निमीषति। अण्डं जातं न कम्पते। अश्मनो हृदयं नास्ति। नदी वेगेन वर्द्धते॥ १६॥

यक्ष उवाच।

किं स्वित् प्रवसतो मित्रं किं स्विन्मित्रं गृहे सतः।

आतुरस्य च किं मित्रं किं स्विन्मित्रं मरिष्यतः॥१७॥

युधिष्ठिर उवाच।

अर्थः प्रवसतो मित्रं भार्य्या मित्रं गृहे सतः।

आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः॥१८॥

(क्रमशः)

---

## सन्मितम्।

गुरुसदननिवासव्रतं परिसमाप्य यदा लब्धविद्योऽपि युवा संसारमार्गमाक्रमितुं तस्य प्रवेशद्वारे व्यवहारे पदमुपदधाति। तदा क्वचित् सच्छास्त्रचर्चाभिर्मनो विनोदकराणां विदुषांसमाजमवलोक-

यति। क्वचिन्मदिरापानघूर्णितानां द्यूतलब्धलाभहृष्टानां च सङ्गं विलोकयति। क्वचिच्छ्रुतिमधुरालापयुक्तं गानरक्तं जनमनुपश्यति। क्वचिद्दारसुतसुतावियोगविधुराणां नराणां हृदयाकुलकरमार्तरवं शृणोति। क्वचिदपाङ्गभङ्गैरनङ्गरङ्गमाकर्षयन्तीं नवयुवतिं गोचरयति। क्वचिज्ज्वराजर्जरितगात्रमनुकम्पापात्रं स्थविरं नयनातिथिं करोति। क्वचित्परित्यक्ताखिलविषयवासनान् भगवत्पदैकशरणान् साधुगणान् दृष्टिपथं नयति। क्वचित् परस्वापहरणमात्रव्यवसायोद्यतान् वञ्चकानवगमयति। एवं विषमभूतमयस्वरूपं विविधरूपं व्यवहारमवधार्य्य पर्य्याकुलमतिर्भवति। तत्समये तमविदितसत्पथं यथा सन्ति गहनव्यवहारकाननाविरुद्धसञ्चाराः सुहृत्पितृ बान्धवादयः सदसन्मार्गदर्शकास्तथा स एतस्मिन् व्यवहारे सुखं दुःखं वानुभवत्यामरणम्। ऋते व्यवहारविदां सहायात् सर्वथा दुरधिगमा खलु पदपद्धतिर्व्यवहाराटवेरपरिचितानां गमनाय। अतो व्यवहारविदां स्वजनानामभावात् संसारपथं गन्तु मुद्यता यूना प्रथमतः सहायार्थं सन्मित्रान्वेषणपरेण भवितव्यम्।

कोऽपि समुल्लसितचित्तवृत्तिः गृहागतानां ताम्बूलादिभिः सत्कारकारी किञ्चिद्बलशीलः सुशीलः पुरुषो मधुलिड्भिरिव बहुभिर्वाङ्मधुरैर्नरैराक्रम्यते। कतिपयदिवसापगमे तैः सह भवति तस्य सुदृढः परिचयः। जाते परिचये तेष्वेव कस्मिंश्चित् समानधर्म्मिणि मित्रभावोऽपि समुत्पद्यते। वर्द्धतेऽसौ सहासनभोजनशयनादिभिः। रीत्यानया समुपलभ्यन्ते बहवो मित्राणि। दर्शयन्ति ते निजसुखदुःखकरेषु प्रसङ्गेषु महत्तरं हर्षविषादमपि। न परं ते सर्वेऽपि तेष्वेकतमोऽपि वा कोऽपि सन्मित्रशब्देन व्यवहर्त्तुमुचितः। युवावस्थायां सहजसरलस्वभावतया परिचितेषु जनेषु कः पुनः स्नेहयोग्यः पुरुष इति निर्णेतुमसमर्था बुद्धिः। यतोऽपरीक्ष्यैव

कस्मिंश्चिदपि गुणरहिते पुरुषेऽतिसहवासान्मित्रत्वधीरुपजायते। ततो यथा यथाऽसौ तस्य समागमतः क्लेशमनुभवति तथा तथाऽचिरादेव शिथिलतां याति तस्य मैत्री। किमनया मित्रतया? अतः सन्मित्रान्वेषणायादावेव सुविचार्य यत्नो विधेयः।

प्राज्ञोऽपि पुरुषः सर्वथा खलु धृतमित्राज्ञः संव्यवहरति लोके। तथाहि—स अश्वमेकं क्रेतुमीहते तदाश्वपरीक्षणज्ञानलवशून्यस्यापि स्वमित्रस्य मन्त्रादृते न स्वतन्त्रतयाश्वं क्रीणाति। पश्यतानेनैवैकेनापि स्वल्पेनोदाहरणेन प्राज्ञस्यापि मनोवृत्तिमलक्षितं परिवर्त्तयति मित्रमन्त्रशक्तिरिति। यतो व्यवहारे मित्रं किलसमुचितसुखबन्धनं स्वैरविहारिणाम्। अमूल्यमाभरणं संसारस्य। अञ्जनं सद्विचारनिधेः। भाजनं विस्रम्भस्य। भेषजं दुःखरोगस्य। उत्पत्तिस्थानं प्रेम्णः। अवलम्बनं विपदार्णवनिपतितस्य। निदानं प्रपञ्चसुखस्य। अत एवोक्तमभियुक्तैरकृत्रिमसौहार्दं स्वाभाविकं मित्रं न विना भाग्येनोपपद्यत इति।

दृश्यन्ते लोके केऽपि मान्या सौहार्दशून्याऽनन्यावलम्बना मित्रेण विनापि स्वस्यैव पौरुषबलेन संसारभारमुद्वहन्ति। ते भारमात्रैक वाहका न संसारसुखोपभोगिनः। क्लेशमात्रैक फलेऽस्मिन् संसारे जीवितान्तरतुल्येन प्रणयमूर्त्तिना सुहृद्वरेण विना कुतः सुखाशालेशः? यस्य सन्मित्राणि न सन्ति तस्य सुखान्यपि न सन्तीति व्यवहारविदां सिद्धान्तः। परमहो बत सन्मित्रस्य लाभो न स्वल्पनायाससाध्यः। अनेकविधप्रकृतीनां पुरुषाणां सहवासेभ्यः, यथोचितगुणदोषपरीक्षणेभ्यः, स्वभाववैचित्र्यवलामाकलन-पाटवेभ्यः जन्मान्तरार्जितसुकृतसञ्चयेभ्यो वा महता प्रयासेन केनापि सुपुरुषेण सार्द्धं भवति मित्रता। सैव सम्यक् तया वृद्धिमुपगता सौहार्दमारोहति। सुदृढ़े जाते सौहार्दे एकप्राण एव देहद्वयविभक्तः सञ्चरतीव प्रतिभाति। तयोरेव मध्ये वसति मित्रत्वसौहार्दस्थानवद्यम्।

न मित्रं बलवद्दृते उपयुज्यते स्वोन्नत्यै। तत्तु तावत् स्वविचार-कक्षायामेव परिभ्रामयत्यस्मान्। ततः कथं पराधीनकल्याः स्वोन्नतये यतिष्यामहे वयम्? तथाच हीनप्रकृतिरपि नोपयुज्यते मित्रं। तत्तु सर्वथा ऽस्मद्विचाराधीनं तिष्ठति। कथं तस्मात् भवत्यात्मनः समुन्नतिः। अत एवंविधः सुहृदन्वेषणीयः योऽस्मान-मपथात्पराहृत्य सन्मार्गानुगान् कर्त्तुं यतते। योऽस्मान्मन्त्रानुपदिशति व्यवहारे। योऽस्मान् सद्विचारान् शिक्षयति काले। योऽस्माकं सत्कार्यप्रवृत्युत्साहं वर्धयति सुप्रसङ्गे। योऽस्मान् धूर्त-विटशठादीनां जालपाशान्निवर्त्तयति समये। किं बहुनोक्तेन :—

कराविव शरीरस्य नेत्रयोरिव पक्ष्मणी।
अविचार्य प्रियं कुर्यात्तन्मित्रं मित्रमुच्यते॥

राज्ञा भर्तृहरिणा सन्मित्रलक्षणमेवमुक्तं नीतिशतके :—

पापान्निवारयति योजयते हिताय
गुह्यं च गूहति गुणान् प्रकटीकरोति।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः॥

अन्येनापि केनचित् कविनोक्तम् :—

शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः।
दाक्षिण्यं चानुरक्तिश्च सत्यता च सुहृद्गुणाः॥

ईदृग्विधस्य मित्रस्य क्षणलब्धोऽपि समागमो महत्तरं प्रमोदं जनयति चित्ते सहृदयानाम्। नैतस्मादन्यत् किञ्चिदस्ति प्रशस्यतरं सम्पाद्यं विविधवस्तुपरिप्लुते इह जगत्यवश्यलभ्येष्वर्थेषु इति।

(उज्जयिनीनिवासिनः कस्यचित्
अम्बालरितनाम्नः।)

## निद्रा ।

निद्रे ! जगत्यत्र नु ! शान्ति हेतो ! याच्यातियाच्ये ! भवती शरण्या ।
त्वदङ्कमासाद्य भवन्ति नित्यं सुखा निरीहा अपि देहिनोऽमी ॥१॥
रसा विशाला विरसापि शब्दैः क्रोड़ीकृता सापि सुखं भवत्या ।
निःशब्द-निःस्पर्श-निमीलिताक्षी तपस्विनीवातितरां विभाति ॥२॥
प्रमोदवादामितगीतहास-विलाससम्भाषण-नाद-सार्थैः ।
नभोऽपि यो व्याप्तुमलं समीशः स्पर्शाद् भवत्याः प्रलयं स याति ॥३॥
शान्तीश्वरि ! श्रान्तिविदारिणी त्वं नो चेत् जगत्यत्र वनायमाने ।
पादं क्षिपस्याशु, तदा जगत् स्यात् किन्नाम दुःखं, तदहो न वाच्यम्॥४
ऋते मरीचेरिह चित्रभानोः पद्मं यथा ; शीतमरीचियोगात् ।
विना यथा कैरविनी ; तथा त्वां विना जगन्नैव सुशान्तिमेति ॥५॥
रात्रि प्रजायामशुचौ शुचौ च कोटीश्वरे दीनतमा शरे च ।
अनन्तशास्त्राम्बुधिपारसंस्थे मूर्खे च दृष्टिस्तव साम्यमेति ॥६॥
कृपालवात्ते ससमुद्रभूमेः पातेव, पानीय-सुभोज्य-लोपात् ।
कृशोऽपि चिन्तानलदग्धचित्तः क्षणं क्षणं शान्तिसुखं लभेत ॥७॥
हरस्यहो त्वं मृदुपुष्पशय्यामधिश्रितानामिव भावनालिम् ।
छायाप्रधान-द्रुममूलभूमिमधिष्ठितानामपि दुःखराशिम् ॥८॥
परिश्रमध्वंसविधायिनि ! त्वं संसारचिन्ताहतमानसानाम् ।
चेतांसि चक्षुंषि समं करेण स्पृष्ट्वैव मातेव सुखं करोषि ॥९॥
रसालहृत्त्यच्युतमाधवीव या सुन्दरी प्राणसमप्रियस्य ।
वियोगतो भू-पतिता मुमूर्च्छे, तवाङ्कलाभात् सुखिनी न किं सा ? १०
या सुन्दरी जीवनकाव्य-पुत्रनिर्जीवदेहं स्वतनौ निवेश्य ।
अकम्पयत् खं ननु रोदनेन सापि त्वदङ्के सुखमालभेत ॥११॥
सन्तापनाश-प्रबलप्रतापे ! निवर्त्तते कातरशोकि-शोकः ।
हा हा ध्वनिः खिन्नदृगम्बुभारो दुःखाग्निदग्धस्य कृपावशात्ते ॥१२॥
हा हन्त शैषा परिपीड़ितेव बुभुक्षया, चान्द्रमसी कलेव ।

राज्ञुमभावेण ; सुखेन सेयं तत् क्रोड़देशं सरलाधितिष्ठत् ॥१३॥
यानन्तचिन्तानलदह्यमाना ; यस्या मुखाब्जं मलिनं विषादैः।
चपोपमैः, त्वन्मृदुकोमलाङ्कः विस्मारयत्यत्र सुखेन तां तत् ॥१४॥
त्वमेव चेत् श्रान्तिविनाशहेतुर्न वर्त्तसे दुःखशताकुलेऽस्मिन्।
कृषीवलानां श्रमकातराणां कथा तदा किं जगतीह तिष्ठेत् ॥१५॥
सखी भवत्याः सुखदापि शय्या श्रमार्त्तजन्तून् जननीव नीत्वा।
स्वविग्रहं शान्तिमयं सदा स्यात् ; सुखैकहेतोस्तवकैव वार्त्ता ? ॥१६॥
चणप्रभाभार्य-सुसेवकानां उद्देश्यलोपेन सुविव्यथन्ते।
चित्तानि यान्येव, तव प्रसादात्तान्येव तेषां सुसुखीनि नो किम् ? ॥१७॥
चिन्तातरङ्गेण समं स-नीनीः पुनः पुनर्न त्वपरायणासीत्।
येषां सुनिश्वास-समीरणाद्या, ते साम्प्रतं त्वामुपयान्ति शान्त्यै ॥१८॥
हे स्नेहदेवि ! प्रतिभा-प्रधानो यो वीक्ष्य नेत्राम्बु सदैव पिबोः।
संसार-रत्नः शतधिक् प्रचक्रे स शान्तये त्वां शरणं गतोऽस्ति ॥१९॥
प्राणप्रियाया मलिनाम्बरत्वं यमेव नित्यं दयितं बिभेद।
ग्रैष्मोपमं, तं भवदङ्कदेशः विस्मार्य्य सर्वं सुखिनं करोति ॥२०॥
सुतैः क्षुधार्त्तैर्विवशीकृतं यं, क्षुत्क्षामकण्ठास्तनया रुदन्तम्।
यं दर्शयन्त्यत्र सहस्रदुःखच्छविं, विना त्वां क्व सुखं नु ! तेषाम् ॥२१॥
संसारदावानलदह्यमानजनस्य शान्तिः कथमप्यशक्या।
चेत् पादपाथोज सुधा भवत्याः न वर्त्ततेऽसौ विपिनोपमेऽस्मिन्॥२२॥
प्रभोः प्रहारं सहते सदा यो दुःखेन नेत्राम्बुभिरञ्चितः सन्।
तिरस्कृतिर्यस्य विभूषणं सः त्वदङ्कलाभादधुनैति शान्तिम् ॥२३॥
कपालवात्तेऽत्र शिरो फवन्ति दुःखानि यान्येव समुन्नतानि।
किन्तानि विद्यास्तवलेन धीराः वीराश्च हर्त्तुं खलु शक्नुवन्ति ? ॥२४॥
सुधांशुबिम्बं नवशीतरश्मिपातैः सरो मानसमम्बुभिश्च।
सन्तापराशिं भवतीव निद्रे ! संसारिणां किं हरते शमेऽत्र ? ॥२५॥
संसारिणां मानसतापराशिं हरस्यहो ! दलितार्द्दिम यद्वत्।

धीरः समीरो हरिचन्दनाम्बु, चन्द्रश्च किं हर्तुमहो ! समर्थः ? ॥२६॥
संसारतप्तस्य सदा शरण्या, चिन्ताभिभूतस्य सखी वरेण्या।
रोगौषदिग्धस्य महौषधन्त्वं श्रान्तस्य मित्रं चणमत्र साध्वि ! ॥२७॥
नृपस्य यस्यैव कृपाकटाक्षात् रोषातिलेशाच्च जनाः कियन्तः।
तुष्यन्ति, केचित् सभयाः सदैव क्षुभ्यन्ति, सोऽप्यत्र तवाश्रयीनः ॥२८॥
यदाज्ञयानन्तनरा म्रियन्ते यदाज्ञया शान्तिसुखं लभन्ते।
त्वन्मायया सोऽपि निरस्तचिन्तः निरस्तगर्वो मृतवद् विभाति ॥२९॥
योऽसौ नृपः सतुरुष्कराज्यो दैन्यादितो ह्युत्तमलाधिवासी।
सिषेव धूलीर्नयनाम्बुपातैस्त्वदङ्कयोगात् स न किं सुखी स्यात् ? ॥३०॥
श्वः प्रातरेवेह समादिदेश मृत्युं समुद्बन्धन-कर्मणैव।
यस्यैव भूपो, हतभाग्यजीवः स किं प्रशान्त्यै भवतीं न याति ? ॥३१॥
समर्थिनो वीक्ष्य मुखानि येषां वमन्ति तीक्ष्णं विषवाक्यराशिम्।
श्रुत्वोणि रक्तं विषमं गिरन्ति त्वन्मायया तेऽपि किलाभिभूताः ॥३२॥
त उत्तमर्णाः श्रवणेषु येषां क्षिपन्ति तीक्ष्णायुधवाक्यराशीन्।
मन्त्रत्तरं विश्वसताद्य तेषां दीनाननानां शरणं त्वमेव ॥३३॥
जहार मित्रप्रमुखं कृतान्तो, जहार राज्यं विषमो विपक्षः।
जहार देहं बत ! यस्य रोगः विना त्वया तस्य कुतोऽत्र शान्तिः ॥३४॥
असृक् परं शुष्यति, याति बुद्धिः, गाढं तमः पश्यति यस्य नेत्रम्।
यतोत्तमर्णाननदर्शनेन ; कोऽन्योऽस्ति शान्त्यै चणमत्र तस्य ? ॥३५॥
दन्दह्यते यस्य मनोऽतिचिन्ता-भुजङ्गमार्थैः ; तनुकान्तिराशिम्।
जग्रसते हा बत ! सा बुभुक्षा निशाचरी ; तस्य गतिर्न किं त्वम् ॥३६॥
सुधासमुद्रोर्म्मि-विशोभि-फेननिभे धरेशो शयने शयानः।
दीनोऽपि तीव्रे विषमोपलेऽयं त्वत्-सेवया तुल्यसुखं प्रयाति ॥३७॥
कीटः पतङ्गो विहगो भुजङ्गः पयश्चर, खेचर-भूचरौ च।
भूपोऽनिदीनो विबुधोऽनभिज्ञः सर्वे भवत्याः सममेव यान्ति ॥३८॥

निद्रे ! शरण्ये ! तव माययैव पश्यन्ति रङ्गन्ति च तत् सुखेन ॥३९॥
कृपाश्रये तत्त्वबुभुत्सुमार्थं त्वं साम्यमन्त्रेण सुदीक्षितं किम्।
करोषि ? सन्तप्तजनान् शुभे ! किं रम्यामृतैः सेक्तुमिहागतासि ? ४०
विद्या-यशो-रूप-बलातिदर्पैः ज्ञानप्रतापैरपि सर्वमेव।
यस्तुच्छदृष्ट्या परिपश्यतीह सोऽपि त्वदङ्के रमते निरीहः ॥ ४१ ॥
मातेव निद्रे ! भवती सुखेन स्वमङ्कमानीय सुतोपमास्ताः।
प्रजा महासाध्वसदुःखयुक्ताः शान्तौ सुधायां कुरुतामजस्रम् ॥४२॥
मानापमानौ सुख-दुःख-तापाः शीतोष्णमेतत् बत ! शत्रु-मित्रे।
स्नेहातिहिंसे च तवाङ्कसंस्था विस्मृत्य शान्तिं लभतेऽत्र किम ? ॥४३॥

निखिलजनशरण्ये ! सर्वदुःखोपहन्त्रि !
मम-सरल-सुदर्शिन्याशु शान्त्यै कहेतो !।
भव-दवदहनाभा-दह्यमानानजस्रं
नय निजमधुराङ्कं मादृशान् भाग्यहीनान् ॥४४॥

( नारायणार्पणमस्तु )

श्रीचन्द्रकान्तचूडामणिः।
नोयाखाली—सोमपाड़ा।

---

## सरला।

( पूर्वाधिकृता )

कपिञ्जीविबहुला श्यामलतकवल्लरीसमण्डिता विन्ध्यपादपल्या-मेका काञ्चनपल्ली वर्त्तते। तस्याः सीमान्तप्रदेशेषु दीनावपि परार्थैकव्रतौ स्वल्पते क्षपणावपि आतिथ्योदारौ वार्द्धकात् जराजीर्णावपि सततं परव्यसनत्राणे बद्धपरिकरौ अनधिगतशास्त्रावपि जीवितप्रकटिततद्ग्रन्थतत्त्वौ अशीतिवर्षदेशीयौ दम्पती चिरं वसतः स्म कलीटजविरचनौ। आसीदनयोः कुटीरभूभाग-प्रत्यासन्नम् उद्यानमेकं। यत्रोत्पन्नेन नानाद्रव्यजातेन न केवलम्

अनयोर्जीविकानिर्वाहिता परं तत् पल्लीवासिनोऽनेके दीना जना अपि कृतजीवितसन्धारणा बभूवुः। अप्रसूतिकोऽशेषार्त्तजनशरण-भूतोऽसौ दिव्यसत्त्वः स्थविरः सर्वेषां ग्रामबालानां विनेता पितृभूतश्च सर्वेषां तज्जनपदवासिनां भगवान् विन्ध्यनाथोऽस्माकं दुःखोपशम-नार्थम् अवतीर्ण इति मतः।

अस्माकं पूर्वाभिहितो युवा सरलाद्वितीयः प्रखरभास्करकर-परितप्तो दिवावसाने अत्रैव तं शरणं प्राप। ततः पुरतो हरित-तरुलतासनाथम् उपवनं पृष्ठतो धवलतुहिनपरिशोभितं विन्ध्याचलं नातिदूरतोऽनेकचक्रमरालकुलसमाकुलं कुवलयषण्डमण्डितं सर आलोक्य स्वभावसौन्दर्य्यान्दोलितहृदयो युवा मनोहर्षाप्रकटनाक्षमः सहसैव अवादीत्। भगवन्! द्युलोकाधिष्ठानात् नाधुनासि त्वं प्रत्यक्षविषयः। अहो गोचरीकृतमद्य मया त्वदुपदेशतत्त्वम् यत् सर्वमेव धातुर्विधानम् अस्माकं भाविशुभकरम् इति।

ततस्तदाचरणप्रीतौ तौ आगन्तुकौ, कदाचित् तस्य पद्मसरसः धवलप्रस्तरसंस्तरशीतले सोपाने कृतासनबन्धौ, कदाचित् अनेका-द्भुतदृश्यनिचयदर्शनकुतूहलौ भूधरदेशं पर्य्यटन्तौ, कदाचित् तदुप-वनाभोगकृतविचरणौ सुदीर्घं कालं क्षपितवन्तौ। पुनरागतायां सन्ध्यायां प्रत्यागत्य तां पर्णशालाम् अभीष्टां तस्य वृद्धस्य धर्मोप-देशम्। प्राप्तानेकसुकृतोपक्रान्तेन साधुसमागमेनानेन अभूत् तयोरभ्यागतयोर्विस्मृतिविषयस्तावत् पूर्ववृत्तान्तः।

अथैकदा प्रकृतिशोभासन्दर्शनेन अचलाधित्यकां पर्य्यटतोस्तयोः युवा सहसा स्मरितात्मवृत्तान्तः अवादीत्। अहो कीदृक् मनो-मोहनः प्रभावः प्रकृतेः येन विमूढाभ्यामेतावन्तमपि कालमावाभ्यां विस्मृतस्तावत् पूर्ववृत्तान्तः। अहर्दिवमेव अभिनवसौन्दर्य्यालोकन-परायणौ न कृतोऽधुनापि अन्योन्यपरिचयः। महीयान् खलु आवयोराश्रयदातुर्धार्मिकतायाः प्रकारः; योऽविज्ञातोऽस्मानौ-

रितिवृत्तं अपत्यनिर्विशेषं पालयति। लोकोत्तरैवास्य महानुभावता यत्र छायापि सन्देहस्य प्रवेष्टुं न क्षमते। तन्महत् सुकृतमन्तरेण न सम्भवति एतादृशसाधुसङ्गतिरिति। ततस्तद् वाक्यमाकर्ण्य प्रतिमूर्त्तिरिव सरलताया बाला दीर्घमुष्णञ्च निश्वसन्ती प्रत्युवाच "नात्र कश्चित् अवकाशः सन्देहलवस्य। यदासीन्मे प्राक्तनं सुकृतं किञ्चित्, अन्यथा किमिति दशायाम् एवमपि समुपजातायाम् एतादृशस्य साधोराश्रयोऽधिगतो मद्विधया हतभागिन्याः। महाभाग! किमन्यत् वक्तव्यम्, आस्तां पितरावपि मदीयौ एवंविधौ धर्मगतप्राणाविति। ततस्तद्वाक्यमाकर्ण्य तद्वृत्तान्तप्रश्नाशया कुतूहलेन कृताभिनवोद्यमः युवा भवाषे।

अस्ति मे महत् कुतूहलं भवत्याः परिचयावगत्यै। तद् यदि न भवति अनिगद्यं न वा अतिखेदकरम्, ततः कथनेन आत्मानम् अनुग्राह्यम् इच्छामि। अतिमहत् खलु भवती-दर्शनात् प्रभृति मे कौतुकम् अस्मिन् विषये। देहशोभालोकनेन नास्ति मे त्वदाभिजात्ये कोऽपि सन्देहलवः, प्रभातरलं ज्योतिः कदापि वसुधातलात् नोदेति।

इत्येवम् अभिहिता सा बाला किमपि अन्तर्ध्यायन्ती मुहूर्त्तमिव तुष्णीं स्थित्वा उष्णमायतं निश्वसन्ती किञ्चित् कषायितोदरे प्रक्षाल्य लोचने वस्त्राञ्चलेन वदनमपमृज्य शनैः शनैः प्रत्यवादीत्।

महाभाग! किमनेन हतभागाया मे तावद् वृत्तान्तेन श्रुतेन। तथापि महाकुतूहलं चेत् तत्कथयामि। श्रूयताम्। मिवारस्य प्राचीनतममहीपतिकुलसम्भूतोऽयं जनः। यत्र महात्मानः वादलप्रतापप्रमुखा राजर्षयः अक्षयकीर्त्तिशालिनः प्रादुर्भूताः। अहो नियतेर्वैचित्र्यम्। न गच्छति कस्यापि काल एकविध एव। तथाहि अनेकपुरुषभोगपारम्पर्य्यात् दुःखनिशा नः समायाता। राजसचिवस्य अन्यायशासनावलेपात् गतोऽस्य रोषविषयतां मदीयो जनकः।

ततस्तेन राजद्रोहीति अभियुक्तोऽनृतसाक्षिकलेन च प्रमाणितः राजशासनात् मे पिता लब्धवान् प्राणदण्डाज्ञाम्। अहह! मोह-मयेऽस्मिन् संसारे क्वाप्येवंविधो दण्डधरः समासाद्येत योऽनृतकूट-शतमपमार्ज्य तथ्यमाविष्कुर्य्यात्। तत आत्मनोऽदर्शनमन्तरेण कुल-कीर्त्तिविलोपमाकलय्य अन्यतमस्य राजसचिवस्य कृपैकपरवशस्या-नुग्रहेण जननी मातरं माञ्च हतभागिनीम् आदाय तस्यामेव कृष्णायां निशायाम् अतीते यामद्वये निद्रालसे पौरकुट्टपाले स्वावासं परित्यज्य प्रत्यासन्नायां कस्याञ्चित् राजलोकविरलायां पल्लाम् आसाद्यैकस्य सुहृदो गृहे निभृतं कालं निनाय।

अथानेन नृपति कतिपयदिने सोऽपि आत्मचरितं प्रकाशित-वान्। किं बहुना तेन जनन्या मम च धर्मनाशार्थं निभृतं गृहीता विविधा चेष्टा। तदनुकूलमपि उपादनं सर्वमाहृतं तेन मन्दबुद्धिना। ततस्तद् भावम् अवगम्य तातस्तदविज्ञानात् तस्यावासभूमिं त्यक्तवान्। क्व गन्तव्यमिति नाधिगतेऽपि नरका-धिकस्य तदावासस्य त्याग एव महानासीत् नो मुदो विषयः।

ततो दिवसं तमशेषं पर्य्यटन्तः कथमपि विन्ध्याटवीं समासादिताः। अथ कालोऽपि स्वधर्म्ममनुष्ठितवान्। अहो कापरा मादृशी पापीयसी या स्वीयजननीं स्वकरेण हन्यादित्येवम् आत्मभाग्यं दूषयन्त्यास्तस्या अतर्कितमेव चेतनां जहार मूर्च्छा। मूर्च्छावेगात् निष्पतन्तीं शिलातले तां ससम्भ्रमं प्रसारितकरः शोकदह्यमानहृदयः युवा विधृतवान्। ततः अश्रुसलिलसिक्तेन तदीयोत्तरीयप्रान्तेन शनैः शनैः वीजयन् संज्ञां प्रापय्य ताम् अवादीत्—उत्तिष्ठतु भवती। नायं शोकोपचारः शोभते भवादृशेषु। यदेव धात्रा विहितं भवति तत्सर्वमस्माकं भावि शुभकरम्। अस्माभिस्तु एकदेश-दर्शिभिः तदनाकलय्यैव तदर्थं विलप्यते। पश्य, विष-समास्वादनाद् मरणमन्तरेण तव पिता अवश्यमेव नरपतिभटैन हतोऽभविष्यत्।

ततः स सर्वथा भूपतिना स्वपदानुचितेन दण्डेन निहतश्चाभविष्यत्। पतिप्राणा भवदीया जननी च पतिचितानले न तद्विरहज्वाला-मालिनं देहं नियतमेव शेषमनेष्यत्। न चास्माभिः सर्वसुखास्पदं स्थानमेतदध्यगमिष्यते। निर्विष्टम् एकदा भवत्या सकलं प्रमोद-सुखम्। परमतो यो विमलोऽखण्डोऽनिर्वचनीय*आनन्दोऽहर्दिव-मनुभूयते, नाल्पकालमात्रेण वर्णयितुं शक्यते स सर्व एव सुख-सम्भारः। सर्वदर्शी खलु विधिः यो दिव्यालोकेन सर्वं विचार्य्य-मानुषभाग्यं निर्द्धारयति। वयन्तु अज्ञता—प्रणोदिताः सर्वथा पक्षैक-दर्शी विधिरिति निरर्थकमेनं दूषयामः।

[क्रमशः]

श्रीउपेन्द्रनाथरायः

वरिशाल—रायेरकाठि।

---

## कलापव्याकरणे शर्ववर्म्मा।

( पूर्वतोऽनुवृत्तः )

ततो गृहीतमौनोऽहं राजान्तिकमुपागमम्।
तत्र च श्लोकमपठद् द्विजः कश्चित् स्वयं कृतम्॥ १॥
तं चाचष्ट स्वयं राजा सम्यक् संस्कृतया गिरा।
तदालोक्य च तत्रस्थो जनः प्रमुदितोऽभवत्॥ २॥
ततः स शर्ववर्म्माणं राजा सविनयोऽब्रवीत्।
स्वयं कथय देवेन कथं तेऽनुग्रहः कृतः ?॥ ३॥
तच्छ्रुत्वाऽनुग्रहं राज्ञः शर्ववर्माऽभ्यभाषत।
इतो राजन् निराहारो मौनस्थोऽहं तदा गतः॥ ४॥
ततोऽतिविमना शेषे जाते तीव्रतपः क्रमः।
क्लान्तः पतितवानस्मि निःसंज्ञो धरणीतले॥ ५॥
उत्तिष्ठ पुत्र ! सर्वं ते संपत्स्यत इति स्फुटम्।
शक्तिहस्तः पुमानित्थ जाने मामब्रवीत् तदा॥ ६॥

तेनाहममृतासारसंसिक्त इव तत्क्षणम्।
प्रबुद्धः क्षुत्पिपासादिहीनः स्वस्थ इवाभवम् ॥ ७ ॥
अथ देवस्य निकटं प्राप्य भक्तिभराकुलः।
स्नात्वा गर्भगृहं तस्य प्रविष्टोऽभवमुन्मनाः ॥ ८ ॥
ततोऽन्तः प्रभुणा तेन स्कन्देन मम दर्शनम्।
दत्तं ततः प्रविष्टा मे मुखे मूर्त्ता सरस्वती ॥ ९ ॥
अथासौ भगवान् साक्षात् षड्भिराननपङ्कजैः।
"सिद्धो वर्णसमाम्नाय" इति सूत्रमुदैरयत् ॥ १० ॥
तच्छ्रुत्वैव मनुष्यत्वसुलभाच्चापलादहत।
उत्तरं सूत्रमभ्यूह्य स्वयमेव मयोदितम् ॥ ११ ॥
अथाब्रवीत् स देवो मां नावदिष्यः स्वयं यदि।

---

अभविष्यदिदं शास्त्रं पाणिनीयोपमर्दकम् ॥ १२ ॥

---

अधुना स्वल्पतन्त्रत्वात् कातन्त्राख्यं भविष्यति।
मद्वाहनकलापस्य नाम्ना कालापकं तथा ॥ १३ ॥
इत्युक्त्वा शब्दशास्त्रं तत् प्रकाश्याभिनवं लघु।
साक्षादेव स मां देवः पुनरेवमभाषत ॥ १४ ॥
युष्मदीयः स राजापि पूर्वजन्मन्यभूद् ऋषिः।
भरद्वाजमुनेः शिष्यः कृष्णसंज्ञो महातपाः ॥ १५ ॥
तुल्याभिलाषामालोक्य स चैकां मुनिकन्यकाम्।
ययावकस्मात् पुष्पेषु-शराघातरसज्ञताम् ॥ १६ ॥
अतः स शप्तो मुनिभिरवतीर्णं इहाधुना।
सा चावतीर्णा देवीत्वे तस्यैव मुनिकन्यका ॥ १७ ॥
इत्थं ऋष्यवतारोऽयं नृपतिः सातवाहनः।
दृष्टे त्वय्यखिला विद्याः प्राप्स्यत्येव त्वदिच्छया ॥ १८ ॥
क्लेशलभ्या हि भवन्त्युत्तमार्था महात्मनाम्।
जन्मान्तरार्जिताः स्फारसंस्काराच्छिमसिद्धयः ॥ १९ ॥

(क्रमशः)

( पूर्वानुवृत्त. )

गान्धर्वराक्षसौ चान्यौ पैशाचश्चाष्टमोऽधमः ।
एतेषां यस्य यो धर्मो वर्णस्योक्तो महर्षिभिः ।
कुर्वीत दाराहरणं तेनान्यं परिवर्जयेत् ॥ २५ ॥
सधर्मचारिणीं प्राप्य गार्हस्थ्यं सहितस्तया ।
समुद्वहेद् ददात्येषा सम्यगूढ़ा महाफलम् ॥ २६ ॥
इति श्रीविष्णुपुराणे तृतीयेऽंशे दशमोऽध्यायः ।

---

## एकादश अध्याय ।

सगर उवाच ।

गृहस्थस्य सदाचारं श्रोतुमिच्छाम्यहं मुने ! ।
लोके ह्यस्मात् परस्माच्च यमातिष्ठन्न हीयते ॥ १ ॥

और्व उवाच ।

श्रूयतां पृथिवीपाल सदाचारस्य लक्षणम् ।
सदाचारवता पुंसा जितौ लोकावुभावपि ।
साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः ।
तेषामाचरणं यत्तु सदाचारः स उच्यते ॥ २ ॥
सप्तर्षयोऽथ मनवः प्रजानां पतयस्तथा ।
सदाचारस्य वक्तारः कर्तारश्च महीपते ॥ ३ ॥
ब्राह्मे मुहूर्ते सुस्थेच मानसे मतिमान् नृप ।
विबुद्धश्चिन्तयेद्धर्म मर्थञ्चास्याविरोधिनम् ॥ ४ ॥
अपीड़या तयोः काममुभयोरपि चिन्तयेत् ।
दृष्टादृष्टविनाशाय त्रिवर्गे समदर्शिता ॥ ५ ॥
परित्यजेदर्थकामौ धर्मपीड़ाकरौ नृप ।
धर्ममप्यसुखोदर्कं लोकविद्विष्टमेव च ॥ ६ ॥

ततः कल्यं समुत्थाय कुर्य्यान्मैत्रं नरेश्वर। *

नैरृत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः ॥ ७ ॥

दूरादावसथान्मूत्रं पुरीषञ्च समुत्सृजेत्।

पादावसेचनोच्छिष्टे प्रक्षिपेन्न गृहाङ्गने ॥ ८ ॥

आत्मच्छायां तरुच्छायां गोसूर्य्याग्न्यनिलांस्तथा।

गुरुद्विजातींश्च बुधो न मेहेत कदाचन ॥ ९ ॥

न कृष्टे शस्यमध्ये वा गोव्रजे जनसंसदि।

न वर्त्मनि न नद्यादितीर्थेषु पुरुषर्षभ ॥ १० ॥

नाप्सु न वाम्भसस्तीरे न श्मशाने समाचरेत्।

उत्सर्गं वै पुरीषस्य मूत्रस्य च विसर्जनम् ॥ ११ ॥

उदङ्मुखो दिवोत्सर्गं विपरीतमुखो निशि।

कुर्वीतानापदि प्राज्ञो मूत्रोत्सर्गञ्च पार्थिव ॥ १२ ॥

तृणैरास्तीर्य्य वसुधां वस्त्रप्रावृतमस्तकः।

तिष्ठेन्नातिचिरं तत्र नैव किञ्चिदुदीरयेत् ॥ १३ ॥

वल्मीकमूषिकोत्खातां मृदमन्तर्जलां तथा।

शौचावशिष्टां गेहाच्च नादद्याल्लेपसम्भवाम् ॥ १४ ॥

अन्तःप्राण्यवपन्नाच्च हलोत्खाताच्च भूमिप।

परित्यजेन्मृदश्चैताः सकलाः शौचसाधनम् ॥ १५ ॥

एका लिङ्गे गुदे तिस्रस्तथा वामकरे दश।

हस्तद्वये च सप्तान्या मृदः शौचोपपादिकाः ॥ १६ ॥

अच्छेनागन्धफेनेन जलेनाबुद्बुदेन च।

आचामेत मृदं भूयस्तथा दद्यात् समाहितः ॥ १७ ॥

निष्पादिताङ्घ्रिशौचस्तु पादावभ्युक्ष्य वै पुनः।

त्रिः पिबेत् सलिलं तेन तथा द्विः परिमार्जयेत् ॥ २८ ॥

( क्रमशः )

---

* मैत्रं मित्रदेवताकं कर्म पुरीषोत्सर्गः।

# PHRASES AND IDIOMS.

( पूर्वप्रकाशितात्परम् )

अथ joined with किं means 'what else', 'yes' ; as, शकार:—चेट प्रवहणम् आगतं किम् । चेट:—अथ किं (S—Has the car arrived ? Servant—yes). अथवा is used like the disjunctive 'or' in English.

## अपि ।

अपि is used in the sense of (*a*) 'though', 'even if' as पातितोऽपि करावातै: (though made to fall down by the strokes of the hand) ; (*b*) even ; as, वल्कलेनापि अधिकमनोज्ञा (more charming even by bark garment) ; (*c*) 'also', 'and also' ; as अपि सिञ्च अपि स्तुहि (sprinkle and pray) ; अस्ति मे सोदरस्नेहोऽप्येतेषु (I have also a sisterly affection for these) ; (*d*) in asking questions ; as, अपि तपो वर्द्धते ? अपि जीवेत् स ब्राह्मणशिशु: ? (*e*) when it is joined to an interrogative pronoun, it is used in the sense of 'some', 'certain' 'any' etc ; as मया परिभ्रमता कोऽपि शिशु: दृष्ट: ( I saw a certain boy while I was roving).

## अयि ।

It is used (1) as a gentle address in the sense of 'friend', 'prythee' ; as अयि मात: सीते ; अयि प्रियसखि शकुन्तले ; (2) in asking gentle questions ; as अयि जीवितनाथ जीवसि (lord of my life, art thou alive ? )

## अहो ।

It is a vocative particle ; as अहो भ्रातर: ( o my

brothers ! ) ; it is generally used in the sense of 'oh !' and 'o how' expressive of joy, grief or sorrow ; as, अहो मधुरमासां कन्यकानां दर्शनम् ( o how pleasant is the sight of these damsels ! ) अहो विपाकः (oh this change of state ).

## इव ।

It is used in the sense of comparison ; as संसारः अर्णव इव ; it is used in the sense of (1) 'a little', 'some what' ; कड़ार इवायं ( This is some what tawny) ; (2) in the sense of 'as if', as it were', as, यो जहासेव वासुदेवम्; मृगानुसारिणम् पिनाकिनमिव पश्यामि ।

## एव ।

एव is generally used to emphasize the word after which it is used ; as राम एव अयम् ( it is Ram and no body else). Its function in a sentence is threefold *viz.*

"अयोगमन्ययोगञ्च अत्यन्तायोगमेव च ।
व्यवच्छिनत्ति धर्मस्य एवकारस्त्रिधा मतः ।

## एवम् ।

It means (*a*) 'so' 'thus' ; as एवमुक्तः राजावादीत् (the king, thus addressed, replied) ; (*b*) it is used to show 'assent' ; as एवमस्तु ; एवमेतत् ।

## कच्चित् ।

It implies some hope expressed by the speaker and has the sense of 'I hope that, etc. It is interrogative in form ; as ध्रियन्ते वस्तीर्थजलानि कच्चित्

(Are your holy waters undisturbed ?) कच्चिदेतच्छ्रुतं पार्थ ! त्वयैकाग्रेण चेतसा । कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनञ्जय ।

## खलु ।

(1) 'indeed', 'surely', 'verily' ; as मार्गे पदानि खलु ते विषमी भवन्ति (thy footsteps do indeed fall uneven on the way) ; (2) conciliation ( अनुनये ) ; as न खलु न खलु बाणः सन्निपात्योऽयमस्मिन् (pray, let not the arrow be discharged at this) ;न खलु न खलु मुग्धे साहसं कार्य्यमेतत् ; (3) It is used in the sense of prohibition ' गत्वा खलु (no need of going) ; (4) reason ; as न विदीर्य्ये कठिनाः खलु स्त्रियः ।

## च ।

It is a copulative conjunction and joins words or assertions together ; as रामश्च लक्ष्मणश्च । It must be noticed that 'च' is never used in the beginning of a sentence.

When it is used with न it has the sense of 'neither', 'nor' ; as न च न परिचितः नचाप्यगम्यः ।

'च' is often repeated in the sense of the simultaneous occurrence of two actions ; as पपात च ममार च (He died as he fell down).

## तद् ।

When it is used as a conjunction, it means, 'then' 'therefore', 'in that case'; as तत्कथयामि ते भूतार्थम् (then I shall tell you the truth) ; तदेहि वत्स ।

## दिष्ट्या।

It is a particle expressive of joy' gladness.

(1) I am glad, happily ; as दिष्ट्या प्रतिहतं दुर्जातम् (I am glad the evil is averted).

(2) I congratulate upon &c. ; as दिष्ट्या महाराजः विजयेन वर्द्धते (I congratulate your majesty on your success).

## नाम।

नाम is generally used in the sense of 'by name' 'called', 'named etc; as अस्ति पाटलीपुत्रं नाम नगरम् ; दशरथो नाम राजा ; रामो नाम पुरुषः।

नाम is often used in the sense of 'indeed', verily 'forsooth' ; as को नाम राज्ञां प्रियः ( who possibly is a favourite of kings ? )

मया नाम जितम् (I have indeed conquered) ; को नाम पाकाभिमुखस्य जन्तुर्द्वाराणि दैवस्य पिधातुमिष्टे (what creature I should like to know, is able to shut the doors of fate, when disposed to show its power) ; अयि कथं नामैतत् (How indeed is this ? )

नाम is used to express a pretence or feigned action ; as, कार्त्तान्तिको नामभूत्वा (pretended to be an astrologer.

(क्रमशः)

श्रीउपेन्द्रनाथ रायः
वरिशाल—रायेरकाठि।

---

श्रीदुर्गा शरणम्।

# संस्कृतचन्द्रिका।

---

श्रीश्रीगणेशाय नमः।

शिवादीनपि कष्टानि कारयन्ती भवानिव।

मायावल्लभ्याने सेयमम्बा श्रीत्रिपुरसुन्दरी॥

---

## भासावतरणिका।

प्राचीं मञ्जुलयन् नभो विमलयन् भीमं तमः चालयन्

बालास्यं तुलयन् कजं मुकुलयन् शुक्लोत्पलं फुल्लयन्।

मानिन्याश्च वगुण्ठनं निजकरैः स्तोकं समुत्तोलयन्

पान्थं व्याकुलयन् वपुः पुलकयन् ग्लौकर्त्तं उज्जृम्भते॥

---

## उद्भट-श्लोकाः।

कान्ते कोऽयमुदेति ? शीतकिरणः, आत्मा कुतो ? वारिधेः,

कस्ते सुन्दरि ! ? सोदरः करमिता यत्नं त्वदीये स्तने।

धन्या त्वं भवती सती कुलवती धन्योऽपि ते सोदरः,

इत्थं श्रीपरिहासकेलिकुशलः श्रीकान्तचन्द्रोऽस्तु वः॥२७१॥

गतागत कुतूहलं नयनयोरपाङ्गावधि स्मितं कुलनतभ्रुवामधर एव विश्राम्यति।

वचः प्रियतम श्रुतेरतिथिरेव कोपक्रमः कदाचिदपि चेत्तदा मनसि केवलं मज्जति॥२७२॥*

---

* सत्यसतीवर्णनमेतत्। सतीपक्षे।—अपाङ्गेनैव गमनागमनकुतूहलाचरणं वस्तु पश्यति। कुलनतभ्रुवां कुलसुन्दरीणां हास्यं अधरे एव विरमति, नोच्चैर्हसति। तस्या वचनं स्वामिनोऽपि श्रवणे कदाचित् मृदु मृदु प्रविशति। कदाचिद्यदि कोप उदेति तदा केवलं मनस्येव लीयते। न तु वचसा कार्येण वा प्रकाश्यते॥

असतीपक्षे।—असत्या गमनागमनसमये नयनयोः कुतूहलं कटाक्षादिविक्षेपावधि वर्त्तते। कुल पितृ-पति कुलं नतं यथोक्तं भ्रुवां याभिः तासां, अधःपातितोभय-कुलानाम्। स्मितं हास्यं अधरे बधीहितो उदरादारभ्य अधरे नीचे जने वा सम्पद्यते। उदरं यावत् कम्पयित्वा असती हसति। वाक्यन्तु तस्याः स्वामिन एव श्रवणयोरतिथिः नान्येषाम्। कदाचित् मनसि यदि कोपक्रमस्तदा तत्तं यथास्थानतया के जने अन्य प्रददाति। गुर्वादीनां प्रकाशाच्छ्रवयापि अलं पतति। इति तात्पर्य्यार्थः।

## विज्ञाननौका ।

तपोयज्ञदानादिभिः शुद्धबुद्धिर्विरक्तो नृपादौ पदे तुच्छबुद्ध्या ।
परित्यज्य सर्वं यदाप्नोति तत्त्वं परं ब्रह्म नित्यं तदेवाहमस्मि ॥१॥
दयालुं गुरुं ब्रह्मनिष्ठं प्रशान्तं समाराध्य मत्या विचार्य्य स्वरूपम् ।
यदाप्नोति तत्त्वं निदिध्यास्य विद्वान् परं ब्रह्म नित्यं तदेवाहमस्मि॥२॥
यदज्ञानतो भाति विश्वं समस्तं विनष्टं च सद्यो यदात्मप्रबोधात् ।
मनो वागतीतं विशुद्धं विमुक्तं परं ब्रह्म नित्यं तदेवाहमस्मि ॥३॥
यदानन्दरूपं प्रकाशस्वरूपं निरस्तप्रपञ्चं परिच्छेदशून्यम् ।
अहं ब्रह्मवृत्त्यैकगम्यन्तुरीयं परं ब्रह्म नित्यं तदेवाहमस्मि ॥४॥
निषेधे कृते नेति नेतीतिवाक्यैः समाधिस्थितानां यदाभाति पूर्णम् ।
अवस्थात्रयातीतमद्वैतमेकं परं ब्रह्म नित्यं तदेवाहमस्मि ॥५॥
यदानन्दलेशैः सदानन्दि विश्वं यदाभातिमात्रा सदा भाति सर्वम् ।
यदालोचने हेयमन्यत्समस्तं परं ब्रह्म नित्यं तदेवाहमस्मि ॥६॥
यदानन्दसिन्धौ निमग्नः पुमान्स्यादविद्याविलासः समस्तप्रपञ्चः ।
तदा न स्फुरत्यद्भुतं यन्निमित्तं परं ब्रह्म नित्यं तदेवाहमस्मि ॥७॥
स्वरूपानुसन्धानरूपां स्तुतिं यः पठेदादराद्भक्तिभावैर्मनुष्यः ।
शृणोतीह वा नित्यमुद्युक्तचित्तो भवेद्विष्णुरत्रैव वेदप्रमाणात् ॥८॥
इतिश्रीमच्छङ्कराचार्य्यनिर्मिता विज्ञाननौका समाप्ता ।

---

## शारदीयोच्छ्वासः ।

घृष्टे पिष्टे परपदतलैर्भाति नात्यप्रकृष्टे
स्नाने येषां हृदयमुकुरे पूर्वमाहात्म्यचित्रम् ।
मन्वादीनाममिततपसां देशजाश्चेत्यशक्याः
ये निर्नेतुं पतिततनया वङ्गदेशस्य दीनाः ॥१॥

येषां चेतःश्वशन-वसनक्लेशशोकाग्नितेजः
वात्याद्दिष्टं श्वसति नियतं शीलदाक्षिण्यमानान् ।
येषां चेतःकमलनिकरोऽस्तं गते गौरवार्के
कान्त्या हीनो ननु परिहृतो ज्ञानमध्वीफ्सुभृङ्गैः ॥२॥
तेषामन्तः-करण-मरुतो नीरसे दैन्यदग्धे
मन्दाकिन्या वहति सहसा शान्तिदः किं प्रवाहः ?
दुःखैस्तप्ता प्रबलझटिका पापमालिन्यगन्धा
आशास्निग्धो भवति किमहो भक्तिपूतः सुवातः ? ॥३॥
भस्मीभूता निखिलविषया यत्र वै सर्वविद्याः
माया भीमा भ्रमति नियतं भीषणे यच्छ्मशाने ।
प्रीति-प्रेम-प्रभृतिविहगा-रूढ़-विश्वास-वृत्तम्
तत्रोद्यानं नयनसुभगं किं श्ययत्येव नेत्रम् ? ॥४॥
केयं शक्तिर्जगति विपुला दृश्यते चैन्द्रजाली ?
कस्मादुत्सात् प्रवहति सुधा प्राणसञ्जीवनीयम् ?
शुष्काः शीर्णाः खलु शवसमा वङ्गपुत्रा यथैते
उत्साहाढ्या नवरसयुताः प्रेममत्ताः प्रफुल्लाः ? ॥५॥
नेत्राम्बूनामविरलतया वर्षणाद्भूतलाङ्कम्
सिञ्चन् सिञ्चन्नसयदृतुराश्रावणाद् यो दिनानि ।
त्यक्तास्त्राश्रः कथमयमहो दर्शयत्यद्य हृष्टां
मेघैर्मुक्तां नवरविकरोद्भासितामात्मकान्तिम् ॥६॥
स्नात्वा गात्रं विगतसलिलैरभ्रशुभ्रोत्तरीयैः
किं वा द्रष्टुं व्रजति गगनं कुम्भजन्मर्षिणेन्दुः ?
शङ्खोन्मुक्तः शतदलयुतः शोभते किं तड़ागः
अम्बापूजोद्यत इव सुतः पुष्पहस्तः प्रसन्नः ॥७॥
धृत्वा रम्यं वपुषि वसनं शालिशस्यस्वरूपम्
काञ्चीत्वेन स्वरुणकिरणैर्दीप्तमम्बुप्रवाहम् ।

गायन्त्यूषा मधुकररवैरस्फुटं रम्यगाथाम्
प्रेम्णा वासं विसृजति कथं नैशनीहारिकाभिः ॥८॥
उत्कण्ठाभाविकृतरजनीराज्यसम्भोदसैन्यैः
प्रात्यर्थैन्यैर्दिवसममलं व्यावृणोद् योऽन्धकारः।
निर्जित्यामुं दिनमणिरहो तेजसा केन भूयः
रुद्धोचक्रे समलविवरे सर्पमण्डूककीटैः ? ॥९॥
बुद्धं बुद्धं तनयसदया ह्येति विश्वस्य माता
स्फुर्ज्जद्ज्योतिर्दशकरयुतानन्तशक्तिर्भवानी।
पापान् दुष्टानसुरजयिनी तेजसा दग्धुकामा
दातुं पूतं विमलममृतं स्नेहजं भक्तिमद्भ्यः ॥१०॥
येषां भीमे ! जननि जगतां ! भीषणानां कराणां
एकाङ्गुल्या धरणसुकरो हेलया विश्वलोकः।
तेषां युक्ता दशभिरपि किं देवदुर्बोध्यलीले !
अस्मद्देशे व्रजसि विमले पुत्रकन्यासहाया ? ११ ॥
अस्माकं किं ह्यवनतिरहो भीषणा-भीषणैवम् ?
एवं किं नः प्रबलकुमतिर्दुर्दशा मोहतन्द्रा ?
यद् या शश्वी निखिलजगतां या भुवां रक्षयित्री
तासां दूरीकरणविषये ह्येकला सापि भीता ? ॥१२॥
नैतद्देवि ! प्रबलममते ! सम्भवेत्त्वत् सकाशे
किं तत्कार्य्यं महति ! भुवि ते यद्विशक्तेरतीतम्।
कृष्णाङ्गारो यदि मलिनतां कोटिधा वर्द्धयेत् स्वां
नो किं भूयो ह्यनलदहनैरेति स स्वर्णकान्तिम् ? ॥ १३ ॥
द्रष्टुं मातुर्ह्यनललहरीकल्पलावण्यराशिं
शक्तिं सञ्चारय सुमहतीं चित्त ! सर्वेन्द्रियेषु।
शीघ्रं शेषाण्यतिसुचपलानीन्द्रियाण्यक्षिमध्ये
नेत्र ! प्रेम्णा सजलमधुना तिष्ठ रे निर्निमेषम् ॥ १४ ॥

प्रीत्यै यस्यास्त्रिभुवनगुरुर्नीलदुर्वाभकान्तिः
प्रेमार्द्रं स्वं कमलनयनं हेलयोत्पाटनेच्छुः ।
पूजायै ते महति महतां ! सर्वगुर्व्यास्तु तस्याः
किं दास्यामो मलिनमनसो भक्तिसंस्पर्शहीनाः ॥ १५ ॥

यद्वत् पद्मे मधुकरवरैः पीतसारे सुरम्ये
मग्ना क्षुद्रा पतति सरघा लिप्तपक्षा रजोभिः ।
तद्वत्तेऽङ्घ्रौ सुरमुनिकुलैर्निर्भरापीतशान्तौ
आमङ्क्ष्यामो भगवति ! कदा धूलिभिश्छन्नदेहाः ॥१६॥

पुत्रो वीरो वपुषि शिखिनोऽवस्थितो ह्येकतस्ते
कास्यच्छाया ? वदनफलितः कोऽतिभो वीरदर्पः ।
माधुर्य्येणापहृतहृदयो रूपजेनास्य लोकः
वीर्य्येस्त्रस्तास्त्वसुरनिकरा दुःसहैरम्ब ! दृष्टाः ॥१७॥

पार्श्वेऽन्यस्मिन् वपुषि मनुजो कुञ्जरो देवि ! चास्ये
पुत्रो धीरो वितरति तवासाध्यकार्य्येऽपि सिद्धिम् ।
आप्तं येनामितगुणमुनेर्वाक्यलेखच्छलेन
दानस्यार्थं स्वकरयुगलं सिद्धिदेन द्वितीयम् ॥१८॥

कन्ये ये ते भुवनविदिते वर्णयाम्यम्ब ! किन्ते ?
वीणापाणिर्जननि ! कमला लोचनानन्दरूपा ।
मातुं मूढो जगति मनुजः सर्वदे ! चेष्टते कः
भापा यद्या ह्यतलजलधिस्त्वे नयोरूपरूपम् ॥१९॥

दृष्ट्वा मातः सह परिजनैरागता जन्मभूमौ
पीत्वा पूतं सुविमलसुधातुल्यपादोदकं ते ।
भक्तिप्रह्वः सरलहृदयो वीतसर्वाधिखेदः
सर्वो लोको हसति रमते माद्यति ह्लादते च ॥२०॥

सर्वे मात ! मनुजतनया यौवक-प्रौढ़-वृद्धाः
सर्वे सत्त्वाः स्थलजलचराः खेचराः कीटसंघाः ।

सर्वं भक्त्या वनतरुलताद्यं यदा वन्दते त्वां
आहत्यैतां प्रणतिमखिले मे तदा क्षीणशक्तेः ॥२१॥
को वा मन्दो ह्यमृतजलधिं याचते वारिबिन्दुं ?
कः सम्राजं जगदधिपतिं भाजनं मृत्तिकायाः ?
नाहं चौरं सुरतरुवरात् लोष्ट्रतिताञ्च लिप्सुः
नाहं याचे जननि भवतीमैहिकां सौख्यराशिं ॥ २२ ॥
याचे शक्तिं "सुजलसुफलां" सेवितुं जन्मभूमिं
याचे भक्तिं चरणयुगले ते च तस्याश्च मातुः ।
याचे मुक्तिं मरणजनकाद्बन्धनादिन्द्रियाणाम्
याचे रक्तिं निखिल सुखदां तावके नामगाने ॥ २३ ॥
याचित्वैवं हृदयविभवान् सर्वदा मातरं नः
नत्वा नत्वा प्रणतशिरसा पादयोर्मोक्षदायाः ।
प्रेम्णा सम्यग् विगलितहृदो ग्राहकानस्मदीयान्
विज्ञो भूयः सजलनयनाः सादरं वाहुवद्धान् ॥ २४ ॥
नो नो भ्रातः शववदपि नो नो मृता जन्मदात्री
छिन्ना भिन्ना अपि न हि वयं दुर्भगा मातृहीनाः ।
क्षीणाप्येषा चलति धमनी, कम्पते पश्य नाड़ी
संज्ञा भ्रातर्वपुषि रमतेऽद्यापि नो भारतस्य ॥२५॥
नो सेवेताखिलगुणयुतां मातरं कः पिशाचं
प्राणैर्वित्तैरपि च वपुषा शोणितैर्वचसो वा ।
सुप्तस्तिष्ठेन्नरपशुरहो कश्च मातु र्मुमूर्षोः ?
मातॄणं कश्चिरगुरुतरं विस्मरत्यल्पबुद्धिः ? ॥ २६ ॥
तस्मादेत प्रकृततनया भारतस्याद्य सर्वे !
विस्मृत्यास्मत्पतनजनिकां क्रूरताद्विष्टतेर्षाः ।
माता भिन्नस्थलजवचसा तीव्रवाणेन विद्धा
सेवित्वा तां कुरुत सफलं धारणं जीवितानां ॥ २७ ॥

एम, ए, श्रीज्ञानशरणशर्म चक्रवर्त्तिनः
लक्ष्णौ क्यानिंकलेज विज्ञानाध्यापकस्य ।

---

# अज्ञानबोधिनी।

ॐ सच्चिदानन्दरूपाय सर्वधीवृत्तिसाक्षिणे।
नमो वेदान्तवेद्याय ब्रह्मणेऽनन्तरूपिणे ॥ १ ॥
यदज्ञानादिदम्भाति यज्ज्ञानाद्विनिवर्त्तते।
नमस्तस्मै चिदानन्दवपुषे परमात्मने ॥ २ ॥

अथाध्यात्मविद्योपदेशविधिं व्याख्यास्यामः। अध्यात्मविद्याधिकारिणमाह,—

तपोभिः क्षीणपापानां शान्तानां वीतरागिणाम्।
मुमुक्षूणामपेक्ष्योऽयमात्मबोधो विधीयते ॥ ३ ॥
अनात्मभूते देहादौ आत्मबुद्धिस्तु देहिनाम्।
साऽविद्या तत् कृतो बन्धस्तन्नाशो मोक्ष उच्यते ॥ ४ ॥

अनादिसान्तो नैसर्गिकोऽध्यासः मिथ्याप्रत्ययरूपः सर्वलोकप्रत्यक्षः अध्यासवर्हेतोः प्रहरणाय आत्मैकत्वज्ञानं शिष्यः श्रीगुरुं परिपृच्छति भो भगवन्! स आत्मा कीदृशः? तत् शृणु। सच्चित्सदानन्दाद्वितीयमखण्डमचलमजमक्रियं कूटस्थानन्तस्वरूपं ज्योतिः स्वप्रकाशं ब्रह्म यत् स आत्मा। भो भगवन्! तर्हि दीर्घेऽस्मिन् संसारे संसृतिं कस्य? तस्यैव। स्वाभाविकी वा नैमित्तिकी वा? यदि स्वाभाविकी भवति, तर्हि अवर्जनीयत्वात् मम मोक्षाशा नास्ति! नहि वत्स! नैमित्तिकी। तर्हि किं निमित्तं? तत्सावधानमतिः शृणु। स्वाश्रया स्वविषया स्वानुभवगम्या स्वभास्याऽवस्तु अनिर्वाच्याऽविद्याऽस्ति। सा तदाश्रयत्वस्वविषयत्वबलेन चित्सदानन्दाऽनन्ताऽद्वितीयस्वभावमावृणोति। यथा गर्भागारान्धकारेण आगारगर्भमाच्छाद्यमिव तथा चिद्रूपं कूटस्थमात्मानं स्वस्वरूपमाच्छाद्यमिव अहं ब्रह्म न मनुष्योऽहमिति विक्षिपति। ततश्च अनात्मनि देहादौ आत्मत्वेनाभिमन्यमानोऽप्राप्ताशेषपुरुषार्थः प्राप्ताशेषानर्थः अविद्यापरिकल्पितैरेव साधनैरिष्टप्राप्तिमनिष्टनिवृत्तिं आकाङ्क्षमाणः सन् लौकिकवैदिकस्वाभाविकानुष्ठिते-

रपि विषयसुखार्थं परमपुरुषार्थं मोक्षाकाङ्क्षामलभमानः अलाब्बुवत् मकरादिभिरिव रागद्वेषादिभिरितस्ततः आकृष्यमाणः सुर-नर-तिर्यगादिप्रभेदभिन्नासु नानायोनिषु परिवर्त्तमानो मोहेन मुह्यमानः संसरति। तत्रविदाय श्रुतिरपि य इमाजजानान्यत् युष्माकमन्तरं बभूव नीहारेण प्रावृताजल्प्याचासूतृप उक्थशासश्चरन्ति। स्मृतिरपि,

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु॥

स्वामिन्! युष्मद्वचनं असमञ्जसमिदमाभाति। कथं? इत्थं कूटस्थचिद्घनैकरसस्यात्मनः शशविषाणसदृशी अविद्या तस्या वरणविक्षेपरूपं कथं सम्भाव्यते? यथा गगनारविन्दस्यासतः सुरभित्वं कुतः? असम्भावनीयत्वात्। असम्भावनीया का। साधु साधु। अरे आत्माविवेको भ्रममात्रसिद्धः। भो भगवन्! यद्भ्रममात्रसिद्धं तत् किं सत्यं? अरे यथा इन्द्रजालं पश्यति जनः। व्याघ्रजलोरगादि सत्यतया न प्रतिभाति। किं इन्द्रजालभ्रमनिवृत्तेः रज्जुरेव सर्पो नान्यत् किञ्चिदपि। तथात्माविवेकभ्रमनिवृत्तेः तदनन्तरं सर्वं मिथ्येतिज्ञायते इदं तु सर्वेषामनुभवसिद्धं तथास्माकं विवेकभ्रमनिवृत्तेस्तदनन्तरं सर्वं मिथ्येति ज्ञायते। भो भगवन्! तर्ह्यस्य भ्रमस्य निवृत्तिः कथं? तत् शृणु। अकस्मात् कथञ्चित् पुण्यवशाद्वा वेदोदितेन ईश्वरार्थ-कर्मानुष्ठानेनापगतरागादिमलः अनित्यादिदर्शनेन नित्यानित्यवस्तु विवेकः इहामुत्रार्थफलभोगविरागः वेदान्तवेद्यः प्रतीयमानं ब्रह्मात्मभावं बुभुत्सुरात्मानं ज्ञातुमिच्छति। ज्ञानादेव तु कैवल्यं प्राप्यते। "येन मुच्यते"। इति श्रुतिः। ज्ञानं तु श्रवणमनननिदिध्यासनमन्तरेण न सम्भवति। तथा च श्रुतिः "आत्मा वारे द्रष्टव्यः मन्तव्यो निदिध्यासितव्यः" त्वं पदार्थविवेकाय सन्न्यासः सर्वकर्मणां श्रुत्या विधीयते। यस्मात् अन्यथा पतितो भवेत्। तस्माद्दार्य्येभ्यः ब्रह्मात्मज्ञानप्राप्तिः। कथमाचार्य्यः? अज्ञो विज्ञो वा स्यात्। यदि अज्ञो ब्रह्मात्मैकत्वज्ञानमुपदेष्टुं न शक्नुयात्। अथ विज्ञः? तदा ब्रह्मात्मत्वज्ञानेन ब्रह्मैव भवति। (क्रमशः)

## यौधिष्ठिरी बुद्धिः !

( पूर्वानुवृत्ता )

यक्ष उवाच ।

कोऽतिथिः सर्वभूतानां किं स्विद् धर्मः सनातनः ।
अमृतं किं स्विद्राजेन्द्र ! किं स्विद् सर्वमिदं जगत् ॥

युधि । अतिथिः सर्वभूतानामग्निः सोमो गवामृतम् ।
सनातनोऽमृतो धर्मो वायुः सर्वमिदं जगत् ॥

यक्ष । किं स्विदेको विचरति ? जातः को जायते पुनः ।
किं स्विद्धिमस्य भैषज्यं ? किं स्विदावपनं महत् ? ॥

युधि । सूर्य एको विचरति चन्द्रमा जायते पुनः ।
अग्निर्हिमस्य भैषज्यं भूमिरावपनं महत् ॥

यक्ष । धान्यानामुत्तमं किं स्विद् ? धनानां स्यात् किमुत्तमम् ? ।
लाभानामुत्तमं किं स्यात् ? सुखानां स्यात् किमुत्तमम् ? ॥

युधि । धान्यानामुत्तमं दाक्ष्यं धनानामुत्तमं श्रुतम् ।
लाभानां श्रेष्ठमारोग्यं सुखानान्तुष्टिरुत्तमा ॥

यक्ष । कश्च धर्मः परो लोके ? कश्च धर्मः सदा फलः ? ।
किं नियम्य न शोचन्ति ? कैश्च सन्धिर्न जीर्यते ? ॥

युधि । आनृशंस्यं परो धर्मस्त्रयीधर्मः सदाफलः ।
मनो यम्य न शोचन्ति, सन्धिः सद्भिर्न जीर्यते ॥

यक्ष । किमर्थं ब्राह्मणे दानं ? किमर्थं नटनर्त्तके ? ।
किमर्थञ्चैव भृत्येषु ? किमर्थञ्चैव राजसु ? ॥

युधि । धर्म्मार्थं ब्राह्मणे दानं यशोऽर्थं नट-नर्त्तके ।
भृत्येषु भरणार्थं वै भयार्थञ्चैव राजसु ॥

यक्ष । केन स्विदावृतो लोकः ? केन स्विन्न प्रकाशते ? ।
केन त्यजति मित्राणि ? केन स्वर्गं न गच्छति ? ॥

युधि। अज्ञानेनावृतो लोकस्तमसा न प्रकाशते।
लोभात्त्यजति मित्राणि सङ्गात् स्वर्गं न गच्छति॥

यक्ष। मृतः कथं स्यात् पुरुषः? कथं राष्ट्रं मृतं भवेत्?।
श्राद्धं मृतं कथं वा स्यात्? कथं यज्ञो मृतो भवेत्?॥

युधि। मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम्।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः॥

(क्रमशः)

---

## शिशुहास्यम्।

हसत रे शिशवो! हसत स्वयं सुमधुरं मधुराकृतयः पुनः।
मम मनःकमलं सुखसागरे इह निमज्ज्य चिराय विभात्वलम्॥१॥
इदमहो! सुखनिर्झरिणी किमु? किमथवा मणिरत्नचयाश्रयः?।
इतरथा रसिकाय सुचेतसे कथमलं सहसा ननु रोचते?॥ २॥
निखिलरत्नकुलाश्रयता ननु जलनिधे रुचिरा कविकल्पना।
यत इह स्थितरत्नमणिप्रभा-लवलवोऽपि न तत्र विलोक्यते॥३॥
त्रिदिवरम्य-विभेव विभा न किं सुहसिते भवतामिह राजते।
किमथवोपमितेः स्मरणादहो! स्फुटमुपस्थितिमेति नु! रूपकम्?॥ ४
कुसुमकोमलकान्तय! एव वः इदमलं सुधया किमु निर्मितम्।
न लभतेऽस्य विलोकनतोऽपि यत् मुहुरपि प्रलयं नवतर्पणम्॥५॥
किमुतवा भगवन्! करुणाकरः भवदवानलदग्धमनस्विनाम्।
विमलशान्तिसुखावलिलब्धये विहितवान् भवतां हसितं सुखम्॥६॥
अभिलषामि, मरीऽप्यमृतायिते इह नु! वः सरसे हसिताम्बुधौ।
मम भवानलदग्धमनः क्रमं परिनिमज्ज्य सुविस्मरतु क्षणम्॥ ७॥
वदति यो रुचिरः सरसः सुखः मधुरशारदपार्वणतो विधोः।
न घटते जगतीह; स निश्चितं परिददर्श न वः सहसाननम्॥ ८॥

सुखकराः ! भवतां हसितस्वर-मधुरतानिकरे श्रवणातिथौ ।
अशुभदुःखावलिनित्यकदर्थित-जनमनोऽपि शमं क्षणमाश्रयेत् ॥ ९ ॥
कुत इदं शिशवो ! ननु जायते ? गुणितमः क इदं कृतवानपि ।
अनुमिनोम्यहमेव जगत्पतेरिदमहो ! मनसश्चरमक्रिया ॥ १० ॥
न च भवन्मृदुहास्यसुवीचिभिः सुमधुरं परिनृत्यति यन्मनः ।
स नियतं रसिकावलिसंसदि न लभते स्थलमत्र समासितुम् ॥११॥
विकशिताननतामरसोदरे नवसमुद्यतकेशरसोदराम् ।
सुदशनावलिमत्र समीक्षितुं बहुदृशो धरतीव जगत्पतिः ॥१२॥
नव-सुधा न भवेद् वसुधातले इति सदा वदतामिह दृग् ध्रुवम् ।
न निपपात कदाप्यथवैव ते नयनदर्शनशक्तिविनाकृताः ॥ १३ ॥
इह स भाग्यधरप्रथमाग्रणीः सुकृतवानपि यः शिशवः ! क्षणम् ।
सरलताभवनं हसितन्तु वः ननु विलोक्य सुखं विमलं ययौ ॥१४॥
सरलता-मृदुताहृतबालकाः ! चिरमहो ! हसितं परिवीक्ष्य वः ।
अनुभवामि परां सुखसन्ततिं समुदिता इति मे ननु वासनाः ॥ १५ ॥

श्रीअन्नदाचरण तर्कचूडामणिः
(सोमपाड़ा, नोयाखाली)

(क्रमशः)

---

## सरला ।

( पूर्वतोऽनुवृत्ता )

सा च बाला सर्वनिराशोपनोदनादभिनवम् एतद्वागमृतं निपीय विस्मितिसनाथां परां मुदम् आपन्ना प्रत्यवादीत् । नैवं विधा उपदेशार्थसहिता वाणी उक्ता पुरा मे ततेन । तेनाभिहितम्, जाते ! जन्तवः सर्वे जगदीशप्रसूतयो नियतमेवावेक्ष्यन्ते विश्वधात्रा अपत्यनिर्विशेषेण । परं पुरेऽस्मिन् त्रिगुणात्मके दुःखम् अनुभवितव्यम् अवश्यम् एव शरीरिणा सर्वेण । अनित्यमेतत् चित्तप्रभवं

दुःखं यस्य तत्त्वज्ञानाधिगमेन समासाद्यते आत्यन्तिकी निवृत्तिः। तत्त्वज्ञानं नाम तन्मोक्षापरपर्य्यायम् अधिगम्यते नरेण वर्णधर्मानुरूपेण चरता मार्गेण। तदनन्यवृत्तिभिरेव मार्गोऽयम् अस्माभिरनुसरणीयो दुःखसमुच्छेदायेति।

ततस्तत् श्रोत्रपेयम् अमृतनिष्यन्दि तदीयं वागक्षरम् आकर्ण्य परमपरितुष्टहृदयो युवा हर्षोद्वेल्लितनेत्रः प्रत्यवादीत्। अहो महती खल्वियं वाङ्माधुरी। तन्नूनम् अनया कयापि देवतया भाव्यम्। अन्यथा कथम् ईदृशो मृतसञ्जीवनो वाणीविलासो मर्त्त्यप्रभवजनस्य। शृन्वन्तमेवास्या वाग्लहरीं बलवत्कुतूहलि नियोजयति मनः पुनर्मां प्रश्नकर्मणि। भवतीम् अन्तरेण कुतोऽन्यस्याः सम्भवेद् एषा मे कौतुकपरिसमाप्तिः। तदनुगृह्णातु भवती जनमेनं जातिधर्मानुज्ञापनेन पद्मयोनिसङ्काशस्य पितुः सम्मतेन।

बाला। अनुशिष्टाहन्तातेन। वत्स ! अनधिगतशास्त्रतत्त्वस्य विनेता सर्वशास्त्रार्थतत्त्ववित् जनकस्तत्त्वबोधनानुरूपं वर्णमध्यापयति प्रथमम्। ततो ज्ञानोन्मेषक्रमेण विषयगुरुत्वमनुप्रविशत्यस्य शिक्षाविधौ। तथा गुणकर्मानुरूपा जातिर्निर्दिष्टा अज्ञानोपहतेषु मानवेषु सर्वदर्शिभिर्मुनिभिः। जातिवशेनानेन नरः आत्मशक्त्यनुरूपं कर्म आचरन् समधिगच्छति गुरुतरकार्य्यक्षमताम्। नास्ति, वत्स ! अध्यात्मवेदिनो महाजनस्य कोऽपि जातिभेदः। अज्ञानान्धस्य जीवलोकस्य जातिविवेकमन्तरेण सुमहान् जायेत समाजविप्लवः। दिव्यदृष्टयो हि मुनयश्चिरमालोच्य मानसशक्तिं तेषु संस्थापितवन्तो जातिधर्ममात्मक्षमतानुरूपं सर्वेषाम्। नात्र कार्य्यः संशयः। अवस्थापनेन तु संशयवीजस्य नष्टा जायते सर्वथा विमूढशक्तिर्येन सर्वथा हताः स्मः। नास्माकं प्रतिभाति सर्वमेतत् मोहकलुषितत्वात् जनसङ्घस्य। अन्तर्धीयते च तत्त्वमौ ज्ञानालोकेन यत् पुनः स्वधर्मानुष्ठानेन प्रकाशते स्वमात्मानम्। अनुशिष्टास्मि पुनः-पुनः तातेन न कदापि

संशयितव्यं ईश्वरमाहात्म्यं जन्तुना। यस्तु संशयचक्रमारूढ़स्तस्य कार्य्यावलीं परीक्षते नास्त्यवसानं तस्य दुःखस्य। सत्यमेतत् निमित्त-मन्तरेण नैमित्तिकं किमपि न लभते आत्मानं परं यस्यामितशक्ति-विधानादेव नियमोऽयं सर्वत्र प्रभवति तस्मै सर्वेश्वराय नमः। स्मरितास्मि तत्सर्वं त्वदीयवचनेनाधुना।

युवा। भवदीया वाग्लहरी दीपरेखेवालोकयति मे हृदय-कन्दरम्। अपसारयति च मोहजं तमः। नूनं भवती कमलयोनि-मानससम्भूता देवी सरस्वती। यया अशेषसंसारचक्रपरिभ्रान्तं विषयान्धं नरं ग्राहयितुं कर्त्तव्यावधानं परिगृहीता मानवी मूर्त्तिः। पूर्णं मे मनो भवदीयवचनमधुरिम्णा। पूर्णं मे नेत्रं भव-दीय देहकान्तिप्रतिविम्बेन। न जाने किमपरमत्र वक्तव्यमधुना। तत् निद्रायां जागरणे वा नान्यत् किञ्चित् विषयीक्रियते करणैः भवतीम् अन्तरेण। चित्तन्तु अतर्कितमेव गतं ते श्रीपदपङ्कजम्। किं बहुना परवानस्मि, न प्रभवाम्यात्मनि इति असम्पूर्णवारीव नीरराव।

अथ तूष्णीं भूते तस्मिन् सरला निशम्य सर्वं भरागतं तन्मनो विजृम्भितम् आकलय्य च तन्मनोगतं तदैव विहाय तत्सङ्गं प्रत्यागता स्वमुटजम्। तदा प्रभृति नासीदस्यास्तेन सह कुत्रापि गतिः। सरलासङ्गरतिस्तदवधि तस्य यून एकाकिगिरिचरस्य समागच्छत् परं विषादं शून्यं हृदयम्। परं विचित्रोऽस्य विषादस्य प्रकारः। या सरलेव अस्य जीविताधिका प्रिया तस्या विस्मृतिसमुद्भवोऽयं विषादः। को दृश्यते समर्थः प्रज्वलितं निर्वापयितुं दावानलम्। स एव विस्मृतिप्रयत्नस्तस्या आकृतिम् अकरोत् तन्मनसि गाढ़लग्नाम्। ततः अनन्योपायो युवा स्वगुरुदेवमुद्दिश्य समन्तात् आत्मनैव अभाषत जीविते भवति भगवन् नासीन् मे ईदृशो दशाविपर्य्ययः। अहो क्वापरस्त्वादृशो मदनुध्यानपर उपदेष्टा प्राप्तव्यः। सर्वथा हतोऽस्मि।

नाधुना यूनो रहस्यसम्भाषो विधातव्यः सरलया सह। परं समागतायां सन्ध्यायां समुपविशतस्तौ एकत्र यथापूर्वं वृद्धस्योपदेश-श्रवणार्थिनौ। अहो माहात्म्यं यूनो हृदये तस्य कालस्य। सततमेव काम्यतेऽनेन कदा सन्ध्या पाटलिनी समागमिष्यति यदा सा देवी मदीययोर्नेत्रयोर्मार्गे पुनर्विचरिष्यति स्वविग्रहेणेति। अनेन निरतिशयप्रयत्नेनापि विस्मृतिर्न संसाधनीया तस्यासीत्।

अथैकदा सदा सत्यं ब्रूयादिति महावाक्ये साम्योपदेशविषयतां गते तत्रागतायाः श्रोतृपरिषदो मनसि किमिति धर्मप्राणो महानुभावो युधिष्ठिरोऽपि अश्वत्थामाहत इति अनृतां वाचम् अभाषतेति प्रश्नः समजायत। ततस्तस्याः परिषदो मानुषजनसहज-कुतूहलपरितर्पणार्थी वृद्धः स्वकीयेनाभिज्ञतामहिम्ना दर्शनजटि-लतापरिहीनं सत्यव्याख्यानम् अकरोत्। सत्यम् अनृतं वा उद्देश्यतो विचारणीयं न तु नामतः कार्य्यतो वा इति। विशदीकृतं तेन कौशिकवलाकावृत्तान्ताभ्याम्। तदेव सत्यम् उद्देश्यभेदतः अनृततां भजते, तथा अनृतमपि कर्त्तुरुद्देश्यभेदात् यथार्थतां लभते इत्येतत्सर्वं प्रकटीकृतं लोकाचरणविवेकेन। युधिष्ठिरमधिकृत्य स पुनरुवाच। अश्वत्थामाहत इति कथनेन नायं पापभाक् भवति राजा, भगवदनु-शासनाद्धि स एवं भाषते, परं गज इति अक्षरद्वयसंयोगेन भगवद्-वाक्ये संशयप्रदर्शनात् सुमहत् पापम् आपतितम् अस्य येनासौ नरकं दर्शनविषयतां गतम्। उक्तं हि भगवता स्वयं मामेकं शरणं व्रजेति लोकानुग्रहाय धृतविग्रहेण। सत्यानृतकर्त्ता एव भगवान् भूतभावनो नारायणः। अविचारणीयो हि तन्नियोगो भूतानां सर्वेषाम्। तत् प्रत्यादिश्य सर्वं सन्देहलवं समानीय च मनः अनन्याचारैस्तस्मिन् समारोपितव्य आत्मा भवद्भिः वत्साः!। इति वदत एवास्याभवत् नयनयुगलात् अनवरतम् आनन्दाश्रुसेकः।

(क्रमशः)

श्रीउपेन्द्रनाथरायः। वरिशाल., रायेरकाठि।

# शिवनिर्माल्यम् ।

तत्र कोऽयं निर्माल्यपदार्थं इत्याह शब्दकल्पद्रुमे गरुड पुराणम् । अर्वाक् विसर्जनात् द्रव्यं नैवेद्यं सर्वमुच्यते । विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात् ॥" शिवनिर्माल्ये विशेषो यथा स्कान्दे शब्दकल्पद्रुमः । निर्माल्यं यो हि मे भक्त्या शिरसा धारयिष्यति । अशुचिर्भिन्नमर्य्यादो नरः पापसमन्वितः । नरके पच्यते घोरे तिर्यग्योनौ च जायते ॥ ब्रह्महापि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत् । तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रते ॥ शुचिः स्नानादिनेति शेषः । एवञ्च "स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिरिति कालिकापुराणम् अशुचिविषयम् । अनुपनीतविषयमिति श्रीदत्तः । बह्वृचपरिशिष्टम् । "अग्राह्यं शिवनैवेद्यं पत्रं पुष्पं फलं जलम् । शालग्रामशिलास्पर्शात् सर्वं याति पवित्रताम् ॥" इति तिथितत्त्वे शिवरात्रिव्रतप्रकरणे । ॥*॥ तत्र प्रायश्चित्तविवेके शूलपाणिः । "तत्र कालिका पुराणे । स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः । * * एतच्च निर्माल्यापकर्षकालव्यतिरिक्तविषयमिति तट्टीकाकृद्गोविन्दानन्दः ।

अपिच । तान्त्रिकमतम् । "यद् यद् दत्तं महेशानि शिवाय परमात्मने । तत्सर्वं परमेशानि तत्क्षणात् तन्मयो भवेत् ॥ यत्किञ्चिदुपचारं हि लिङ्गोपरि निवेदयेत् । तन्निर्माल्यं महेशानि अग्राह्यं परमेश्वरि ॥" इति लिङ्गार्चनतन्त्रे द्वादशपटले । तस्याग्राह्यत्वनिदानज्ञानाय तत्र त्रयोदशपटले । "त्वन्निर्माल्यं महादेव ब्रह्मादीनां सुदुर्लभम् । अग्राह्यं तव निर्माल्यं कथं वदसि योगभृत् । मध्यस्थानस्थितं यत्तु तन्मुखं परमेश्वरि । श्यामलं तत्तु ईशानं सदा ऊर्द्धं शुचिस्मिते । तेजोमयं महेशानि मुखमूर्द्धं वरानने । क्षीरोदमथने देवि उत्थितं गरलं महत् । इत्यादिमस्तुत्य । ततः करतली-

कृत्य तद्विषं परमेश्वरि। ततः श्यामसुखे देवि निपीय तद्विषं प्रिये। ततः प्रभृति देवेशि मुखं ज्वालायते सदा। कण्ठे तु गरलं भूत्वा सदा तिष्ठति कामिनि। चतुर्दशपटले॥ ईशानस्य महेशानि ज्ञानं परमदुर्लभं। यस्य श्रवणमात्रेण शिवपूजाफलं लभेत्। ईशानं तन्मुखं देवि परं ब्रह्म वरानने। पत्रं वा यदि वा पुष्पं जलं वा वरवर्णिनि। अन्यद्धि परमेशानि उपचारं मनोहरम्। यो दद्यात् परमेशानि तन्मुखोपरि पार्वति। अग्राह्यं तत्तु निर्माल्यं साक्षाद्ब्रह्ममयं यतः। एतत्तु परमेशानि निर्माल्यं यस्तु धारयेत्। स भ्रष्टो जायते देवि निष्कृतिर्नास्ति तस्य वै। अग्राह्यं मम निर्माल्यमत एव वरानने। उपचारं स्थापयित्वा पूतं पात्रान्तरे प्रिये। कृत्वा तु मन्त्रपूतं हि उपचारं निवेदयेत्। वामदेवादिषु सदा सुखेषु वरवर्णिनि। भक्षणं मम देवेशि ब्रह्माण्डभस्मकारकम्। एतद्धि परमेशानि ब्रह्मादीनां सुदुर्लभम्। अशुचिर्वा शुचिर्वापि उच्छिष्टं भक्षयेद् यदि। स एव परमाराध्यं साक्षाद्ब्रह्म शुचिस्मिते। निर्माल्यं दृढभक्तित्वात् गृह्णीयाद् यस्तु पार्वति। प्रथमं विष्णवे दद्याद्विष्णुमन्त्रेण सुन्दरि। निर्माल्यं मम देवेशि विष्णोर्ग्राह्यं महेश्वरि। देवासुरमनुष्याश्च गन्धर्वाः किन्नरा-दयः। ते सर्वे परमेशानि वराकाः क्षुद्रबुद्धयः। निर्माल्ये मम देवेशि अधिकारी भवेत् कथम्॥ मातृकाभेदतन्त्रे चतुर्थपटले। श्रीशङ्कर उवाच। निर्माल्येन लभेत् स्वर्गं निर्वाणं सुधया भवेत्। पाप-युक्तोऽपि चण्डालो निर्माल्यं गृह्यते यदा। तदा मोक्षं लभेत् सत्यं शिवरूपो न चान्यथा। द्रव्यमन्नं फलं तोयं शिवस्य न स्पृशेत् क्वचित्। न नयेच्छिवनिर्माल्यं कूपे सर्वं विनिः क्षिपेत्। मक्षिकापादमात्रं यः शिवस्वमुपजीवति। लोभान्मोहात् पतत्येव कल्पान्तं नरके नरः।

(क्रमशः

When it is used with an imperative it means "granted"; "it may be that," "if you like"; as एवमस्तुनाम (well, be it so).

वरं—न ।

वरं with न generally followed by च, तु or पुनः is used in the sense of "better than," "better—but not," 'preferred to' etc.; वरं कन्याजाता न च अविद्वांस्तनयः (better a girl be born than a foolish son); याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ।

स्थाने ।

स्थाने is used as an adverb in the sense of 'justly' 'properly' etc.; स्थाने खलु ऋषिजनेन सर्वदमन इतिकृत-नामधेयोऽसि ; स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथा हि ते ; स्थाने हृषीकेश तव प्रकीर्त्या जगत् प्रहृष्यत्यनुरज्यते च ।

अस्थाने means "in opportune", "out of place", as अस्थाने द्वयोरपि प्रयत्नः (the attempt of both was out of place).

---

## NAMES OF THE TWELVE MONTHS OF THE YEAR.

1 वैशाखः ( माधवः )। 2. ज्यैष्ठः ( शुक्रः )। 3. आषाढ़ः ( शुचिः )। 4. श्रावणः ( नभाः )। 5. भाद्रः ( नभस्यः ) । 6. आश्विनः ( इषः ) । 7. कार्त्तिकः ( ऊर्जः ) । 8. अग्रहायणः ( सहाः or मार्गशीर्षः ) 9. पौषः ( सहस्यः ) । 10. माघः ( तपः ) । 11. फाल्गुणः ( तपस्यः ) । 12, चैत्रः ( मधुः ) ।

The hindu astronomers embodied the twelve months of the year in tne following couplet.

श्रीपतिः{ मधुस्तथामाधवसंज्ञकश्च शुक्रः शुचिश्चाथ नभो-नभस्यौ।
इषस्तथोर्जश्च सहः-सहस्यौ तपस्तपस्याविति ते क्रमेण॥
"रत्नमाला।

## NAMES OF THE SIX SEASONS.

(1) ग्रीष्मः—ज्यैष्ठः and आषाढ़ः ( शुक्रः and शुचिः )

(2) वर्षाः—श्रावणः and भाद्रः ( नभाः and नभस्यः )

(3) शरत्—आश्विनः and कार्त्तिकः ( इषः and ऊर्जः )

(4) हेमन्तः—मार्गशीर्षः and पौषः ( सहाः and सहस्यः )

(5) शीतः—माघः and फाल्गुणः ( तपः and तपस्यः )

(6) वसन्त—चैत्रः and वैशाखः ( मधुः and माधवः )

---

## NAMES OF FRUITS ( फलम् )

1. आम्रं—आम (mango). 2. जम्बुकम्—जाम।

3. नारिकेलम्—नारिकेल (co-coanvt).

4. विल्वम्—वेल। 5. पूगफलम्—शूपारि (betelnut).

6. रम्भाफलम् or कदलीफलम्—कला (plantain).

7. तालिफलम् or तालम्—ताल (palm fruit).

8. हरीतकी—हर्त्तकी। 9. आमलकम्—आमलकी।

10. कतकम्—निर्म्मलीफल।

11. दाड़िम्बफलम्—दाड़िम फल (the pomegranate fruit)

12. द्राक्षा—आङुर फल (grape).

13. तिन्तिड़ीफलम्, अम्लाफलम् }—तेतुल (tamarind fruit).

14. आम्रातकम्—आमड़ा।

15. पनसम्—काँठाल (jack fruit).

16. नारङ्गम्—कमला लेबु (orange).

17. खर्जुरम्—खेजुर (date).

18. वदरम् or कोलि:—कुल (plum).

19. जम्बीरम्—बातावी लेबु (the citron fruit).

---

## NAMES OF CORNS (शस्यम्)।

धान्यम्—धान (rice).
कलम:—आमनधान।
यव:—यव (barley).
गोधूम:—गम (wheat).
व्रीहि: rice.
माषा:—माषकलाइ (beans).
तिल:—तिल (sesamum).

N. B. माष is used for the plant and the plural माषा: for the seed.

---

## NAMES OF PLANTS AND TREES.

लशुनम्—रशुन शाक।
पलाण्डु:—पियाज शाक।
कुश:—कुश घास।
बिल्व:—बेलगाछ।
कदली—कला गाछ।
जम्बाल: or शैवालं—moss
तमाल:—तमाल गाछ।
शरल: or सरल:—शाल गाछ।
जम्बुक:—जाम गाछ।
नारिकेल:—नारिकेल गाछ।

कतक:—निर्मलीगाछ।
द्राक्षा—द्राक्षालता।
काश:—Kasa grass which is used for mats, roofs &c.
छत्राकं—बेङेर छाता (mushroom)
पिङ्गाशी—नीलेर गाछ (indigoplant)
आम्र:—आमगाछ।
शाल्मली—शिमूल गाछ।
आमलक:—आमलकी गाछ।

पूग:—शुपारि गाछ। खर्जुरः—खेजुर गाछ।

तालः—ताल गाछ। बदरी—कुल गाछ।

---

## NAMES OF FLOWERS AND FLOWER PLANTS.

जवा—both the china rose tree and its flower.

शेफालिका—both the tree and its flower.

कमलम्—the waterlily and कमलिनी—the plant.

काशम्—Kasa flower, काशः—Kasa grass.

कुन्दम्—कुँद फुल ; कुन्दः—the plant,

कुरवकम्—लालझिण्टी फुल ; कुरवकः—the tree.

शिरीषम्—the flower ; शिरीषः—the tree.

मल्लिका—both the flower and the plant of the same name.

पलाशम्—the flower and the plant of the same name.

जातिः or जाती—both the flower and the plant of the same name.

युथी or युथिका—both the flower and the plant of the same name (जुइ फूल)।

गन्धराजम्—the flower and गन्धराजः—the plant.

कृष्णचूडा—both the flower and the tree of the same name.

(क्रमशः)

श्रीउपेन्द्रचन्द्ररायः—बरिशाल रायेरकाठी।

---

# समस्यापूर्त्तयः।

रक्ताम्बरा स्फुटितपुष्पमनोज्ञहास्या
कल्लावलीविमलहारगलातिरम्या।
कूजत्पतत्रिगणकिङ्किणिमञ्जुघोषा
"सन्ध्यावधूरिव मुदन्नतनोति कस्य" ॥१॥

उत्तोलितो रावणराक्षसेन यदेत्यपर्णा चपलं महेशम्।
पप्रच्छ शम्भो भवतस्थिता यं गिरौ किमुच्चैः प्रचलो गिरीन्द्रः" ॥२॥

सन्धौ सन्धवलात्समस्तजगतां कुड्डीपमं दर्शयेत्
पश्चात्सभ्यजनाः परस्परमिदं साश्चर्य्यमेवं जगुः।
विद्वन्मित्रविचित्रमत्रनिखिलं संज्ञायतां कौतुकं
"किम्वा कुट्टिममेव पद्मजनुषा नीरात्मना निर्मितम्" ॥३॥

पश्येन्दुमुग्धमुखि पोटगलेक्षु गन्धा
चैत्राम्बचित्रमयि भामिनि भाति कान्ते।
मन्येऽधुना तुहिनजालभयात् सुबुद्धे
"नीगारमेव वसुधा विभराम्बभूव" ॥४॥

विद्वत्सतिमतां सान्य श्रूयताम्वचनं मम।
मनश्चतुर्ज्जलचरश्चरन्नपि स्थहस्थितः ॥५॥

उत्तरकर्त्ता मिश्रोपाह्व श्रीवीरभद्रशर्म्मा
विहार हाई स्कूल भागलपूर हेडपण्डिताख्यः

---

उद्यच्छशाङ्कवदना च तमोऽशुकेयम्
तारानिभेण नवभूषणमावहन्ती।
सिन्दूररागमिव चारुणिमां दधाना
"सन्ध्या वधूरिव तनोति मुदं न कस्य" ॥१॥

कैलासशृङ्गे हिमवान् कदाचित् द्रष्टुं सुतां स्वां समुपाजगाम।
निरीक्ष्य तं शम्भुगणाः शशंसुः "गिरौ किमुच्चैः प्रचलो गिरीन्द्रः" ॥२॥

दृष्ट्वाच्छोदसरः प्रफुल्लकमलं भ्राजद्धरित्पत्रकम्
ऐन्द्रेण प्रतिबिम्बितं च धनुषा, तर्कः समुत्पद्यते।
किञ्चेदं वरुणस्य सद्म रुचिरं रत्नप्रभाभास्वरम्
"किंवा कुट्टिममेव पद्मजनुषा नीरात्मना निर्मितम्" ॥३॥

चक्रे यदा रघुपतिर्दनुजैः सुयुद्धम्
छन्नं रजो वियति गाढ़तरं, ततश्च।
कश्चित् कविः कथयति स्म विचार्य्य, सत्यं
"नीशारमेव वसुधा बिभरां बभूव" ॥ ४ ॥

स्नेहिपीड़नचक्रस्य संसर्गान्नाप्यते फलम्।
चक्रयुतां नृपं पश्य "चरन्नपि गृहस्थितः" ॥ ५ ॥

गो० श्रीहरिनारायणशास्त्री।
अजमेर।

---

दृष्टाऽतितापकदिनापगमे नवीना,
हीना हि नीलमुख-लम्बिपयोधरेण।
रागान्विता पिकरवा सकलाभिवन्द्या,
"सन्ध्या वधूरिव तनोति मुदं न कस्य" ॥१॥

मरुत्तनूजेऽर्णवलं घनाय, विवर्धमाने जनता महेन्द्रे।
"गिरौ किमुच्चैः प्रचलो गिरीन्द्र" इति स्म शङ्काकुलिताब्बभूव॥२॥

पम्पारोधसि राघवो हृदि गतां कान्तामुवाचोत्सुकः
किं श्यामहंस-विड़म्बिसुन्दरगते सीते ! पयस्यम्बुजम्।

"किम्वा कुट्टिममेव पद्मजनुषा नीरात्मना निर्म्मितम्"
त्वत्यादाङ्कितयावकं रचयता हंसोपदेशम्मनाक् ॥३॥
क्रुद्धे हरौ तपनगोत्र महेन्द्ररत्ने युद्धे दशाननविघातन सिद्धयत्ने ।
शत्रुत्तरीयरथकम्बल दारकेश "नीशारमेव वसुधा विभराम्बभूव" ॥४॥
समीपे वर्त्तते यस्य गृहिणी पुष्कलं धनम्
अथवा शान्तिरच्छिन्ना "चरन्नपि गृहे स्थितः" ॥५॥

श्रीनरसिंह भीमाचार्य्य पुणेकर
कित्तुर, वेलगांव, वुम्बइ, ।

---

अस्तोदयाचल विलम्बिरवीन्दुविम्ब-
व्याजात् क्षणं श्रवणयोर्धृतकर्णपूरा ।
ताराच्छलेन कुसुमानि समुत्क्षिपन्ती
"सन्ध्या वधूरिव तनोति मुदं न कस्य" ॥१॥
समागतेऽस्मिन् सखि भाद्रमासे समुत्थितं मेचमधित्यकायाम् ।
विलोक्य भीताह वियोगखिन्ना "गिरौ किमुच्चैः प्रचलो गिरीन्द्रः" ॥२॥
रामो वानरवाहिणी-शतयुतो लङ्काम्विजेतुङ्गतः
दृष्ट्वा नीरमपां निधेस्तु कपयः साश्चर्य्यमूचुस्तदा ।
हंहो काचमयीयमेव पृथिवी सङ्कारिता राक्षसैः
"किम्वा कुट्टिममेव पद्मजनुषा नीरात्मना निर्म्मितम्" ॥३॥
प्राप्ते वसन्तसमये निखिलानि चेता- (?)
ण्याच्छादितानि यवसर्षपशस्य पुष्पैः ।
दृष्ट्वा तदा सुकविराह प्रसन्नचित्तो
"नीशारमेव वसुधा विभराम्बभूवः" ॥ ४ ॥
पुत्रभृत्यकलत्राणि सन्ति वित्तानि सर्वदा ।
यस्य सङ्गे प्रदेशे स "चरन्नपि गृहस्थितः" ॥५॥

साधुः प्रशस्यते कीदृङ् निश्चये च किमव्ययम् ।
को निराद्रियते विद्वान् "चरन्नपि गृहस्थितः" ॥६॥

अन्तर्लापकोऽयं श्लोकोऽस्मिन् पादत्रयस्यप्रश्नोत्तराणि तुरीय-चरणे वर्त्तन्ते ।

शुक्लगुल्लुदत्तोनामक पण्डित
परमसुखशर्मा (जगनेर आगरा)

---

आरक्तिमिन्दुवदनादमृतं स्रवन्ती
क्लान्ताय शान्तिमखिलां ददती दिनान्ते ।
लोकस्य तप्तवपुषो नुदती च तापं
सन्ध्या वधूरिव तनोति मुदं न कस्य ॥१॥

सुप्तः प्रगाढमचलोऽतिविहारखिन्नः
धृत्वा ह्रि वक्षसि च निर्झरिणीं निशान्ते ।
रोढुं जने चणमतस्तु कुहेलिकानां
"नीशारमेव वसुधा बिभराम्बभूव" ॥२॥

सीते ! रत्नमयं विहाय शयनं शेषे कथं भूतले ?
प्राणाः शीतलतां भजन्ति सरमे ! भूयो धरास्पर्शनात् ।
नो जाने दयिताङ्घ्रिधारणगुणान् मातेति वैषा सुखा (?)
"किंवा कुट्टिममेव पद्मजनुषा नीरात्मना निर्मितम्" ॥३॥

रक्षो हरत् रामसुरम्य रामां जटायुषं वीक्ष्य विलङ्घ्य शैलम् ।
आयान्तमालोचयति प्रमोहात् "गिरौ किमुच्चैः प्रवलो गिरीन्द्रः" ॥४

( रामस्य सीतां प्रत्युक्तिः । )

तदेव जीव्यं ते प्रेम पेयं ते वचनामृतम् ।
त्वया कान्ते धरान्तेऽहं "चरन्नपि गृहस्थितः" ॥

श्रीज्ञानशरणशर्मणः, लक्ष्णो ।

(क्रमशः

## श्री १०८ आनरेबल् सार प्रतापनारायण सिंहजी वीरेश के० सी० आई० ई०, आयोध्या-ऽधिपस्य प्रशस्तिः ।

श्रीमत्प्रताप महिपाल ! विशालभाल !
काव्यार्थचिन्तककवीश्वरकण्ठमाल ! ।
नित्यं प्रजाजनविपत्तिविनाशकाल !
भूयाः सदा सुखसमृद्धिसुतान्वितस्त्वम् ॥१॥

विद्वल्ललाम ! भुवि विश्रुत ! पूर्णकाम !
विश्वोपकाररत ! सर्वगुणैकधाम ! ।
प्रादेश्य "कौंसिल" सभासदसत्प्रदीप !
कीर्त्तिर्दिवं व्रजतु ते सततं महीप ! ॥२॥

वाल्मीकिजा, कविकुलस्तुतकालिदास-
पत्नी, सुबन्धुधनिकादिक-पूज्यमाता ।
जीर्णाऽखिलाङ्ग कवितावनिता चिरेण
त्वां प्राप्य वैद्यमिव नीरुजतां दधाति ॥३॥

या "के-सि-आइ-इय" इत्यतिमानमूला
दत्ता प्रशस्तपदवी भवति च राज्ञ्या ।
कार्तस्वरेण सह रत्नमिवाविभाति
सा कोशलेश ! तव नाम-समागमेन ॥४॥

त्वां वीक्ष्य दान निरतं सततं नरेश !
लज्जाविनम्रवदनः सुरपादपः सः ।
शङ्के सुमेरुगिरिगह्वरमाविवेश
नो चेत्, कथं न भुवि लोचनलक्ष्यमेति ? ॥५॥

दानं दयाधन! दयां नयनैपुणञ्च
शास्त्रे गतिं जनहिताऽऽचरणे रतिं ते।
दृष्ट्वा दिलीपरघुरामकुशाज-मुख्यान्
भूपांश्च न स्मरति पूर्वभवानयोध्या॥६॥

स्वप्नेऽपि न द्विजपतिं त्वमधः करोषि
मायां तनोषि च महीप! न शात्रवेऽपि।
न त्वं समाक्षिपसि देव! वृषं कदाऽपि
तेनोपमा भवतु ते कथमच्युतेन?॥७॥

दीपाङ्कुरैर्दिनकरस्य कराऽभिपूर्त्ती
रत्नाकरस्य भरणञ्च तुषारतोयैः।
वैचित्र्यमावहति नाथ। यथा जनानां
कीर्त्तिस्तथैव कविभिस्तव गीयमाना॥८॥

अत्यन्त-विस्तृत-पवित्रयशस्त्वदीयम्
सर्वासु दिक्षु परितः स्वतनुं तनोतु।
येनाऽखिल प्रवरपण्डित-दत्तमान!
तूष्णीं प्रहृष्टहृदयः परमां व्रजामि॥९॥

महावीरप्रसाद द्विवेदी। झांसी।

---

## अज्ञानबोधिनी।

(पूर्वतोऽनुवृत्ता)

ततः अज्ञानतत्कार्य्यदेहरूपनिवृत्तेः तदा देहादिसम्बन्धाभावात् न शिष्यादिशासनं ह्युपपद्यते। अथानवगतब्रह्मात्मभावः स्यात्। तस्मात् देहादिसम्बन्धोऽङ्गीकर्त्तव्यः। यद्यवगतब्रह्मात्मभावः स्यात् तदाऽज्ञान-तत्कार्य्यनिवृत्तेः तस्मादाचार्य्याधीनं ज्ञानमपेक्षते इति श्रुतेः वचः। भो भगवन्! इति सति शिष्यशासनं सम्भवति। ब्रह्मज्ञाने जाते सति

हेताभावात् तदा शिष्यशासनं कथं स्यात्। अत्र नायं दोषः। ज्ञानिनो ब्रह्मात्मज्ञाने जाते तेन बाधितस्यापि सञ्चितकर्म्मणां प्रारब्धफलं तस्य कर्म्मणोऽबाधितम् अत एव ज्ञानिनस्तु प्रारब्धवेगवशात् देहादि प्रतिभासते। अथावगतं ब्रह्मात्मज्ञानं सम्प्रदायक्रमेण उपदिश्यते। तस्मादाचार्य्याधीनं ज्ञानम्। ज्ञानात् मोक्ष इति सिद्धम्। तस्मात् वेदोक्तशमदमादिसाधनचतुष्टयसम्पन्नो ब्रह्मविदमाचार्य्यमुपेत्य साष्टाङ्गं प्रणिपातं कृत्वा समित्पाणिः पुरत उपविश्य विज्ञापयति। तथाच श्रुतिः "समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं गुरुं तत्त्वज्ञानार्थमभिगच्छेत्" भो भगवन्! संसारतापत्रयार्कसन्तप्तोऽहम्। अस्य तापस्य निवृत्तिं कुरु ममेति विज्ञापितः सन् गुरुरुपदिशति। कथम् इत्थं तव ब्रह्मात्मैकत्वभावे ज्ञाने जाते संसारनिवृत्तिर्भविष्यति इति नान्यथा। भो भगवन्! मम ब्रह्मात्मैकत्वभावना तत्केन भविष्यति। तत् शृणु। आदौ त्वं पदशोधनेन जीवत्वं निरस्य शुद्धो भविष्यति। तदा ब्रह्मात्मैकत्वभावो भवति। यथाय आदिक्षितचन्दनवृक्षोऽज्ञस्यासम्भावना भवत्येव नेदं चन्दनमिति। अन्यस्तदभिज्ञो युक्त्या प्रतिबोधयति कटुकं सुगन्धं शीतलं चन्दनमिति तथा श्रुत्यावधारितस्य तत्त्वं ब्रह्म महावाक्यार्थस्य तात्पर्य्यं गुरुर्युक्त्या प्रतिबोधयति। चित्सदानन्दस्वरूपस्त्वं तदा सम्भावयति। भो भगवन्! सा शोधनयुक्तिः कथम्। इत्थम् अरे शिष्य! इदं शरीरं दृश्यं जड़मनित्यममङ्गलं त्वन्न भवसि। भो भगवन्! दृश्यं जड़मनित्यममङ्गलं कथम्। इत्थं यत्तत् शरीरोत्पत्तेः प्रागेतत् शरीरं तव नास्ति यत इदं शरीरं त्वन्न भवसि। यत्तत् शरीरं नाशादूर्द्ध्वमेतत् शरीरं तव नास्ति। ततः इदं शरीरं त्वन्न भवसि। अतो वर्त्तमानेऽपि इदं दृश्यशरीरं त्वन्न भवसि। किं च ममेदमिति शरीरं प्रतीयते। अतस्ततः सकाशाद्भिन्नस्त्वं द्रष्टा इदं तव दृश्यं शरीरं त्वन्न भवसि। दृष्टान्तेन प्रतिपादयति यथा दाह्यप्रकाश्यत् काष्ठात् व्यतिरिक्तो दाहकः प्रकाशकोऽग्निः। तथा दृश्यात् देहात्

द्रष्टा त्वं व्यतिरिक्तः इति सिद्धम् । अन्यच्च स्वप्नान्ते दिव्यशरीरभेदमा-
स्थाय तदुचितान् भोगान् भुञ्जान एव प्रतिबुद्धो मनुष्यशरीरमात्मानं
पश्यन्नाहं देवो मनुष्य एवेति देवशरीरे बाध्यमानेऽपि अहमास्पदं
न बाध्यमानम् । अतस्त्वं शरीराद्भिन्न एव । कस्मात् स्वापमरणादौ
दर्शनात् । अपिच योऽहं कौमारे नानाक्रीड़ामन्वभवं सोऽहं स्थविरे
मुनिवृत्तिं स्थितः । एवं त्वं वदसि तदा स्थविर-कुमारशरीरद्वयं
तस्य व्यवहारस्य त्वं द्रष्टा इदं शरीरं त्वन्न भवसि । द्रष्टा दृश्यादन्य
इति प्रसिद्धो न्यायो लोके दृश्यते घटादिवत् । यथा घटादयो रूपा-
दिमन्तश्चक्षुरादिभिः करणैरुपलभ्यते । अतः इदं शरीरं तव दृश्यं
त्वं द्रष्टा इति सिद्धम् । अपिच जड़त्वं प्रदर्शयति पञ्चीकृत्य च
महाभूतानि त्वमेव जानासि तानि स्वात्मानं न जानन्ति परमपि
न जानन्ति । अत्यन्तजड़ानि तानि । तानि त्वन्न भवसि । तदंशोद्भव-
मिदं शरीरमपि त्वन्न भवसि । स्वामिन् ! तदंशोद्भवमिदं शरीरं
कथं इत्यम् । यत्काठिन्यं सा पृथिवी । यद्द्रवं तदापः यदौष्ण्यं तत्तेजो
यः सञ्चरति स वायुः यत्सुषिरं तदाकाशमिति । यतस्तानि सर्वाणि
भूतान्यस्मिन् शरीरे दृश्यन्ते । तानि सूक्ष्माणि अस्थिमांसप्रभृतीनि
पञ्चविंशतिगुणकानि भवन्ति । पञ्चमहाभूतानि तेषां समूह एवेदं
शरीरं जड़ं दृश्यं त्वन्न भवसि । भो भगवन् ! स्थूलशरीरे पञ्चमहा-
भूतानि पञ्चीकरणानि श्रूयन्ते । पञ्च दृश्यन्ते । तानि कानि पञ्च-
विंशतिगुणानि । उच्यन्ते अस्थिमांसस्नायुत्वक्रोमाणि एव पृथिवी
पञ्चधा भवति । रेतो मूत्रस्तथास्वेदो लालारक्तस्तथैव च एव आपः
पञ्चधा भवति । क्षुधा तृषा निद्रा कान्तिरालस्यम् एव तेजः पञ्चधा
भवति । धावनं प्रसारणम् उत्क्रमणं चलनं सङ्कोचनम् एव वायुः
पञ्चधा भवति । कामः क्रोधस्तथा लोभो मोहमात्सर्य्यमेव च ।
विषयश्चैवं विधं ज्ञेयं दृष्टव्यं देहमध्यतः ॥ तथा ग्रन्थान्तरे ।
कट्युदरहृदयकण्ठशिर एव आकाशं पञ्चधा भवति । अयं पृथिवी ।

मोहमुदकम्। क्रोधोऽग्निः। कामो वायुः। लोभ आकाशमिति मता-न्तरे। भो भगवन्! एकैकभूतं पञ्चधा किमिति चेत्? उच्यते परस्प-रानुप्रवेशात् पञ्चीकरणम्। भगवन्! कस्य भूतस्य को वांशः कस्मिन् भूते प्रविष्टः का स्थितिः। उच्यते पञ्चानां भूतानां प्रत्येकं द्विधा विभज्य तत्रैकमेकसर्द्धं चतुर्द्धा विभज्य स्वांशं परित्यज्य तेषु योजनं कार्य्यं पञ्चीकरणम् एवं पञ्चीकृतेभ्यः उच्यते। अस्थिमुख्या पृथिवी विचार-बलात् काठिन्यपीतवर्णौ च। मांसमुदकं सद्रवत्वात्। वायु तेजः ज्वरे परीक्षणात्। त्वक् वायुः स्पर्शधर्म्मत्वात्। रोमाकाशम्छेदने दुःखाभावात्। रेतो मुख्यमुदकं गर्भोत्पत्तिशुभ्रवर्णौ च। मूत्रं तेजः उष्णाङ्गत्वात्। स्वेदो वायुः श्रवप्रसङ्गत्वात्। लालाकाशमूर्द्धोऽधोगमनात्। रक्तं पृथिवी लोहितत्वात्। क्षुधामुख्योऽग्निः पाचकस्वभावत्वात्। तृषा वायुः शोषणधर्म्मत्वात्। निद्राकाशं शून्यस्वभावत्वात्। कान्तिरुदकं प्रसन्न-त्वात्। शीतोष्णसम्बन्धात् कृष्णलोहितत्वं भवति। आलस्यं पृथिवी जाड्यत्वात्। धावनं मुख्यो वायुः सबलत्वात्। प्रसारणमाकाशं व्याप-कत्वात्। उत्क्रमणं तेज उत्कृष्टव्यापारत्वात्। चलनमुदकं शिथिल-त्वात्। सङ्कोचनं पृथिवी जाड्यस्वभावत्वात्। शिरः स्थावकाशः मुख्याकाशम् अनाहतशब्दस्थानत्वात्। कण्ठस्थावकाशः वायुः मुख-नासिकयोः प्रचरणत्वात्। हृदयावकाशोऽग्निः सर्वदा उष्णस्थि-तित्वात्। उदरस्थावकाशो जलं जलाशयत्वात्। कट्यवकाशः पृथिवी गन्धस्थानत्वात्। एवं समूहात्मकं जड़ं त्वन्न भवसि। भो भगवन्! सुखदुःखं जानन् कथं शरीरं जड़म्। एतत् शृणु। देहो न जानाति सुखदुःखे। यतो भौतिको दृश्यो जड़श्च। भूतानि कदापि न जानन्ति तदंशा अपि न जानन्ति। अतः तदंशसङ्घातो देहः कथं जानीयात्। अपिच देहः सन्नपि उत्थितं पतितं वा न जानाति। सुषुप्तौ चौरो गृहे प्रविश्यापहृत्याभरणानि याति इति।

(क्रमशः)

## यौधिष्ठिरी बुद्धिः ।

(पूर्वतोऽनुवृत्ता)

यक्ष । तपः किं लक्षणं प्रोक्तं को दमश्च प्रकीर्त्तितः ।
क्षमा च का परा प्रोक्ता का च ह्रीः परिकीर्त्तिता ॥

युधि । तपः स्वधर्मवर्त्तित्वं मनसो दमनं दमः ।
क्षमा द्वन्द्वसहिष्णुत्वं ह्रीरकार्य्यनिवर्त्तनम् ॥

यक्ष । किं ज्ञानं प्रोच्यते राजन् ! कः शमश्च प्रकीर्त्तितः ।
दया च का परा प्रोक्ता किञ्चार्जवमुदाहृतम् ॥

युधि । ज्ञानं तत्त्वार्थसंबोधः समश्चित्तप्रशान्तता ।
दया सर्वसुखैषित्वमार्जवं समचित्तता ॥

यक्ष । कः शत्रुर्दुर्जयः पुंसां कश्च व्याधिरनन्तकः ।
कीदृशश्च स्मृतः साधुरसाधुः कीदृशः स्मृतः ॥

युधि । क्रोधः सुदुर्जयः शत्रुर्लोभो व्याधिरनन्तकः ।
सर्वभूतहितः साधुरसाधुर्निर्दयः स्मृतः ॥

यक्ष । को मोहः प्रोच्यते राजन् ! कश्च मानः प्रकीर्त्तितः ।
किमालस्यञ्च विज्ञेयं कश्च शोकः प्रकीर्त्तितः ॥

युधि । मोहो हि धर्म्ममूढ़त्वं मानस्त्वात्माभिमानिता ।
धर्म्मनिष्क्रियमालस्यं (*) शोकस्त्वज्ञानमुच्यते ॥

यक्ष । किं स्थैर्य्यमृषिभिः प्रोक्तं किञ्च धैर्य्यमुदाहृतम् ।
स्नानञ्च किं परं प्रोक्तं दानञ्च किमिहोच्यते ॥

युधि । स्वधर्म्मे स्थिरता स्थैर्य्यं धैर्य्यमिन्द्रियनिग्रहः ।
स्नानं मनोमलत्यागो दानं वै भूतरक्षणम् ॥

यक्ष । कः पण्डितः पुमान् ज्ञेयो नास्तिकः कश्च उच्यते ।
को मूर्खः कश्च कामः स्यात् को मत्सर इति स्मृतः ॥

---

* स्वसामर्थ्ये सति व्रतादौ प्रतिनिधिदानं निष्क्रयः ।

युधि। धर्म्मज्ञः पण्डितो ज्ञेयो नास्तिको वेदनिन्दकः।
धर्म्मानभिज्ञो मूर्खः स्यादिति जानन्ति कोविदः॥
कामः संसारहेतुश्च हृत्तापो मत्सरः स्मृतः॥

यक्ष। कोऽहङ्कार इति प्रोक्तः कश्च दम्भः प्रकीर्त्तितः।
किं तद्दैवं परं प्रोक्तं किं तत् पैशुन्यमुच्यते॥

युधि। महाज्ञानमहङ्कारो दम्भो धर्म्मध्वजोच्छ्रयः।
दैवं दानफलं प्रोक्तं पैशुन्यं परदूषणम्॥

यक्ष। धर्म्मश्चार्थश्च कामश्च परस्परविरोधिनः।
एषां नित्यविरुद्धानां कथमेकत्र सङ्गमः॥

युधि। यदा धर्म्मश्च भार्य्या च परस्परवशानुगौ।
तदा धर्म्मार्थकामानां त्रयाणामपि सङ्गमः॥

यक्ष। अक्षय्यो नरकः केन प्राप्यते भरतर्षभ।
एतन्मे पृच्छतः प्रश्नं शीघ्रं वक्तुमिहार्हसि॥

युधि। ब्राह्मणं स्वयमाहूय याचमानमकिञ्चनम्।
पश्चान्नास्तीति यो ब्रूयात् सोऽक्षयं नरकं व्रजेत्॥
वेदेषु धर्म्मशास्त्रेषु मिथ्या यो वै द्विजातिषु।
देवेषु पितृधर्म्मेषु सोऽक्षयं नरकं व्रजेत्॥

यक्ष। राजन् कुलेन वृत्तेन स्वाध्यायेन श्रुतेन च।
ब्राह्मण्यं केन भवति प्रब्रूहि तत् सुनिश्चितम्॥

युधि। शृणु यक्ष! कुलं तात! न स्वाध्यायो न च श्रुतम्।
कारणं हि द्विजत्वे च वृत्तमेव न संशयः॥
वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः।
अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतो हतः॥
चतुर्वेदोऽपि दुर्वृत्तः स शूद्रादतिरिच्यते।
योऽग्निहोत्रपरो दान्तः स ब्राह्मण इति स्मृतः॥

(क्रमशः)

# शिशुहास्यम् ।

( पूर्वप्रकाशितात्परम् )

विमलदिव्यसुतर्पणजन्मभूः, मधुरहास्यविभावरमावधिः ।
सरलता कुलमन्दिरमीक्ष्यते, समुदिता शिशुहास्य-विभावली ॥१६॥

न मधुरः सकलः क्षणदाकरः, न सुखदो मलयस्यसमीरणः ।
मलयजाम्बुततिर्न च शीतला, सुखकरं शिशुहास्यमहो यथा ॥१७॥

सरसिजं विभया मधुनापि च, सुषमयापि च नन्दनकाननम् ।
सुखयितुं न तथा परिशक्नुतः, सरसहास्यमिदं मधुरं यथा ॥१८॥

न घटतेऽस्य कियांश्चरणप्रभा, मृदुलवोऽपि सरोजदलावली ।
न मधुरे सकलेऽस्ति विधावपि, किशलये नवरक्तविभेऽपि न ॥१९॥

सुफलदः खलु कल्पमहीरुहः, यदिह दातु मलं परिशच्यऽति ।
सविनयं चतितोऽपि न तद्ध्रुवं, इदमयाचितमेव नियच्छति ॥२०॥

इह नवाक्षतयो ! भवतां मुहुः, हसनमेव गतं नवपुञ्जताम् ।
जनयति क्षणमात्र नु ! विद्युतो जनमनःसु विभास्मतिमुज्ज्वलाम् ॥२१

क्व लभते वसतिन्त्वमरावती ?, क्व सुषमामयमस्ति च नन्दनम् ? ।
अविदुषोऽपि ममैव विनिश्चयः, इदमहो ! जगतां रुचिरं स्वतः ॥२२॥

नवनवं कुतुकं मधुरोत्तरं, जनयतः शिशुहास्यकुलस्य तत् ।
अभिलषामि पुनः पुनरीक्षणं, न सहसान्तमुपैति सुवासना ॥२३॥

पुनरपि स्वयमेव सुबालकाः !, सुखमिदं परिदर्शयत क्षणम् ।
यदधुना प्रविलोक्य मनो मम, त्रिदिववासिसुखावलिमाप्स्यति ॥२४॥

अनुमिनोमि, भवद्धसनावली, सुमधुरस्वरजातमिदं स्मरन् ।
परभृतश्रुतपुष्परसावलिं, सुखमदन्नपि रौति न लज्जया ॥२५॥

ननु भवन्ति न किं हसनालयाः ?, कपटतानृतदूष्यतयाङ्किताः ।
यदिह ते ; तत एव न हि क्षमाः, हसनमेतदलं प्रतिगर्जितुम् ॥२६॥

सुरुचिरः सरसः सुचिरस्थिरो, मधुरिदं खलु वोऽस्य समागमे ।
व्रततिवन्मृदुभावगणाः स्वतः, कुसुमवत् कुतुकानि विभान्ति यत् ॥२७

भुवनसुन्दरवस्तुविभाकुलैः, सकरुणो भगवान् जगतीपतिः ।
सुविदधे शिशुहास्यमिह स्थिरं, इति मया विविदेऽलमनुत्तमम् ॥२८॥
इत, सुखं मधुरं सुनिषीदत, सरलताकरुणादिविभूषिताः ।
सुशिशवः ! सरसञ्च समन्ततः, हसत ; मज्जतु मे हृदयं सुखे ॥२९॥

आशास्महे ; नु ! शिशवः ! सततं समन्तात्
हास्यादिकौतुककुलं मधुरं विकीर्य्य ।
संसारतप्तमनसोऽपि मनः कुरुध्वं
आनन्दसागरसुधासु निमग्नमेव ॥३०॥

हे स्वर्गदूताः शिशवः ! सुखेन, प्रदर्श्य तान्तां मृदुहास्यराजिम् ।
मुग्धं कुरुध्वं जगदेतदेव, स्वर्गायतां चारु वसुन्धरैषा ॥३१॥ इति ॥

श्रीअन्नदाचरणतर्कचूड़ामणिः ।
नोयाखाली—सोमपाड़ा ।

---

## सरला ।

( पूर्व्वतोऽनुवृत्ता: )

दिव्यञ्च ज्योतिर्निर्जगाम समस्तावयवात् । जराग्रस्तेऽपि तदानने विराजिता लोकोत्तरसरलता । सर्वा एव सा परिषत् एतावन्तं कालं अनन्यमना अमृतनिष्यन्दवत् तद्वाक्यं समस्तैः करणैः पपौ । ततः स स्ववचनोपसंहारच्छलेनेव पुनरवादीत् वत्साः, भजत विभुं सर्वलोकैकनाथं सर्वान्तःकरणैः । स एव नो जनकः । वयन्तु सर्व एव तत्प्रसादधृतकलेवराः परम्परस्नेहानुवृत्त्या वर्द्धामहे । स्वल्प एव स कालः । यदास्माभिरत्र स्थातव्यम् । ऊर्द्धमनन्तकालस्थायी स्वर्गलोको निवासभूमिर्नोविद्यते यत्र स्वकर्मसमाधानान्ते सर्वैरेव गन्तव्यम् । अधुना सर्वथास्माभिः सावहितैः स्वकर्माचरितव्यं, येन अचिरात् सर्वदुःखास्पदं स्थानमेतत् परित्यज्य निरवच्छिन्नसुखैकावासस्थानं स स्वर्गः प्राप्यते । संसारेऽस्मिन् नरनाथो विभुप्रतिमूर्त्तिः । अतः स देववत् पूजनीयः प्रजानाम् । इत्यभिधाय

विरते प्रवयसि क्षणं स्तब्धीभूते च अशेषे तद्दिशे शनैः शनैरुत्थाय युवा विभज्य च नीरवतां तद्दिशस्थः सविनयमाह।

महाभाग! अनयप्रवृत्तो महीपालस्तत्प्रजानाम् आदरणीयो नवेति संशयान्दोलितं मे हृदयम्। तदपनयतु आर्य्यः तद्व्याख्यानेन संशयपदं मे।

तदाकर्ण्य सरला विस्मृतपूर्ववृत्ता मूर्त्तिमतीव त्रिदिवसरलता आत्मसम्बारणाक्षमा प्रत्युवाच। कथमत्र संशयो नाम भवतः। नरपतिर्हि विभुप्रेषितो लोकपालमात्रासम्भूतः सर्वप्रजानां पिता। तत् कीदृ दुरात्मना तस्य नियोगविरोधिना भवितव्यम्। अविचारेणैव तदीयो नियोगो रक्षितव्यः सर्वासां प्रजानाम्। तन्मदीयो जनको राजादेशावधीरणात् सर्वलोकजुगुप्सितम् अपमृत्युं गतः।

युवा। लोकोत्तरम् एव भवदीयं शासनं श्रुत्वा श्रुत्वा अवशीकृतं मे हृदयं भावेन सात्त्विकेन। अध्यधीतं पुरा भवत्या सांख्यमुत पातञ्जलं दर्शनम्। मन्येऽहं भवतीं द्वितीयाम् आत्रेयीं विजयभारतीं वा। अथवा किमनेन मानवीयोदाहरणेन, नूनं भवती भगवती सरस्वती भूतलमवतीर्णा लोकानुग्रहाय।

सरला। नितान्तम् अज्ञोऽयं जनस्त्रिलोकवन्द्येषु आर्य्यशास्त्रेषु। नैनं अनेन सुधीजनार्हेण पदप्रदानेन लज्जापयितुमर्हति आर्य्यः। पितुरुपदेशात् यत्किञ्चित् अधिगतं मया सर्वशास्त्राज्ञया। गतानि हतभागिन्या दिनानि तानि। यदा प्रत्यहम् आहूय मां जननीव पिता कर्त्तव्योपदेशमकरोत्। स च देवदुर्लभो जनको मे स्नेहप्रस्रविनी माता च कालेन अपहृतौ ग्रहविगुणतया मे।

द्वादशवर्षीयाया बालायास्तादृशं विश्वासानुबन्धमालोक्य सर्वैव सा परिषत् परां विस्मितिम् आप। युवा तु आत्मसम्बारणाक्षमः प्रत्यवादीत् भवत्या वाग्लहरी सिञ्चति सुधां मयि। नूनम् अहम्

अस्मि मोहितो भवत्या। अनुभूता मया दुर्विषहा क्लेशपरम्परा। दण्डितोऽहम् आसम् अकारणं राजदण्डेन। वञ्चितोऽस्मि अशेषात् विभवात् दोषमन्तरेण। केनापि दोषलवेन विना विप्रलब्धोऽस्मि तेनैव पुरुषेण। यो मया आसीद् अनुगृहीतः। अतिक्रमस्ते राज्ञः प्रियपात्रतां गत्वा पुनस्तेन वैमत्यं प्रापितोऽस्मि। तथापि क्षणमपि नासीन्मे मनसि गुरुदेववाक्यविस्मृतिः। सर्वमेव विभुविधानं नो भावि-हितकरम्। सम्यगेवाधुना अवगम्यते एतद्दशाविपर्ययापातकारणम्। अन्तरेणैव एतत् न कदापि उपलभ्यते भवत्याः समागमः स्वर्गे एव मया। तत् अशेषक्लेशपीडितमपि भवदीया वाक्यावली सञ्जीवनी सुधेव जीवितं मे प्रध्वस्तं प्रत्युज्जीवयतीव। किं बहुना समासादितं मया अभिनवं जीवितमिति कथयन्तं तं बाधां कुर्वती सरला उवाच। "नान्यत् किञ्चित् वक्तव्यं भवता। अतिक्रान्तप्राया भवता सीमान्तलेखा सुजनतायाः। नूनमनेन क्लेशितव्योऽहमिति।

तद् अवश्यमेव मया नीरवेण भूयते। मनो भावस्तु मे दैनन्दिनं दुर्दमनीयतां गच्छति। नियन्त्रणैकपरतन्त्रस्यापि महायासे नायं मे वशीकृतो मनो भावः। जानेऽहं नरस्य सुखावाप्तियत्नः विफलतां भजते, परम् अनेनासौ आत्मनाशं संसाधयति। तथापि नास्ति मे विभव आत्मनियन्त्रणाय इत्यभिधान एवासौ नयने निर्निमिषपक्ष्मे तां प्रति व्यापारितवान्। सा च सहसा भस्मपाण्डुतां गता तमेव प्रदेशं परित्यज्य गतवती। नूनमनेन व्यापारेण सर्वा एव परिषत् विस्मिता आसीत्, परं वक्तृताविषयगौरवात् वृत्तमेतत् नालभत पदं तेषां हृदये वृद्धोपदेशसारप्रपूरिते। तदा प्रभृति कदापि तयोरन्योन्यालोकनं चिरेणाभवत् सुदुरासदम्। सान्ध्योपदेशकालेऽपि नाभूत् उभयोः समागमः।

इति श्रीमद् उपेन्द्रनाथ विरचिता द्वितीया वल्ली।

---

# शिवनिर्माल्यम्।

(पूर्वानुवृत्तम्)

पुराणसंग्रहे। शिव उवाच। अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलम्। शालग्रामशिलालग्नं सर्वं याति पवित्रतां। नैवेद्यञ्च नरो भुक्त्वा शुद्धेत् चान्द्रायणञ्चरेत्। इति निर्माल्यभक्षणे प्रायश्चित्तञ्च। वाणलिङ्गनिर्माल्यप्रतिप्रसवस्तु शिवनारदसंवादे। वाणलिङ्गेन चाशौचं न च निर्माल्यकल्पना। सर्वं वाणार्पितं ग्राह्यं भक्त्या भक्तैश्च नान्यथा। ग्राह्याग्राह्यविचारोऽयं वाणलिङ्गे न विद्यते। तदर्पितं जलं पत्रं ग्राह्यं प्रसाद संज्ञया॥ स्वयम्भूप्रभृति निर्माल्यस्य ग्राह्यमपि तत्रैव। वाणलिङ्गे स्वयम्भूते चन्द्रकान्तेन्द्रसंस्थिते। चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणम्। निर्माल्यकल्पनाचोक्ता सिद्धान्तशेखरे॥ धराहिरण्यगोरत्न ताम्ररौप्यं शुक्तादिकम्। विहाय शेषं निर्माल्यं चण्डेशाय निवेदयेत्। एतेन लिङ्गार्पितवस्त्रादिग्रहणे न दोष इत्यायातम्। चण्डेशाय निवेदयेदित्यनेन चण्डेशनिवेदितं यत्तन्न भोक्तव्यम्॥ हनूमन्तं प्रति शम्भुवाक्यम्। वाणलिङ्गे स्वयम्भूते चन्द्राकृति हृदि स्थिते। चान्द्रायणसमं ज्ञेयं शम्भोर्नैवेद्यभक्षणम्। लिङ्गे स्वयम्भवे वाणे लिङ्गे च रसनिर्मिते। सिद्धप्रतिष्ठिते चैव न चण्डाधिकृतिर्भवेत्। यत्र चण्डाधिकारोऽस्ति भोक्तव्यं तन्न मानवैः। चण्डाधिकारो नो यत्र भोक्तव्यं तत्तु भक्तितः। इति पञ्चपुरुषार्थप्रबोधे शिववचनाच्च।

अपि च। दक्षशापेन शिवनिर्माल्यस्याग्राह्यता दर्शिता तथा च शिवपुराणे ज्ञानसंहितायां ४२शदध्याये—४८ श्लोकः।

"तं प्रपच्छुस्तदा सर्वे शिवे निर्माल्यता कथम्॥"

"दक्षशापाच्च यत् प्रोक्तं यथैव कथितन्त्विह॥"

नात्र केन कारणेन शम्भुः शप्त इति विशिष्य न दर्शितम्।

एवं श्रीमद्भागवते च श्वशुरं दक्षं समागतं दृष्ट्वा शिवः प्रत्युत्थानाद्यर्हणां न कृतवान् अतएव क्रुद्धो दक्षः शिवं प्रति किं शशाप तत्र विशिष्य दर्शितं यथा—

भागवते ।४।२याध्याये ।

"गृहीत्वा मृगशावाक्ष्याः पाणिं मर्कटलोचनः ।
प्रत्युत्थानाभिवादार्हे वाचाप्यकृत नोचितम् ॥११॥"

एवं शिवपुराणे वायवीय संहितायाम् । १६शाध्याये ।

"तदात्मगौरवादेवं देव्या दक्षे समागते ।
देवादिभ्योविशेषेण न काचिदभवत् स्मृतिः ॥८॥
तस्य तस्याः परं भावमज्ञातुश्चापि केवलम् ।
पुत्रीत्येवं विमूढस्य तस्मिन् वैरमजायत ॥९॥"

किन्तु शिवपुराणश्रीमद्भागवतवचनानामेकवाक्यतामापाद्य श्वशुरानादर एव शिवनिर्माल्याग्राह्यताकारणमनुमीयते, युज्यते च तत् । अन्यत्तु सुधीभिर्भाव्यमिति ॥ शिवम् ॥

---

## व्याकरणम् ।

(पूर्वप्रकाशितात्परम्)

अतिमुक्तपुष्पम्—the madhavi flower ; अति मुक्तका—the plant.

अशोकम्—the flower ; अशोकः the tree.

N. B. The flowers which form the arrows of Kamadeva ( the Hindu cupid ) are—"अरविन्दमशोकञ्च चूतञ्च नवमल्लिका । नीलोत्पलञ्च पञ्चैते पञ्चवानस्य सायकाः" ।

---

## NAMES OF ORNAMENTS.

केयूरः (')—वाजु (a bracelet worn on the upper arm).

मेखला, काञ्ची-गोठ (चन्द्रहार) ।

हारः—necklace. वलयः—वाला (bracelet).

कर्णिका or कर्णपूरः—earring.

मुकुटम्—tiara ; crown. नूपुरम् (:)—anklet.

जालकम्—a particular ornament on the hair.

अङ्गुलीकः (') }
अङ्गुलीयकम् } finger ring.

पदकम्—पदक ( an ornament of the neck).

---

## NAMES OF CLOTHES AND OTHER DRESSES.

वस्त्रम्, वसनम्—cloth. अनुपदीना—slipper.

शय्यास्तरणम्—bed sheet. करत्राणं—glove.

उत्तरीयम्—the upper garment. उरस्त्राणम्—coat, shirt

उष्णीषः (')—the turban. उपाधानम्—pillow.

उपानत्—shoe. पादत्राणम्—stocking.

कञ्चुकः—1. coat of mail ; 2. bodice ; 3. coat.

शिरस्त्राणम्—helmet. मुखपटः—veil.

वर्म, कवचम्—an armour, a mail, ( cuirass ).

---

## WORDS OF ADDRESS.

तात, पितः—papa—बाबा ।

अम्ब, मातः—mamma—मा ।

आर्य्य—brother, unkle and all superiors—भ्राता पितृव्य एवं अन्योगुरुजनः ।

वत्स, आयुष्मन्—brother, nephew and all inferiors—कनीयान्, भ्रातुष्पुत्रादिः एवं अन्यान्य लघुसम्पर्कीयजनः ।

आवुत्त—brother-in-law भगीनीपतिः ।

वधूः—daughter-in-law.

सौम्य, भद्र, साधो—gentleman.

महाभाग, महात्मन्, आर्य्य—sir.

भद्रमुख—my good fellow.

N. B. In addressing a male of your own age and rank you should say भद्र, सौम्य, साधो etc. ; and in

addressing one who is older than you or superior to you, you should say आर्य्य, महाभाग, महात्मन् etc.

श्रीउपेन्द्रनाथ रायस्य
रायेरकाठी—वरिशाल ।
(क्रमशः)

---

## समस्यापूर्त्तिः ।

(पूर्व्वतोऽनुवृत्ता)

ध्वान्ताम्बरं मिहिरविम्बकुचेऽर्पयन्ती,
चित्राब्द-खण्ड-नखरक्षतमावरीतुम् ।
अर्द्धस्फुटाब्ज-कुसुदाहितकान्तशोभा
"सन्ध्या वधूरिव तनोति मुदं न कस्य" ॥१॥

मेने जनैरक्तघनं प्रतीच्यां सस्पन्दमालोक्य रविं निरीक्षुम् ।
क्रोधादगस्त्यानमितोऽप्यथाऽस्ते "गिरौ किमुच्चैः प्रचलो गिरीन्द्रः" ॥२॥

सिन्धोः सेतुनवे तरङ्गपविते रामेश्वरस्यालये,
नाना रत्न कदम्बकं यदनिशं देदीप्यमानं किल ।
तत् किं सिन्धुशयेन नित्यविहिता पुष्पाञ्जलिस्तन्मयं
"किं वा कुट्टिममेव पद्मजनुषा नीराजना निर्म्मितम्" ॥३॥

रामे वनं प्रतिगतेऽथ मृतेऽजपुत्रे "नौकाऽरमेव वसुधा विभराम्बभुव"।
देशान्तरेषु मरुतामथ कच्छभावमुल्काशनिज्वलनदाहमपि प्रकम्पम् ॥४॥

नावाहित परीवारस्त्विरवाणिज्यतत्परः ।
व्यवसायिगणः कश्चि "च्चरन्नपि गृहस्थितः" ॥५॥

श्रीकैलास चन्द्र शर्म्म भट्टाचार्य्यस्य ।
जिं रङ्गपुर, ग्राम वरद बाड़ी ।

---

भ्राजत्सुधाकरमुखी, धृततारकालिः,
शोणाधर-स्थल-विकस्वर-मितहासा ।

कामं निकाम-शयितं प्रतिबोधयन्ती,
"सन्ध्या वधूरिव तनोति मुदं न कस्य ?" ॥१॥

दिवश्च्युतो मातलिना प्रणुन्नो दुष्यन्तभूपाध्युषितः शताङ्गः ।
व्यतर्कि लोकैः कनकाचलाख्ये "गिरौ किमुच्चैः प्रचलो गिरीन्द्रः ?" ॥२

दौर्वर्णी किमु पेटिका हिमरजः पूर्णा सकस्तूरिका
स्थातुं शीतमयूखमण्डनमिदं त्वत्कीर्त्तिनार्थ्या दिवम् ।
स्वर्गङ्गामवलम्ब्य भूमिवलयाद् यान्त्याः सुखेनाध्वना
"किं वा कुट्टिममेव पद्मजनुषा नीरात्मना निर्म्मितम्" ॥३॥

नेदं नभो, भगणचित्रितमिन्दुशून्यं,
मुक्ताफल-स्फटिक-हीरकजाल-चित्रम् ।
नीलांशुकेन रचितं शिशिरानिलार्त्ता
"नीशारमेव वसुधा बिभरां बभूव" ॥४॥

स्वभाव एवात्र परो मुमुक्षुर्मोक्षसाधनम्
"वैराग्यजनकं कर्म" चरन्नपि गृहस्थितः" ॥५॥

श्रीपुरुषोत्तम विद्यानिधेः
बड़ बाल्यावेड़ा संस्कृतटोल, पो: मण्डपाम
(नूतन) मेदिनीपुर

---

नूनं क-गोमय-सुतापित-मानसस्य
चन्द्रांशुभिः सुकलितानलमन्दमित्रैः ।
अत्यन्तशीतलकरा च मनोज्ञरूपा
"सन्ध्यावधूरिव तनोति मुदं न कस्य" ॥१॥

गत्वा महेन्द्राद्रिशिरो हरीशो बभौ न नागेन्द्रसुदीर्घबाहुः ।
महानगेन्द्र प्रतिमो बलीव "गिरौ किमुच्चैः प्रचलो गिरीन्द्रः" ॥२॥

तस्मोऽनङ्ग शरव्रातैर्वसन्ते प्रियया पुमान् ।
हीनः प्रियां हृदा कामो "चरन्नपि गृहस्थितः" ॥३॥

पद्मेऽधारि तवाङ्घ्रिणा किशलये कान्त्याशयेन त्वया
चन्द्रे त्वद्वदनेन सुन्दरि ! परं लावण्यकान्त्या जितम्।
सर्वं वस्तुधिया त्वया प्रतिजगति मन्ये तनोर्वर्जितम्
"किन्त्वा कुट्टिममेव पद्मजनुषा नीराजना निर्मितम्" ॥४॥

हे वीरराज ! यशसा धवलौ कृते ते
विद्याप्रतापविजिते सकले धरेशे।
शोकेन मुक्तवसनं विधवेव किन्न
"नीशारमेव वसुधा बिभराम्बभूव" ॥५॥

श्रीकपिलेश्वर शर्मा
लखनौड़ पो: मनीगाछी—जिला दरभाङ्गा।

---

नक्षत्र-रत्न-निवहस्रजमादधाना
ज्योत्स्नाश्रिता शशिमुखी प्रियमाचरन्ती।
नव्या मनोहरतरा सहरागिकेयं
"सन्ध्या वधूरिव तनोति मुदं न कस्य" ॥१॥

कदापि कुत्रापि कुतोऽपि केऽपि, नार्थ्यास्त्यजन्तीह समाश्रितन्तु।
कस्मादुपर्य्यापतिते ह्यकस्माद् "गिरौ किमुच्चैः प्रचलो गिरीन्द्रः" ॥२॥

अङ्गीकृतप्रवासोऽयं युवजानिः कथञ्चन।
कार्य्यतः कायमात्रेण "चरन्नपि गृहस्थितः" ॥३॥

आच्छादकं दिनकृतो जलदात् किमन्यत् ?
सर्वञ्च केह सहते भुवि मातुरन्या ?।
रामो धनुर्नरपतिर्वद ! किं चकार ?
"नीशारमेव वसुधा बिभराम्बभूव" ॥४॥

श्रीकालीकृष्ण शर्मा विद्याविनोदस्य
सीथारगाँ—कृष्णपुरा बड़वाड़ी पो: वैद्येरबाजार—ढाका।

---

रक्ताम्बरा पतदहस्कर-मण्डलेन,
रागान्विनेन्दु-तिलका कलकण्ठगुञ्जैः ।
गीत्वेव कैरवदलं प्रविकासयन्ती,
"सन्ध्यावधूरिव तनोति मुदं न कस्य" ॥१॥

पतिः पशूनां सततं कुतोऽस्ति, जनैः समाहूतजनः किमाह ।
विन्ध्यश्च कीदृग् घटभू-गिरः प्राक्, "गिरौ किमुच्चैः प्रचलो गिरीन्द्रः २

किं गौराङ्गय-पूर्व-गौरभकलं स्वर्ण-द्रवैराविलम्,
किं वा पद्मलता-गभीर-विरहोद्दाम्ब्रानुरागैर्युतम् ।
किं नूपा-निटलाद्विनिःसृततरैः सिन्दूरपुञ्जैर्हिमैः,
"किं वा कुट्टिम मेव पद्मजनुषा नीराजना निर्मितम्" ॥३॥

कोऽपि स्फुरद्धननिचये करसात्कृते मे,
व्यर्थं तदा किल भवेत् वसुधेति नाम ।
सायं विचिन्त्य सहसैव तमो-मिषेण,
"नीरान्ध्रमेव वसुधा विभराम्बभूव" ॥४॥

सन्न्यासी गृहमाश्रित्य वसन्नप्युच्यतेऽगृही ।
चित्तं वने च संसारी "चरन्नपि गृहस्थितः" ॥५॥

श्रीप्रताप चन्द्र काव्यतीर्थ-कविरत्नस्य ।
( बाँयालखाली, धामगाकपुरा —चट्टग्राम )

---

विश्वक् स्फुटैः सितसरोज मनोज्ञशोभै-
स्ताराप्रसून निकरैः प्रियचन्द्रमासुम् ।
विष्णोः पदे विरचिताञ्जलिरात्तभक्तिः
"सन्ध्या वधूरिव तनोति मुदं न कस्य ? ॥१॥

कदाचन श्माभृति चित्रकूटे निरीक्ष्य शृङ्गाद्वनमुच्चलन्तम् ।
सीताऽऽहमुग्धा रघुजं प्रियाऽयं "गिरौ किमुच्चैः प्रचलो गिरीन्द्रः ॥२॥

अत्र श्रीदयितः पुरा स भगवान् संहृत्य लोकत्रयं
शेते आत्मना महाहिशयनं विन्यस्य तस्योपरि !
इत्यालोच्य महाम्बुधौ मरकतैरत्नैः सुखं शीतलं
"किं वा कुट्टिममेव पद्मजनुषा नीरात्मना निर्मितम् ? ॥३॥

रामं समेत्य खरदूषणवाहिनीनां
आसां ध्रुवं स्रवदसृङ् मम जाड्यकारि।
इत्थं भिया किमु तदुत्थ रजश्छलेन
"नीशारमेव वसुधा बिभराम्बभूव" ॥४॥

मनोरथोऽद्भुतः सोऽयं दुर्गतानां कुटुम्बिनां
दूराद्दूरतरं देशं "चलन्नपि गृहस्थितः" ॥६॥

सुगृहीतनाम्नां श्रीयुक्त महेशचन्द्र तर्कचूड़ामणिपादानामन्ते वासिनः—श्रीशारदाचन्द्र शर्म्मा चक्रवर्त्तिनः।

---

उद्यच्छशाङ्कवदना ललिताऽम्बरश्रीः
नाना प्रसूनसुरभिः स्फुटतारकाभा।
सद्योऽभिसार चतुराऽस्तदिनेशतुष्टा
"सन्ध्या वधूरिव तनोति मुदं न कस्य" ॥१॥

मैनाकसानुस्थमि वातजाते शङ्कां हि लङ्कानिलयाः प्रपन्नाः।
तिमिङ्गिलोऽयं सुतवत्सलो वा "गिरीकिमुच्चैः प्रचलो गिरीन्द्रः"॥२॥

बालायास्तनमण्डलाद्रियुगलं माभूद्गतं चैकताम्
वर्द्धिष्णु प्रतिवासरं किमु कृतारोमावलीसीमग्रहो।
शैवालाऽङ्कुरमञ्जुपुञ्जरचनैः शिल्पीश्वरेणामुना
"किम्बा कुट्टिममेव पद्मजनुषा नीरात्मना निर्मितम्" ॥३॥

हैमन्तशैशिर-सुधांशुकरानुलिप्ता
प्राचीचलत्पवन कम्पितछन्निदाघे।

प्रावृट् पयोदपटलो पटलं निवर्त्य
"नीशारमेव वसुधाविभराम्बभूव" ॥४॥
भूयाः प्रतिनिशं पान्थ तीर्थभ्रमणतत्पर।
नाना गहनकान्तारे "चरन्नपि गृहस्थितः" ॥५॥

श्रीशिवेश्वर शर्मा
ग्राम लालगञ्ज पोः झांझारपुर जिः—मुङ्गेर।

---

सन्ध्योदये हृदि जपन्ति हरिं महान्तः
कार्य्यं विहाय गृहिणो मुदिता स्वपन्ति।
पश्वादयोऽपि निजस्वामि गृहं विशन्ति
"सन्ध्या वधूरिव तनोति मुदं न कस्य" ॥१॥
भूदान शालीकिमुदानवेन्द्रः सौन्दर्य्यधारी किमु पूर्णचन्द्रः।
स्त्रीरत्नहारी किमु राक्षसेन्द्रः "गिरौ किमुच्चैः प्रचलो गिरीन्द्रः" ॥२॥
श्रीराधापतिमन्दिरस्य कमलं कुद्यालये संस्थितं
पद्मं तत्प्रतिबिम्बपातजनितं चान्यन्मणेः कुट्टिमे।
तद्दृष्ट्वा चकिता बभूवुरविदो ह्यूचुश्च बाह्यस्थिताः
"किं वा कुट्टिममेव पद्मजनुषा नीरात्मना निर्मितम्" ॥३॥
सेनां प्रगृह्य वसुधा विजयार्थमेव
बभ्राम भूतलमिदं स विमानजालैः।
नो तच्चमूत्थितधुरश्च शशाक सोढुम्
"नीशारमेव वसुधा विभराम्बभूव" ॥४॥
तैलयन्त्रयुतोऽनड्वान् परिभ्रमति सर्वतः।
बहूनि योजनानि च "चरन्नपि गृहस्थितः" ॥५॥

कवि कालिदास पण्डित
संस्कृत पण्डित एम्, वि, स्कूल।

---

अस्तोदयाचल विलम्बिरवीन्दुबिम्ब-
व्याजात् क्षणं श्रवणयोर्धृतकर्णपूरा ।
ताराच्छलेन कुसुमानि समुत् क्षिपन्ती
"सन्ध्या वधूरिव तनोति मुदं न कस्य" ॥१॥

समागतेऽस्मिन् सखि भाद्रमासे समुत्थितं मेघमधित्यकायाम् ।
विलोक्य भीताह वियोगखिन्ना "गिरीकिमुच्चैः प्रचलो गिरीन्द्रः ॥२॥

रामो वानरवाहिनी शतयुतो लङ्कां विजेतुङ्गतः
दृष्ट्वा नीरमपां निधेस्तु कपयः साश्चर्यमूचुस्तदा ।
हंहो काचमयीयमेव पृथिवी सञ्चारिता राक्षसैः
"किम्वा कुट्टिममेव पद्मजनुषा नीरात्मना निर्मितम्" ॥३॥

प्राप्ते वसन्तसमये निखिलानि क्षेत्रा-
ण्याच्छादितानि यवसर्षपशस्य पुष्पैः ।
दृष्ट्वा तदा सुकवि राह प्रसन्नचित्तो
"नीशारमेव वसुधा बिभराम्बभूव" ॥४॥

पुत्रभृत्यकलत्राणि सन्ति वित्तानि सर्वदा ।
यस्य सङ्गे प्रदेशेस "चरन्नपि गृहस्थितः" ॥५॥

साधुः प्रशस्यते कीदृङ् निश्चये च किमव्ययम् ।
को निरा द्रियते विद्वान् "चरन्नपि गृहस्थितः ॥६॥

शुक्लगुलूदत्तोपनामक पण्डित परमसुखशर्मा
पो: जगनेर—जिला आग्रा ।

———

आजन्म जीर्ण रणतो रणतो मुनीनां
सौजन्यवर्जितजनो जनतोभिलाषी ।
वन्ध्या वधूरिव मुदं मुमुदे प्रजानां "सन्ध्या वधूः०" ॥१॥

आरम्भदत्ता खलु पल्लवन्तः नारम्भदत्ता खलु रत्नवन्तः ।
नीराकराग्रान् निराकराग्रा "गिरौ किं०" ॥२॥

जन्मप्रयाण-सुलभा भवमाकरोति
आचारदिव्यदनमूर्त्तिमिवानुरागम् ।
सा तत्त्वयं यदुपतिर्दयिताद्दरेण "नीरागार०" ॥३॥

यस्यैव प्रलयाचलाधिप गिरा उन्निद्रमानोन्नतं
नस्त्वं वा नमनोन्नतेति पुरुषायुष्यं मिथो द्वेषते ।
सम्भूत्वाचलनस्तवायित जगत्पालो धरित्री पुनः "किं वा कु०" ॥४॥

चारणोग्रहृद्दर्पेण चरमाचलमासवान् ।
चरणे चरणे रन्ति "चलन्न०" ॥५॥ *

श्रीरामचन्द्रमणिकार ।
जिं बेलगांव, कित्तूर ।

---

कामक्रोधादिकं शत्रुं सन्त्यजन् वह्निरेव हि ।
अन्तर्ध्यायन् मनोवृत्त्या "चरन्नपि गृहस्थितः" ॥१॥

मूढ़ात् समृद्धिं दनुजो विलभ्य निवासकैलास मुदा जहार ।
तदद्भुतं प्रेक्ष्य तदोत्तराख्यां "गिरौ किमुच्चैः प्रचलो गिरीन्द्रः" ॥२॥

त्वां याचे विनयावनम्रवदना सर्वात्मना स्वप्रभुम्
गन्तुं मां वनकाङ्क्षिणीं कुरु कृपां भद्रत्वमाज्ञापय ।
यन्मां त्वं प्रकृणद्धि स्वप्रणयिनीं चित्तन्तु तत्तेऽधुना
"किं वा कुट्टिममेव पद्मजनुषा नीरात्मना निर्मितम्" ॥३॥

सायन्तनं तिमिरजालमसद्विगाढं
दृष्टिं जनस्य विफलां विदधद्विसारि ।
एवं समीक्ष्य जनता स्ववदन्तथा हि
"नीरागारमेव वसुधा विभराम्बभूव" ॥४॥

---

* यथा दृष्टं मुद्रितम् ।

रक्ता प्रियाम्बरपरित्यजनाभिशीला
सन्तापवारणकरी मुखरा त्रिनाथा।
आविर्भवद्विविधभावगुरुप्रभावा
"सन्ध्या वधूरिव तनोति मुदं न कस्य"? ॥५॥

पण्डित श्यामादत्तचौवे
राज हाइ स्कुल, दरभङ्गा।

---

नीलाम्बरावरणिका कलधौतकान्ति-
र्बिम्बाधरोत्पलभुजा कलकण्ठनादा।
ऐणाम्बिका युवमनःसरसीप्रमाथा,
"सन्ध्या वधूरिव तनोति मुदं न कस्य" ॥१॥

सुधार्णवे मज्जति कुम्भकर्णे, किमेषु वीराचलशेखरः स्यात्।
विचालितो रावण उज्झितेऽल्पे, "गिरौ किमुच्चैः प्रचलो गिरीन्द्रः" ॥२॥

लङ्कां रत्नमयीं पुरीं प्रथमतो दृष्ट्वा समीरात्मजः
प्राप्तोऽसौ हि वितर्कमायतमिति प्रावीण्यमुद्भावितम्।
ननं हाटकभित्तिनिर्मितिकृती ख्याणः कथानूपमः
"किं वा कुट्टिममेव पद्मजनुषा नीरात्मना निर्मितम्" ॥३॥

नीहारवातपरिपीड़नभीति रक्षाद्
अद्रिस्तनावृतिमिव प्रविधातुमेव।
संफुल्लकाशकुसुमव्यापदेशतो वै
"नीशारमेव वसुधा बिभराम्बभूव" ॥४॥

उदेति कल्पनाज्योतिर्यस्य हृदयकन्दरे।
कृत्स्नलोकं क्षणेन स "चरन्नपि गृहस्थितः" ॥५॥

श्रीश्रीमन्तवर्मणः।
निवास—रत्नेश्वरपुर।
पोः आः कुल्पी—जेला २४ परगणा।

---

श्रीश्रीदुर्गा शरणम्।

# संस्कृतचन्द्रिका।

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती प्रभाविव ।

नायावन्मन्यते सेयमन्वा श्रीशिवसुन्दरी॥

## मासावतरणिका।

पौषे तुषारावरणा यतो दिशो, नान्योन्यमीक्षन्त इतस्ततः पथि ।

यान्तोऽनुमिन्वन्ति च किन्तु दूनकाः सशब्द मोष्ठाननदन्तकम्पनैः ॥

## उद्भटश्लोकाः।

यजन्ते मात स्त्वां दिवि दिवि-सदो नित्यमस्तुतैः

अपूर्वाहारोघैर्जगति जगदैश्वर्य्यग-नृपाः।

अयोग्यन्ते तोयं फलमपि च पत्रं त्यज न मे,

किमाधत्ते वह्निः सघृतममिधं प्राप्य न तृणम् ॥२८०॥

कौशल्या-सुतसव्य-हस्तपतितं त्यक्त्वा स्वदेहं धनुः,

सीता-मानस-पूर्त्तिमेवमकरोत् सद्वंशजं सद्‌गुणम्।

श्रीकृष्णानन-पाणिपल्लवयुता तस्मात् दहेन्निर्दयम्,

सच्छिद्राऽसि कुवंशजाऽसि नितरां वंशीति नो दूषणम् ॥२८१॥

कालिन्दीपुलिने चलन् मुरहरो वेणुं रणन्माधवः,

यच्छ्रुत्वा व्रजसुन्दरी निजगृहं त्यक्त्वा वनं धावति।

प्रत्यागात् यमुना स्थिरश्च पवनः सौरी रथो नाचलत्,

पाषाणास्तरला द्रुमाः पुलकिता नाश्नन्ति गावस्तृणम् ॥२८२॥

## ब्राह्मणाष्टकम् ।

सर्वार्थशास्त्रोच्च विमर्शहेतवो मलीमसोत्तारिशुभाङ्ग सेतवः ।
प्रासोत्तमज्ञाननिदान धेनवः पुनन्तु मां ब्राह्मणपादरेणवः ॥१॥
सुपावितो यैर्विलिखन्नतास्पदः प्रकाशितो ज्ञानविधानदीपः ।
प्रतारितं यैः समवर्त्तिगेहं पुनन्तु मां ब्राह्मणपादरेणवः ॥
उदग्रकोपैककथामतापितैः चयीकृता चन्द्रतनुर्जगत्याम् ।
संशोषितोऽम्भोधिरहो क्षणेन पुनन्तु मां ब्राह्मणपादरेणवः ॥३॥
गङ्गातरङ्गैश्चटुलोकभङ्गैराप्लावयन्तो सकलं मदेन ।
यत्राश्म सम्भिन्न प्रसुप्तमूर्त्तिः पुनन्तु मां ब्राह्मणपादरेणवः ॥४॥
यस्याः सदानहुप इति प्रसिद्धिः (?) संसेवया भूतलचक्रवर्त्ती ।
जीवन् स शक्रत्वमवाप नाके पुनन्तु मां ब्राह्मणपादरेणवः ॥५॥
ज्योतिर्गतिया निकरैरबोधि योगांगतासाम्यपदे (?) रभाजि ।
साङ्ख्येषु येषां मतिरीदृशोह्लिनी (?) पुनन्तु मां ब्राह्मणपादरेणवः ॥६॥
वेदान्तशाखा बहुधा विभिन्ना न्यायादिशास्त्राणि च यत्र सोदराः ।
पितृत्वमाप प्रणवोऽपि येषां पुनन्तु मां ब्राह्मणपादरेणवः ॥७॥
विज्ञानसम्पन्नमतोन्विमृश्य यान् जहुर्विदन्तो ननु गां सुपण्डान् ।
प्रदक्षिणाकारि शुक न शन्तु पुनन्तु मां ब्राह्मणपादरेणवः ॥८॥

इति श्रीब्राह्मणाष्टकम् । (*)

पं० बुलाकीराम शास्त्री विद्यानिधिः ।
एम्. बी. कालेज—अमृतसर पञ्जाब ।

---

## दीपावलि-वर्णनम् ।

दैवाद् भ्रमंस्तत्र समागतोऽहं दीपालिरात्रौ समवाप्य हर्षम् ।
निरीक्ष्य दिल्लीनगरस्य शोभां दीपावलीवर्णनमाशु कुर्वे ॥ १ ॥
प्रज्वाल्यवर्त्तीः सितचन्द्रगौराः कुर्वन्ति शुभ्रं निजवेश्म पौराः ।
आलोकमालोकयतां जनानामाश्चर्यमायाति हि मद्विधानाम् ॥२॥

---

(*) नैतद्विद्यानिधेरिव भाति । आयसाक्षरयोजनात् परं दृष्टं तदनन्यगत्या मुद्रितम् ।

हर्म्येषु दृष्ट्वा खलु दीपमालां मन्येतमीत्यं समुदेति तर्कः ।
त्यक्त्वा नभोमण्डलमत्र नूनं नक्षत्रमाला समुपागतेयम् ॥३॥

तृतीयलिङ्गाः समुपेत्य हर्षात् नपुंसका नूतन-वस्त्र-शोभाः ।
ताथेय्यथेय्येति समुच्चरन्तो नृत्यन्ति रथ्यासु धनप्रलोभात् ॥४॥

रथ्यासु वीथीसु चतुष्पथेषु व्यापारिणो नैकपदार्थयुक्ताः ।
कृत्वाति मूल्यं द्विगुणं निशायां पौरान्छलैनेह प्रतारयन्ति ॥५॥

इतस्ततः पौरजनाः सबालाः विनीतवेशा गलहेममालाः
परिभ्रमन्तः पथि बद्धजालाः पश्यन्ति मार्गे नव-दीपमालाः ॥६॥

विस्तीर्णभालाः परिपीतहालाः सत्कामिनीनां सुरते विशालाः ।
विलासिनः सज्जित केशजालाः पश्यन्ति नूतनदीपमालाः ॥७॥

गोरण्डवर्त्यां अपि राजमार्गे गौराङ्गनाभिः सहिता निशायाम् ।
दीपावली-दर्शनकाल-लोलाः परिभ्रमन्ति प्रतिपक्षहीनाः ॥८॥

एका मया श्रेष्ठि-वधूर्हि दृष्टा शृङ्गारजुष्टा शकटोपविष्टा ।
यद्यप्यभूत्काचपटेन छन्ना तथापि लोकस्य मतिर्विभिन्ना ॥९॥

विद्युत्प्रतापेन प्रकाशमानं ज्योत्स्नां हसत् धावितभूविमानम् ।
सुनिर्मलं देवपुरी-समानं दीपालिरात्रौ विचकाशमानम् ॥१०॥

समुज्ज्वलैः काञ्चन सन्निभाभैः सकाचपात्रैः परिशोभमानम् ।
चित्रैर्विचित्रैर्विविधैः सुरम्यं श्रीरामबागस्य रटं विभाति ॥११॥

सुनिर्मितान् क्रीड़नकान् विलोक्य पौरैः परा प्रीतिरवाप्यते हि ।
हसन्ति ते शुद्धगिजः स्वकार्यैः पक्वान्नं सर्वं निसर्गदक्षम्॥१२॥(युग्मकं)

प्रसाधयन्ति प्रचुरैः सुमिष्टैर्नानाविधैश्चित्रविचित्रकल्पैः ।
नवैः पदार्थैर्निजपण्यशालां वणिग्जना राजितदीपमालाम् ॥१३॥

निर्माय हर्म्यं सितशर्कराभिः समुज्ज्वलं मिष्टवणिग्जनाश्च ।
विवर्द्धनार्थं विपणिप्रकाशं सुवर्णपत्रैः परिवेष्टयन्ति ॥१४॥

दुरोदरक्रीडनपराः कियन्तः क्रीड़न्ति वीथीषु परिभ्रमन्तः ।
अयं मदीयो ग्लह एव नास्मात् त्वया गृहीतस्त्विति वीवदन्ते ॥१५॥

दिल्लीपत्तनवासिभिः स्वसुहृदैर्दीपावलीदर्शकैः
सानन्दं पथि गच्छता निशि मया शोभेयमालोकिता।
तां दृष्ट्वा मुदमाप्य वर्णनमिदं दीपालिराली कृतम्
भूयात् प्रीतिकरं समस्तविदुषां गीर्वाणभाषाविदाम् ॥१६॥

गोस्वामि श्रीहरनारायण शास्त्री
अजमेर (इदानीम्) दिल्लीनगरे।

---

## अज्ञानबोधिनी।

(पूर्वतोऽनुवृत्ता)

यतो देहो न जानाति अतोऽत्यन्तजड़ः। घटो यथा दृश्यो जड़श्चेति तथा देह इति।

ननु घटो जातस्तथैव तिष्ठति देहस्तु वर्द्धते अतो घटवद्देहो वक्तुं न शक्यते। इति पृष्टे गुरुरुपदिशति वृद्धिमानिति देहः किञ्चैतन्यं भवति? वृद्धिमत्वमपि चैतन्यं नास्त्येव त्वया कुत्र दृष्टं? केनोक्तं? अतो दृष्टान्तेन परिहरति यथा तृणं गोमयञ्च यत्र निक्षिप्यते स राशिः वर्द्धते स किं चैतन्यं भवति? किं वा घटीयन्त्रकूपे उन्नीर्य्यमाणा मृद्वर्द्धमाना तीरे किं चैतन्यं भवति? कुड्यादिनिर्माता मुहुर्मुहुर्निक्षिप्यमाणा मृद्वर्द्धमाना वेदिकायां किं चैतन्यं भवति? एवं प्रतिदिनमन्न रूपेण समर्प्यमाणो देहरूपो भूतसञ्चयः सम्यक् वर्द्धमानोऽप्यत्यन्तजड़ एव। अतस्त्वं जड़ो न भवसि त्वं चैतन्यमेव।

अनित्यत्वं प्रदर्शयति आकाशमवकाशं भवितुमिच्छति। पवनो धावितुमेव यतते। तेजोऽग्निर्ज्वलितुमेव यतते। उदकं द्रवितुं जिगमिषति। पृथिवी विस्तीर्णाभवितुमिच्छति। एवं सर्वाणि भूतानि स्वमार्गमभिगन्तुमिच्छन्ति अतः।

शरीरस्याऽनित्यता तव निश्चिता। अमङ्गलत्वं प्रदर्शयति-जन्मकार्य्यपरामृश्यमाणो देहो मलादत्यन्ताऽशुद्ध एव। रक्तरेतःसंयोगेन

मलभाजननिष्पन्नो देहः मलादत्यन्ताऽशुच एव। अतः दशदोषैर्दुष्टो देहस्त्वन्न भवसीति सिद्धम्।

भो भगवन्! के ते दश दोषाः। तत् शृणु। अशुद्धम्। अशौच्यं। दुर्गन्धि। अस्थिरं। स्थूणखण्डं। दग्धं। शिथिलं। नानारोगग्रस्तम्। अध्रुवम्। आमिषं। अतो हेतोः स्थूलशरीरं त्वन्न भवसि एतत् सत्यम्।

भो भगवन्! यदि स्थूलशरीरम् अहन्नभवामि। एतावता मम किं जातं हितं?। साधु साधु। अरे सावधानमतिः! शृणु। यदा इदं शरीरं त्वन्न भवसि। तदा अनित्यजातिवर्णाश्रमश्च त्वन्न भवसि। षड्भावविकारस्तत्र नास्ति। जायते। अस्ति। वर्द्धते विपरिणमते। अपक्षीयते। विनश्यति इति। षड्भावविकाराः।

वर्णधर्माश्रमाचारः शास्त्रयन्त्रेण योजितः।
निर्गतोऽस्मि जगज्जालात् पञ्जरादिव केसरी॥

वर्णाश्रमौ धर्माऽधर्मावपि तव नस्त एव।

वर्णाश्रमाभिमानेन श्रुतेर्दासो भवेन्नरः।
वर्णाश्रमविहीनश्च वर्त्तते श्रुतिमूर्द्धनि॥

यतः शास्त्रमाह।

यावत् देहात्मविज्ञानं बाध्यते न प्रमाणतः।
प्रामाण्यं कर्मशास्त्राणां तावदेवोपपद्यते॥

इति अहं देहो न भवामि इति यदा ज्ञानं जातं तदा सर्वकर्त्तृत्वमपि तव नास्ति।

भो भगवन्! इदं स्थूलशरीरम् अहं न भवामि त्वदाऽज्ञया अज्ञासिषं। स्थूलशरीराऽसम्बन्धात् वर्णाश्रम-कुल-गोत्र-जाति-स्त्री-पुरुष-नपुंसक-स्थूल-ह्रस्वदीर्घ-श्यामगौरादि-नामरूपषड्-भावविकार-धर्माऽधर्माः मम न सन्त्येव इति तव कृपाकटाक्षनिरीक्षणात् सम्यक् मया ज्ञातं।

अन्यच्च भो भगवन्! इन्द्रियाणामभावे शरीरचलनाऽभावात् काणोऽहं बधिरोऽहमित्याद्यनुभवाच्च इन्द्रियाणि अहम्। इति पृष्टे गुरुराह-तत् त्वन्न भवसि। कथं इत्थं तत् भूतकार्य्यत्वात्। भो भगवन्! कस्य भूतस्य किं कार्यं? उच्यते। नभः सकाशात् श्रोत्रं वाक् च द्विकरणे समुत्पन्ने। वायोः सकाशात्त्वक् पाणी च द्विकरणे समुत्पन्ने। तेजसः सकाशात् चक्षुः पादौ च द्विकरणे समुत्पन्ने। अद्भ्यः सकाशात् रसना उपस्थश्च द्विकरणे समुत्पन्ने। पृथिव्याः सकाशात् घ्राणपायू द्विकरणे समुत्पन्ने। पञ्चांशेन सह मनो जातं पञ्चानां साधारणं सात्विकांशकार्य्यं पञ्चवृत्तिग्राहकत्वात्। बुद्धिर्मनोऽविशेष एव। तदेव विवृणोति वाक्श्रोत्रे आकाशकार्य्ये। एवं विचारप्राधान्ये-सति शब्दाभिव्यञ्जकत्वात् प्रायेण शब्दोत्पत्तिर्वाचः। त्वक् पाणि-वायुविकारौ स्पर्शग्रहणसाधनत्वात् स्पर्शवत्। एवं द्रव्यस्य हस्तेनो-पादातुं शक्यत्वात्। चक्षुःपादौ तेजोविकारौ रूपस्य ग्राहकत्वात्। प्रायेणोष्णत्वं पादयोस्तत्क्रमोप्यत्र प्रमाणं। उपस्थजिह्वे द्वावप्युदक-कार्य्ये एव रसग्राहकत्वात् स्निग्धत्वात् प्रायेणोपस्थ आनन्दत्वाच्च। घ्राणपायू च पार्थिवौ गन्धग्राहकत्वात् प्रायेण गन्धत्वात् च पायो-र्विसर्गत्वात्। मनः साधारणं पञ्चानां कार्य्यं। पञ्चवृत्तिग्राहकत्वात्। बुद्धिर्मनोऽविशेषः पाचकपाठकवत् पञ्चप्राणवृत्तिर्वायुविकार एव। प्राणापानोदानव्यानसमानाः तदात्मकत्वेनोपलभ्यमानत्वात्। एवं भूतानि जड़ानि। तदंशसंयोगेन्द्रियाणि च जड़ानि।

भो भगवन्! स्वस्वविषयं जानन्ति कथमिन्द्रियाणि जड़ानि? तत् शृणु। यद्वै श्रोत्रमात्मानं न जानाति परमपि न जानाति। स्वविषयं शब्दं ज्ञातुं न शक्यते अन्यविषयमपि ज्ञातुं न समर्थं। उभयथा जड़ं। किन्तु शब्दज्ञानकरणसाधनमित्यर्थः। प्रदीपवत्। यथा प्रदीपः रूपादिज्ञानसाधनं। यथा प्रदीपेन रूपादि प्रतिगृह्यते। तथा श्रोत्रेण शब्द इति। एवमितराण्यपि करणानि। कर्मेन्द्रियाणि क्रियासाधना-

न्येव । यथा दर्वी । तथात्यन्तजड़ानि त्वं न भवसि इति सिद्धम् । किन्तु त्वं ज्ञानमेव ।

भो भगवन् ! प्राणे सति देहश्चेष्टते इन्द्रियाण्यपि चेष्टन्ते । प्राणे गते देहश्चेष्टाहीनो भवति । इन्द्रियाण्यपि तादृशानि भवन्ति । अहमशनावानहं पिपासावानित्याद्यनुभवात् । अतः प्राण एवाहं इति । तत्र भवसि । कथं उच्यते । तत् शृणु—चैतन्याभावात् । तत् शृणु सुषुप्तौ स्वप्ने च उच्छ्वासनिश्वासरूपेण प्रवर्त्तमानोऽप्ययमन्तर्बहिश्चरन् न जानाति । चौरो गृहे प्रविश्यापहृत्य भूषणानि गच्छति सति स न जानाति । अतोऽत्यन्तजड़ा एव प्राणादयः देहवदेव ।

अपिच एकस्मिन् पर्य्यङ्के शयने सस्त्रीके पुरुषे स्थिते सति कश्चिज्जार आगत्य स्त्रिया सह भूषणानि अपरिहृत्य गच्छति । इत्थं न कर्त्तव्यमिति स यतो न निवारयति । अतोऽत्यन्तजड़ः । प्रबुद्धे जानाति इति चेत् न । स्वापावस्थासु श्वासनिश्वासरूपेणास्योपरतिर्नास्त्येव स्थित्वाप्यसौ न जानाति कथं इत्थं इदानीं कस्मिन् भागे श्वासो वर्त्तते इति पृष्टेऽपि अस्मिन् भागे अहं वर्त्ते । इति प्रतिवक्तुं न समर्थः । जड़श्चेत् प्राणः कथं जड़ं शरीरं चेष्टयति उच्यते । जड़ोऽपि जड़ं चेष्टयन् लोके दृश्यते । यथा प्रचण्डमारुतः गृहच्छादनपर्णशाखान् वृक्षं वा अन्यत्र पातयति । अतः जड़स्यापि अयमेव स्वभावः । एतावतात्मायं न भवति । प्राणस्य स्वस्वचेष्टा न स्वतन्त्राऽतः कर्माधीनैव । कथं ? इत्थं जाग्रत्स्थितिनिमित्तं कर्मोद्भूतं भवति । तदुपक्षये सर्वाणि करणानि गृहीत्वा बुद्ध्युपाधिसम्पर्कजनितविज्ञानेन स स्वप्नं सुषुप्तिं वा गच्छति । एवं स्थानत्रयमनुसृत्य गच्छति कर्मनिमित्तस्य इदं गमनम् । प्राणोऽपि तत्कर्मवशादेव शरीरं परिपालयन् वर्त्तते । प्राणाऽपानव्यानोदानसमानाः पञ्चवायवः ।

हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।

उदानः कण्ठदेशे स्याद्व्यानः सर्वशरीरगः॥

केचित्तु नाग-कूर्म-कृकर-देवदत्त-धनञ्जयाः। अतः नागादुद्गारः। कूर्मो निमिषोन्मेषकरः। कृकरः क्षुत्करः। देवदत्तो जृम्भनकरः। धनञ्जयः पोषणकरः। एतत् प्राणमयः कोशो भवति। अन्यस्याऽपि व्यानादिव्यापारचेष्टां कर्त्तुं न समर्थः। अतः जड़ा एव प्राणादयः। एवं इन्द्रियसमूहात्मकं सप्तदशकं लिङ्गशरीरं त्वन्न भवसीति सिद्धम्।

भो भगवन्! मनसि स्वस्थे पश्यति शृणोति अहं सङ्कल्पवान् विकल्पवान् इत्यनुभवश्च। मनसि रुद्धे न पश्यति न शृणोति अतः मन एवाहं। तत्त्वन्नभवसि। तत्कथं। इत्थं तदानीं मे मनोऽन्यत्र गतम्। इदानीं स्थिरीभूतं उभौ वृत्तिं यो वेत्ति स मनो न भवति। मनसः सकाशात् त्वं द्रष्टा भिन्न एव।

अपिच तन्मनः सा बुद्धिरित्युच्यमाने प्रतिक्षणं विलक्षणे अयुगपद्भावना तयोरेकस्य नाशः अन्योत्पत्तिः मन उत्पत्तिवत्।

(क्रमशः)

---

## यौधिष्ठिरी बुद्धिः।

(पूर्वतोऽनुवृत्ता)

यक्ष। प्रियवचनवादी किं लभते! विमृषित कार्य्यकरः किं लभते।
बहुमित्रकरः किं लभते, धर्मे रतः किं लभते कथय॥

युधि। प्रियवचनवादी प्रियो भवति, विमृषितकार्य्यकरोऽधिकं जयति।
बहुमित्रकरः सुखं वसते, यश्चधर्मरतः स गतिं लभते॥

यक्ष। का च वार्त्ता किमाश्चर्य्यं कः पन्थाः कश्च मोदते।
वद मे चतुरः प्रश्नान् मृता जीवन्तु बान्धवाः॥

युधि। अस्मिन् महामोहमये कटाहे, सूर्य्याग्निना रात्रिदिवेन्धनेन।
मासर्त्तुदर्वी परिघट्टनेन, भूतानि कालः प्रचतीति वार्त्ता॥

अहन्यहनि भूतानि गच्छन्ति यममन्दिरम् ।
शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्य्यमतःपरम् ॥
तर्कोऽप्रतिष्ठः श्रुतयो विभिन्नाः नासौ मुनिर्यस्य मतं न भिन्नम् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥
पञ्चमेऽहनि षष्ठे वा शाकं पचति यो नरः ।
अनृणी चाप्रवासी च स वारिचर ! मोदते ॥
इति महाभारतीय युधिष्ठिर वकरूपि यक्ष प्रश्नोत्तरं समाप्तम् ।

---

## कलापव्याकरणे शर्ववर्मा ।

(कथासरित्सागरतः)

इत्युक्त्वान्तर्हिते देवे निरगच्छमहं बहिः ।
तण्डुला मे प्रदत्ताश्च तत्र देवोपजीविभिः ॥२०॥
ततोऽहमागतो राजं स्तण्डुलास्ते च मे पथि ।
चित्रं तावन्त एवासन् भुज्यमाना दिने दिने ।
एवमुक्त्वा स्ववृत्तान्तं विरते शर्ववर्मणि ।
उदतिष्ठन्नृपः स्नातुं प्रहृष्टः सातवाहनः ॥२२॥
ततोऽहं कृतमौनत्वाद् व्यवहारवहिष्कृतः ।
अनिच्छन्तं तमामन्त्र्य प्रणामेनैव भूपतिम् ॥२३॥
निर्गत्य नगरात्तस्मात् शिष्यद्वयसमन्वितः ।
तपसे निश्चितो द्रष्टुमागतो विन्ध्यवासिनीम् ॥२४॥
स्वप्नादेशेन देव्या च तयैव प्रेषितस्ततः ।
विन्ध्याटवीं प्रविष्टोऽहं त्वां द्रष्टुं भीषणामिमाम् ॥२५॥
पुलिन्दवाक्यादासाद्य सार्थं दैवात् तथञ्चन ।
इह प्राप्तोऽहमद्राक्षं पिशाचान् सुवहूनमून् ॥२६॥
अन्योन्यालापमेतेषां दूरादाकार्ण्य शिक्षिता ।
मया पिशाचभाषेयं मौनमोक्षस्यकारणम् ॥२७॥

उपगम्य ततश्चेतां, त्वां श्रुत्वोज्जयिनीं गतम् ।
प्रतिपालितवानस्मि यावदभ्यागतो भवान् ॥२८॥
दृष्ट्वा त्वां स्वागतं कृत्वा चतुर्थ्यां भूतभाषया ।
मया जातिः स्मृतेत्येष वृत्तान्तो मेऽत्र जन्मनि ॥२९॥
एवमुक्ते गुणाढ्येन काणभूतिरुवाच तम् ।
त्वदागमो मया ज्ञातो यथाद्य निशि तच्छृणु ॥३०॥
राक्षसो भूतिवर्माख्यो दिव्यदृष्टिः सखास्ति मे ।
गतवानस्मि चोद्यानमुज्जयिन्यां तदास्पदम् ॥३१॥
तत्रासौ निजशापान्तं प्रतिपृष्टो मयाब्रवीत् ।
दिवा नास्ति प्रभावो नस्तिष्ठ रात्रौ वदाम्यतः ॥३२॥
तथेति चाहं तत्रस्थः प्राप्तायां निशि वल्गताम् ।
तमपृच्छं प्रसङ्गेन भूतानां हर्षकारणम् ॥३३॥
पुरा विरिञ्चसंवादे यदुक्तं शङ्करेण, तत् ।
शृणु वच्मीति मामुक्त्वा भूतिवर्माथ सोऽब्रवीत् ॥३४॥
दिवा नैषां प्रभावोऽस्ति ध्वस्तानामर्कतेजसा ।
यक्षरक्षः पिशाचानां तेन हृष्यन्त्यमी निशि ॥३५॥
न पूज्यन्ते सुरा यत्र न च विप्रा यथोचितम् ।
भुज्यतेऽविधिना वापि तत्रैते प्रभवन्ति च ॥३६॥
अमांसभक्षः साध्वी वा यत्र, तत्र न यान्त्यमी ।
शुचीन्शूरान् प्रबुद्धांश्च नाक्रामन्ति कदाचन ॥३७॥
इत्युक्त्वा मे स तत्कालं भूतिवर्माऽब्रवीत्पुनः ।
गत्वागतो गुणाढ्यस्ते शापमोक्षस्य कारणम् ॥३८॥
श्रुत्वैतदागतश्चास्मि, त्वञ्च दृष्टो मया प्रभो ।
कथयाम्यधुना तां ते पुष्पदन्तोदितां कथाम् ॥३९॥
किन्त्वेवं कौतुकं मेऽस्ति कथ्यतां केन हेतुना ।
स पुष्पदन्तस्त्वं चापि माल्यवानिति विश्रुतः ॥४०॥

काणभूतेरिति श्रुत्वा गुणाढ्यस्तमभाषत ।
गङ्गातीरेऽग्रहारोऽस्ति नाम्ना बहुसुवर्णकः ॥४१॥
तत्र गोविन्ददत्ताख्यो ब्राह्मणोऽभूद्बहुश्रुतः ।
तस्य भार्य्याग्निदत्ता च बभूव पतिदेवता ॥४२॥
स कालेन द्विजस्तस्यां पञ्च पुत्रानजीजनत् ।
ते च मूर्खाः सुरूपाश्च बभूवुरभिमानिनः ॥४३॥
अथो गोविन्ददत्तस्य गृहानतिथिराययौ ।
विप्रो वैश्वानरो नाम, वैश्वानर इवापरः ॥४४॥
गोविन्ददत्ते तत्कालं गृहादपि बहिःस्थिते ।
तत्पुत्राणामुपागत्य कृतं ते नाभिवादनम् ॥४५॥
हासमात्रञ्च तैस्तस्य कृतं प्रत्यभिवादनम् ।
ततः स कोपान्निर्गन्तुं प्रारेभे तद्गृहाद्द्विजः ॥४५॥
आगतेनाथ गोविन्ददत्तेन स तथाविधः ।
क्रुद्धः पृष्टोऽनुनीतोऽपि जगादैवं द्विजोत्तमः ॥४७॥
पुत्रास्ते पतिता मूर्खास्तत्सम्पर्काद्भवानपि ।
तस्मान्न भोक्ष्ये त्वद्गेहे, प्रायश्चित्तं न मे भवेत् ॥४८॥

(क्रमशः)

---

## धर्मविवेकः ।

(आश्विनमासादनु)

शीर्षण्यानि ततः खानि मूर्द्धानञ्च नृपालभेत् ।
बाहू नाभिञ्च तोयेन हृदयञ्चापि संस्पृशेत् ॥१९॥
आचान्तश्च ततः कुर्य्यात् पुमान् केशप्रसाधनम् ।
आदर्शाञ्जनमाङ्गल्यदुर्वाद्यालभनानि च ॥२०॥

ततः स्ववर्णधर्मेण वृत्त्यर्थञ्च धनार्जनम् ।
कुर्वीत श्रद्धासम्पन्नो यजेच्च पृथिवीपते ! ॥२ ॥
सोमसंस्था हविःसंस्थाः पाकसंस्थाश्च संस्थिताः ।
धने यतो मनुष्याणां यतेतातो धनार्जने ॥२२॥
नदीनदतड़ागेषु देवखातजलेषु च ।
नित्यक्रियार्थं स्नायीत गिरिप्रस्रवणेषु च ॥२३॥
कूपेषूद्धृततोयेन स्नानं कुर्वीत वा भुवि ।
स्नायीतोद्धृततोयेन अथवा भुव्यसम्भवे ॥२४॥
शुचिवस्त्रधरः स्नातो देवर्षिपितृतर्पणम् ।
तेषामेव हि तीर्थेन कुर्वीत सुसमाहितः ॥२५॥
त्रीरपः प्रीणनार्थाय देवानामपवर्जयेत् ।
तथर्षीणां यथा न्यायं सकृच्चापि प्रजापतेः ॥२६॥
पितॄणां प्रीणनार्थाय त्रीरपः पृथिवीपते ।
पितामहेभ्यश्च तथा प्रीणयेत् प्रपितामहान् ॥२७॥
मातामहाय तत्पित्रे तत्पित्रे च समाहितः ।
दद्यात् पैत्रेण तीर्थेन काम्यञ्चान्यत् शृणुष्व मे ॥२८॥
मात्रे प्रमात्रे तन्मात्रे गुरुपत्न्यै तथा नृप।
गुरवे मातुलादीनां स्निग्धमित्राय भूभुजे ॥२९।
इदञ्चापि जपेदम्बु दद्यादात्मेच्छया नृप ।
उपकाराय भूतानां कृतदेवादितर्पणः ॥३०॥
देवासुरास्तथा यक्षा नागा गन्धर्वराक्षसाः ।
पिशाचा गुह्यका सिद्धाः कुष्माण्डास्तरवः खगाः ॥३१॥
जलेचरा भूमिलया वाय्वाहाराश्च जन्तवः ।
प्रीतिमेते प्रयान्त्वाशु मद्दत्तेनाम्बुनाखिलाः ॥३२॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥३३॥

येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते सर्वे तृप्तिमायान्तु ये चास्मत्तोयकाङ्क्षिणः ॥३४॥
यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् ।
इदमप्यक्षयञ्चास्तु मया दत्तं तिलोदकम् ॥३५॥
काम्योदकप्रदानन्ते मयैतत् कथितं नृप ।
यद्दत्त्वा प्रीणयत्येतन्मनुष्यः सकलं जगत् ॥३६॥
जगदाप्यायनोद्भूतं पुण्यमाप्नोति चानघ ।
दत्त्वा काम्योदकं सम्यगेतेभ्यः श्रद्धयान्वितः ॥३७॥
आचम्य च ततो दद्यात् सूर्य्याय सलिलाञ्जलिम् ।
नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ।
जगत्सवित्रे शुचये सवित्रे कर्मदायिने ॥३८॥
ततो गृहार्चनं कुर्य्यादभीष्टसुरपूजनम् ।
जलाभिषेकपुष्पाणां धूपादेश्च निवेदनैः ॥३९॥
अपूर्वमग्निहोत्रञ्च कुर्य्यात् प्राग्ब्रह्मणे ततः ।
प्रजापतिं समुद्दिश्य दद्यादाहुतिमादरात् ॥४०॥
गृह्येभ्यः काश्यपायाथ ततोऽनुमतये क्रमात् ।
तच्छेषं मणिकेऽङ्गेऽथ पर्जन्याय क्षिपेत्ततः ॥४१॥
द्वारे धातुर्विधातुश्च मध्ये च ब्रह्मणः क्षिपेत् ।
गृहस्य पुरुषव्याघ्र दिग्देवानपि मे शृणु ॥४२॥
इन्द्राय धर्मराजाय वरुणायतथेन्दवे ।
प्राच्यादिषु बुधो दद्यात् हुतशेषात्मकं बलिम् ॥४३॥
प्रागुत्तरे च दिग्भागे धन्वन्तरिबलिं बुधः ।
निर्वपेद् वैश्वदेवञ्च कर्म कुर्य्यादतः परम् ॥५४॥
वायव्ये वायवे दिक्षु समस्तासु ततो दिशाम् ।
ब्रह्मणे चान्तरिक्षाय भानवे प्रक्षिपेद् बलिम् ॥५५॥
विश्वेदेवान् विश्वभूतानथो भूतपतीन् पितॄन् ।

यक्ष्माणाञ्च समुद्दिश्य बलिं दद्यान्नरेश्वर ॥४६॥
ततोऽन्यदन्नमादाय भूमिभागे शुचौ बुधः।
दद्यादशेषभूतेभ्यः स्वेच्छया तत् समाहितः ॥४७॥
देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसंघाः।
प्रेताः पिशाचास्तरवः समस्ताः येचान्नमिच्छन्ति मया प्रदत्तम् ॥४८॥
पिपीलिकाः कीटपतङ्गकाद्याः बुभुक्षिता कर्मनिवन्धवद्धाः।
प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु ॥४९॥
येषां न माता न पिता न बन्धुः नैवान्नसिद्धिर्न तथान्नमस्ति।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत् प्रयान्तु तृप्तिं मुदिता भवन्तु ॥५०॥
भूतानि सर्वाणि तथान्नमेतदहञ्च विष्णुर्नयतोऽन्यदस्ति।
तस्मादहं भूतनिकायभूतमन्नं प्रयच्छामि भवाय तेषाम् ॥५१॥
चतुर्दशो भूतगुणो य एष तत्र स्थितो येऽखिलभूतसंघाः।
तृप्त्यर्थमन्नं हि मया विसृष्टं तेषामिदं ते मुदिता भवन्तु ॥५२॥
इत्युच्चार्य्य नरो दद्यादन्नं श्रद्धासमन्वितः।
भुवि भूतोपकाराय गृही सर्वाश्रयो यतः ॥५३॥
श्वचण्डालविहङ्गानां भुवि दद्यात् ततो नरः।
ये चान्ये पतिताः केचिदपात्रा भुवि मानवाः ॥५४॥
ततो गोदोहमात्रं वै कालं तिष्ठेद् गृहाङ्गणे।
अतिथिग्रहणार्थाय तदूर्द्धं वा यथेच्छया ॥५५॥
अतिथिं तत्र संप्राप्तं पूजयेत् स्वागतादिना।
तथासनप्रदानेन पादप्रक्षालनेन च ॥५६॥
श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च।
गच्छतश्चानुयानेन प्रीतिमुत्पादयेत् गृही ॥५७॥
अज्ञातकुलनामानमन्यतः समुपागतम्।
पूजयेदतिथिं सम्यक् नैकग्रामनिवासिनम् ॥५८॥
अकिञ्चनमसंबद्धमन्यदेशात् समागतम्।

असंपूज्यातिथिं भुञ्जन् भोक्तुकामं व्रजत्यधः ॥५८॥
स्वाध्यायगोत्रचरणमपृष्ट्वा च तथा कुलम् ।
हिरण्यगर्भबुद्धा तं मन्येताभ्यागतं गृही ॥६०॥
पितृयर्थञ्चापरं विप्रमेकमप्याशयेन्नृप ।
तद्देश्यं विदिताचारसंभूतिं पञ्चयज्ञियम् ॥६१॥
अन्नाग्रञ्च समुद्धृत्य हन्तकारोपकल्पितम् ।
निवापभूतं भूपाल श्रोत्रियायोपकल्पयेत् ॥६२॥
दद्याच्च भिक्षात्रितयं परिव्राड् ब्रह्मचारिणाम् ।
इच्छया च नरो दद्यात् विभवे सत्यवारितम् ॥६३॥
इत्येतेऽतिथयः प्रोक्ताः प्रागुक्ता भिक्षवश्च ये ।
चतुरः पूजयन्नेतान् नरः पापात् प्रमुच्यते ॥६४॥
अतिथिर्यस्य भग्नाशो गृहात् प्रतिनिवर्त्तते ।
स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥६५॥
धाता प्रजापतिः शक्रो वह्निर्वसुगणोऽर्य्यमा ।
प्रविश्यातिथिमेवैते भुञ्जतेऽन्नं नरेश्वर ॥६६॥
तस्मादतिथिपूजायां यतेत सततं नरः ।
स केवलमघं भुङ्क्ते योऽभुङ्क्ते त्वतिथिं विना ॥६७॥
ततः सुवासिनीदुःखिगर्भिणी-वृद्ध-बालकान् ।
भोजयेत् संस्कृतान्नेन प्रथमं चरमं गृही ॥६८॥
अभुक्तवत्सु चैतेषु भुञ्जन् भुङ्क्ते हि दुष्कृतम् ।
मृतश्च नरकं गत्वा श्लेष्मभुग् जायते नरः ॥६९॥
अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम् ।
असंस्कृतान्नभुङ्मूत्रं बालादिप्रथमं शकृत् ॥७०॥
तस्माच्छृणुष्व राजेन्द्र यथा भुञ्जीत वै गृही ।
भुञ्जतश्च तथा पुंसः पापबन्धो न जायते ॥७१॥
इह चारोग्यमतुलं बलवृद्धिस्तथा नृप ।

भवत्यनिष्टशान्तिश्च वैरिपक्षाभिचारिका ॥७२॥
स्नातो यथावत् कृत्वा च देवर्षिपितृतर्पणम् ।
प्रशस्तरत्नपाणिस्तु भुञ्जीत प्रयतो गृही ॥७४॥
कृतजाप्यो हुते वह्नौ शुद्धवस्त्रधरो नृप ।
दत्त्वाऽतिथिभ्यो विप्रेभ्यो गुरुभ्यः संश्रिताय च ॥७४॥
पुण्यगन्धधरः शस्तमाल्यधारी नरेश्वर ।
नैकवस्त्रधरोऽथार्द्रपाणिपादो नराधिपः ॥७५॥
विशुद्धवदनः प्रीतो भुञ्जीत न विदिङ्मुखः ।
प्राङ्मुखोदङ्मुखो वापि न चैवान्यमना नृप ! ॥७६॥
अन्नं प्रशस्तं पथ्यञ्च प्रोक्षितं प्रोक्षणोदकैः ।
न कुत्सिताहृतं नैव जुगुप्सावदसंस्कृतम् ॥७७॥
दत्त्वा तु भक्तं शिष्येभ्यः क्षुधितेभ्यस्तथा गृही ।
प्रशस्तशुद्धपात्रेषु भुञ्जीताकुपितो नृप ॥७८॥
नासन्दीसंस्थिते पात्रे नादेशे च नरेश्वर ।
नाकाले नातिसंकीर्णे दत्त्वाग्रञ्च नरोऽग्नये ॥७९॥
मन्त्राभिमन्त्रितं शस्तं न च पर्य्युषितं नृप ।
अन्यत्र फलमांसेभ्यः शुष्कशाकात् तथैव च ॥८०॥
तद्वद्वादरिकेभ्यश्च गुडपक्वेभ्य एव च ।
भुञ्जीतोद्धृतसाराणि न कदाचिन्नरेश्वर ॥८१॥
नाशेषं पुरुषोऽश्नीयादन्यत्र जगतीपते ।
मध्वम्बुदधिसर्पिर्भ्यः शक्तुभ्यश्च विवेकवान् ॥८२॥
अश्नीयात् तन्मना भूत्वा पूर्वन्तु मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकं ततः ॥८३॥
प्राग्द्रवं पुरुषोऽश्नन् वै मध्ये च कठिनाशनम् ।
पुनरन्ते द्रवाशी च बलारोग्ये न मुञ्चति ॥८४॥

(क्रमशः)

## व्याकरणम् ।

(पूर्वप्रकाशितात्परम्)

Servants should address their king by saying स्वामिन्, देव, प्रभो etc.

Lowborn people should address their king by saying भट्टा etc.

Royal sages should address their king by saying वयस्य etc.

Sages (मुनि, ऋषि etc.) should adress their king by saying राजन्, महाराज etc., and with words formed by the addition of patronymics (अपत्य-प्रत्यय); as पौरव, राघव, कौन्तेय etc.

Lower classes should address a Brahman by saying विप्र, आर्य्य etc.

Kings should address their fools (विदूषक) by saying वयस्य and also by their names.

Actors in a theatre should address one another by saying आर्य्य ।

Every one should address a divinity (देवता), a sage (मुनि, ऋषि, ), a devotee (साधक), and sanyasins by saying भगवन् ।

One should address his friend by saying वयस्य, बन्धो, मित्र etc.

Youngmen should address old men (of the same rank or superior in rank) by saying तात etc.

The son, pupil and younger brothers (or brethern, nephew etc.) are to be addressed as वत्स, पुत्रक, तात etc. or by their names as लक्ष्मण etc. or by their गोत्र as काश्यप etc.

The student should address his teacher by saying उपाध्याय।

The prince should be addressed by saying कुमार etc.

The princess should be addressed by saying भर्तृदारिके।

Ladies should address their friends (सखी) by saying हला, सखि, आलि etc.

---

## USEFUL WORDS.

| *Words.* | *Sanskrit equivalents.* |
|---|---|
| Break-fast | प्रातराशः |
| Dinner | मध्याह्नप्राशनम् |
| Good bye | आमन्त्रये, आपृच्छे |
| Teacher | अध्यापकः उपाध्यायः |
| Principal of a college | अध्यक्षः |
| Pupil | छात्रः, अन्तेवासी |
| Elegant speech | वाग्विलासः |
| School house | विद्यायतनम्, पाठशाला। |
| Cook shed | पाकगृहं, रन्धनशाला |
| Kitchen | महानसः (') |

| *Words.* | *Sanskrit equivalents.* |
|---|---|
| Shrine | देवायतनम् |
| Father | पिता, जनकः, तातः |
| Mother | माता, अम्बा, जननी |
| Grand father | पितामहः, मातामहः। |
| Maternal uncle | मातुलः |
| Paternal uncle | खुल्लतातः |
| Father's sister | पितृष्वसा or पितुः ष्वसा। |
| Mother's sisters | मातृष्वसा or मातः ष्वसा। |

| *Words.* | *Sanskrit equivalents.* |
| --- | --- |
| Carriage | शकट: |
| Tendrils, sprig | पल्लवम् (:) |
| Cow dung | गोमय: (:) |
| Car driven by oxen | गोयानं |
| Dog | ग्रामसृग:, कुक्कुर:, श्वा, |
| Potter | कुलाल: |
| Steers man | कार्णिक: |
| Camphor | कर्पूर: (') |
| Reproach, censure | परिवाद: |
| Precipice | प्रपात: |
| Full tide | जलोच्छ्वास: |
| Palace | प्रासाद:, सौध: (') |
| Minister | मन्त्री |
| Garment | अङ्गरक्षणी |
| Commander-in-chief | सेनानायक: सेनापति: |
| Bodice | कूर्पास: (') |
| Leader of an army | सेनानी: |
| Casheer | कोषाध्यक्ष: |
| Treasury | कोषागार: |
| Magistrate | नगरपाल: |
| Judge | धर्माधिकरणिक: |
| Market place | विपणी (fem.) |
| Shoe-mark | कुरद: |

| *Words.* | *Sanskrit equivalents.* |
| --- | --- |
| Shop | आपण: |
| Shop-keeper | विपणी (from विपणिन्) |
| Brother | भ्राता |
| Sister | भगिनी, स्वसा |
| Step-brother | वैमात्र: |
| Foster father | पाता |
| Fascinating woman | वाग्विदग्धा । |
| Flesh | मांसं, पललं, |
| Meat | पक्वमांसम् |
| Mule | गोकर्ण: |
| Plough | गोकिल:, सीर: |
| Furrow | सीता |
| Cattle shed | गोष्ठं, व्रज: |
| Market | ग्राममुख: |
| Domestic animal | ग्राम्यपशु: |
| Headache | शिर:शूलं, शिरोरुजा । |
| Boat | नौ: उत्प्लवा |
| Canal | कुल्या |
| Hypotenuse | कर्ण: |
| From ear to ear | कर्णाकर्णि |
| A sketch, an outline | परिलेख |
| Lightning | सौदामिनी, विद्युत् |

| *Words.* | *Sanskrit equivalents.* | *Words.* | *Sanskrit equivalents.* |
|---|---|---|---|
| Screen | यवनिका | Head-dress | शिरोवेष्टनम्, शिरःप्रावरणम् |
| Court of justic | धर्माधिकरणं | | |

(क्रमशः)

---

## प्राप्त पत्रम्।

(नात्र सम्पादकोऽभियोक्तव्यः)

श्रीयुत्चन्द्रिकासम्पादकमहाशयेषु।

प्रियवर ? निम्नलिखितं पत्रं शोभयन्तु भवन्तश्चन्द्रिकायां स्थान-प्रदानेन (जिला बेलगाम कित्तूरवास्तव्येषु श्रीरामचन्द्र मणिकर शर्मसु शतधा प्रणिपातानन्तरं विज्ञप्तिरियम्।)

महाशय ? भवद्भिराश्विनमासीयचन्द्रिकाङ्कस्यापञ्चके (आजन्म-जीर्णं रणतो रणतो मुनीनाम्) इत्यादि श्लोकपञ्चकं विरचितन्तच्च यद्यपि यमकशब्दविन्यासदृष्ट्या साहित्यविज्ञानसाकर्षणे सुकल्पं, परञ्चास्मद्दृष्टिविचारसञ्चारतया तु न समीचीनं प्रतिभात्यर्थतो दूरूढ़त्वात्। अतोऽहमात्मीयधृष्टतया साग्रहं सूचयाम्येतद्भवत्सु। तार्किकैरपीदृग् दुरूढ़ार्थकाव्यनिर्माणं सर्वत्रानभिवाञ्छितम्। किमुत कोमलार्थपदाभिलाषुकैः कविभिरतो न कार्य्यमेतादृक्-काव्यनिर्माणं कृपया, 'यथोक्ताङ्केनचिन्ताविना'।

अन्तर्गूढ़ानर्था
नव्यञ्जयतः प्रसादरहितस्य।
सन्दर्भस्य नदस्य च
न रसः प्रीत्यै रसज्ञानाम् ॥१॥

अन्यच्च। नाम्नी पयोधरमिवातितरां प्रकाशो
नो गुर्जरीस्तनमिवाति तरान्निगूढ़ः।

अर्थो विरामरहितः पिहितश्च कश्चित्
सौभाग्यमेति सरहदवधूकुचाभः ॥२॥

तथाच । भ्रमरहिता सा कचवत् स्त्रीणां कुचवच्च सरसहिता ।
लसदचरपियूषाऽधरवत्कविता सच्चात्मनाञ्जीयात् ॥३॥

साम्प्रतं प्रार्थनयच्चेदोदृक् काव्यनिर्माणं स्यात् । तदा तद्व्याख्यानमपि कार्य्यमेवाथवा भ्रान्तपदानांटिप्पणिका । अन्यथामादृशामल्पमेधसाञ्चाश्यतमः कथं विलीयेत । यतश्चन्द्रिकेयन्तु सरलसंस्कृतभाषाभिज्ञानां शास्त्रीयमर्माथे वोधनाय,

ईदृशके काव्ये मदीया तु व्यवस्थेषा । यतः
जानन्त एव जानन्तु किं बहूक्त्या न मे प्रभो ।
मनसो वचसो वापि वैभवन्तव गोचरम् ॥४॥

भवदीयः शुक्ल गुरुदत्तोपनामक
पण्डित परमसुख शर्म्मा ।
पो: जगनेर जिं० आगरा ।

---

## समस्यापूर्त्तौ सम्मतम् ।

"समीचीनतया भवतां सम्मतासु समस्यापूर्त्तिषु श्रीपरमसुखशर्मणः श्रीसारदाचन्द्रशर्मचक्रवर्त्तिनः श्रीशिवेश्वरशर्मणश्चेति त्रयाणामेव समस्या पूर्त्तयः साकल्येन प्रशंसार्हाः । अहमप्येतदनुमन्ये । किन्तु परमसुखशर्मणः समस्यापूर्त्तिषु द्वितीयायां "सखि" पदस्य नैरर्थ्यं, तृतीयस्यां संकारितेति समोऽधिकत्वेनाधिकपदत्वं, पूर्वार्धे चात्र सम्बन्धस्य दुरवगमत्वं (रामे वानरवाहिनीशतयुते लङ्कां विजेतुं गते दृष्ट्वा नीरमयां निधिंस्तु कपयः साश्चर्य्यमित्यब्रुवन् इतिपाठे विच्छित्तिविशेषो विभावनीयः) चतुर्थ्यां "निखिलानि सेवाणी"

त्वस्थाने गुरुर्वाभिति दोषता दृश्यन्ते। श्रीमिविश्वरशर्मणस्तु तृतीयाया: क्लिष्टत्वं गलिनाति। तत्सर्वथा गुणवत्पद्यप्रणेतृत्वात् श्रीमदन्नादा चन्द्रशर्मवन्नन्त्र्यं कविभूषणोपाधि मर्हतीतिमेऽभिप्राय:। तदप्यनुष्ठीयतां यथोचितं भवदिच्छानुरोधेनेति।"

रामिवड़ेकरोपाह्वस्य

श्रीअप्पाशास्त्रिण:। कोल्हापु—मुम्बई

अहमपि त्वन्मतमनुमोदमान उपाधिपत्रं स्वाक्षरो कर्त्तुं भवन्तं प्रापयामि इति। श्रीजयचन्द्रशर्मा (सिद्धान्तभूषण:)

---

## समालोचना।

"रामाभ्युदयं" नाम महाकाव्यं तत्र चन्द्रिकायां भूय: परिचित नाम्ना श्रीमता अन्नदाचरण तर्कचूड़ामणिना विरचितम्। मूल्यमस्यैकरूपक:। नोयाखाली नगर्यां श्रीप्रसन्नकुमार गुह सन्निधौ प्राप्तव्यम्।

अहो तन्मन्ये

हा वङ्गदेश कविभिर्जयदेवकाद्यै:
योऽस्तं गतश्चिरदिनाय स एव भूय:।
श्रीअन्नदाचरण बालकविं सम्येत्य
सौभाग्यभानुरुदगादिह वङ्गभूमौ॥

य: खलु सर्वानन्दठाकुर: त्रिपुरानगर्य्यधीने मेहारग्रामे शवसाधनेन सर्वा: कालिकादि-दश महाविद्या: साचात् क्तवान्। अद्युनापि तत्र दैनिकी विशेषतस्तूत्तरायण-संक्रान्त्यां महती यात्रा भवति।

अस्यैव सर्वविद्यावंशस्यावतंसोऽयं बालकवि: प्रियाकृत्या गुणैश्च नयनमनांसि मानवानां तर्पयति।

तेनैव मधुरकोमलकान्तपदावलीकलितं "रामाभ्युदयं" नाम महाकाव्यं विरचितम्। अस्य रचना नैपुण्यन्तु बहुधाप्यनुभूतं चन्द्रिकापाठकैरधुनाप्यनुभूयताम्।

अस्य प्राचीनरीत्या रचनापरिपाटी श्रीमती, किन्तु काव्य-न्तरानन्यगत्या प्राचीनकविभावो सर्पनीय इति ।

अतोऽग्रतः रामाभ्युदायात् कांश्चिदुद्धृत्य श्लोकानुपहरामि क्रमशः तथाहि ।

---

यस्मिन् श्रुतिः संशयमातनोति ध्यानैकतानप्रयतात्मनोऽपि ।
मुह्यन्ति देवा अपि सत्त्वरूपा यस्मिंस्तमीशं परमाश्रयामि ॥३॥
स्वतोऽशरीरोऽपि शरीरभाग्यो माया-सहायो भुवनान्यमूनि ।
स्रष्टुं प्रभुः पातुमथापि हर्त्तुं तस्मै शिवाय प्रणतिर्ममास्तु ॥४॥
अविद्यया यस्य जगद्विजज्ञे नाशे त्वमुष्याः परिलीयते च ।
ओंकारवाच्यं त्रिगुणैरतीतं तद्ब्रह्म सच्चिन्मयमानमामि ॥५॥
ययोः प्रवृत्त्या जगतीतलेऽस्मिन् स्वादृष्टयोगेन च सञ्चरामि ।
यौ सन्नयं शिक्षयितुं प्रवृत्तौ पित्रोस्तयोः पाद-सरोजमीडे ॥६॥
गुरो ! कृपालो ! करुणाम्बुसिक्तैर्निरन्तरन्त्वच्चरणाश्रितस्य ।
विधीयतां विघ्नशिखि-प्रशान्तिराश्रीयताच्चात्र सहायभावः ॥७॥
आचार्य्य ! याचे भवतः प्रसादं यानिष्यते येन महान् प्रमोहः ।
दायिष्यते कर्मसु निर्मला धीः स्थायिष्यतेऽप्यत्र सदिष्टसिद्धी ॥८॥
यथाञ्चवृत्तेरधिराज्य लिप्सा करेण पङ्गोर्जलधेस्तितीर्षा ।
विडम्बनायेव यथा तथा मे मन्दस्य लोके कविकीर्त्ति लिप्सा ॥१०॥
न कामये काव्यपदं कवीनां याचे सतान्दृष्टिलवं कथञ्चित् ।
हविः पुरोडासभुजा तृणादिर्नश्यति किं ज्वलता नलेन ॥११॥
साहित्य शास्त्राम्बुधि पारदृग्भिस्तिरस्क्रियेऽहं यदि धीरसङ्घैः ।
नैवात्र दूये कवयो यदिस्युः कलङ्किनो नो मम पद्य-सार्थैः ॥१२॥
चापल्यदोषैः परिहीयते नो मूर्खः कदापीति दृढ़ः प्रवादः ।
कवित्वहीनः कविताविलेखे रतोऽहमेवात्र परो निदर्शः ॥१३॥
तथापि नारायणवृत्तगीतैर्वाग्जन्मनी मे सफले भवेताम् ।

इत्येव वाञ्छापरतन्त्रचेताः श्रीरामकीर्त्तिं गदितुं प्रवृत्तः ॥१४॥
आसीदयोध्या नगरी यदीयैः योद्धुं न शेकुः सुभटा जनौघैः।
यत्रादिदेवः सततं चचार नारायणो मङ्गल मुख्यभूमिः ॥१५॥
प्रासादमालाऽपि सदैव भेजे योगार्थमिवात्र सचेतनेव।
प्रसादयन्ती समचेतनाऽपि नेत्राणि चित्तानि च मानवानाम् ॥१६॥
आरामवन्तो धवलाः सरामाः यस्यां पराःस्फाटिक सौधसङ्घाः।
अरण्यभाजं सहिमं सरामं विडम्बयन्ति स्म नगाधिराजम् ॥१७॥
प्रासादशृङ्गान्यधिरुह्य रामाः मन्दानिलान्दोलित नीलवस्त्राः।
घनावली-संश्रित-चञ्चलायाः लुम्पन्ति सौभाग्य-विभूतिगर्वम् ॥१८॥
यस्यां रजन्यां मणयः प्रभाभिः स्वच्छाभिरन्योन्यविभोज्ज्वलाभिः।
मालिन्यमिन्दोर्विदधुस्ततोऽसौ कलङ्कमङ्के चिरमादधाति ॥१९॥
विशोभमानैर्विपणीषु यस्या रत्नैर्विचित्रोज्ज्वलकान्तिमद्भिः।
मन्येऽम्बुराशेः खलु नाम मात्रं रत्नाकरत्वं स्थितमत्र साक्षात् ॥२०॥
यद्रम्यता दर्शन लुब्धचित्ताः देवाङ्गना किन्तड़िताम्मिषेण।
समीक्ष्य दृष्ट्वेव वधूमुखानि विलिल्यिरे पत्रपया क्षणेन ॥२५॥

---

## सम्पादकीय निर्वेदः।

हा श्रीमन् स्यार रमेशचन्द्रमित्र ! हाहा श्रीमन् गुरुदासवन्द्योपाध्याय ! हा अपरे चन्द्रिकासाहाय्यदातारः ! सत्पुत्राः खलु भवन्तो वङ्गभूमेः। प्रदर्शिताः खलु भवद्भिः स्वदेशानां हितैषिताः। पालिताः खलु साहाय्यस्तन्यदानाच्चन्द्रिकाश्चत्वारि वर्षाणि।

चंक्रम्यमाणा च चन्द्रिका दक्षिणस्यां लङ्कां सिंहलं वा, उत्तरस्यां चीनान् हूनान् वा। पूर्वस्यां यमकोटीर्ब्रह्मदेशान् वा पश्चिमायां दस्युजातान् म्लेच्छान् वा प्रीणयति।

किन्तु चिराय साहाय्यदातॄणामिव बलमवलम्बमाना चन्द्रिका-

प्रचलत्विति न कियामपि सम्यक् प्रतिभाति। न वा तेन स्वगौरवं जगदुपकारो वा सम्भवति।

परन्तु वङ्गेभ्योऽपरेषामार्य्यावर्त्त-ब्रह्मावर्त्त-वासिनामिव यदि वङ्गानामपि सम्यक् विवेकशक्तिर्जन्मभूमिहितचिकीर्षा [illegible] भवेत्, तर्हि स्वयमेव स्ववलेनैव चन्द्रिका सुचिरं [illegible]।

अधुना खलु चन्द्रिकाया मूल्यप्रदातारो ग्राहकाः सहस्रादुपरि वर्त्तन्ते। तत्रापि भिन्नदेशीया एवार्द्धाः। ये खलु [illegible] वङ्गीयाः [illegible] पादार्द्धं (४०) एव मूल्यं प्रायच्छन्। अवशिष्टास्तु तत् पूर्व्वकं [illegible] निर्भर्त्सनं वा। किन्तु ते ग्राहकीभवनकाले सोत्साहं स्वयमेव पत्रं प्रालिखन्। ते पुनर्न साधारणाः किन्तु केऽपि प्रधानधर्माधिकरणिकाः, केऽपि प्रधानवादिनियुक्ताः। ते द्विधा त्रिधा पत्रं प्राप्यापि पत्रोत्तरमपि न ददति। का कथा मूल्यस्य। एवं रीत्या अनेकेषां सन्निधौ एक-द्वि-त्रि-चतुर्णां वर्षाणां मूल्यं व्यवकलितम्।

विदेशीयानामप्यनेके यन्नाददन् मूल्यं तन्नैकान्ततो विस्मयकरम्। यतः समुन्नतगिरसामश्वत्थद्रुमानामपि जन्मभूमौ तृणानि क्वापि जायन्त एव।

अहो! चन्द्रिकां जीवयितुं किन्नाम फल्गु कर्म्मापि नाकार्षम्। यथारीति व्ययसम्भावनायान्तु चन्द्रिकायाः प्रतिमासं पञ्चाशत् (५०) मुद्राभ्यूनतो नैव व्ययं निष्पत्स्यते। तत्र पुनः क्लेशमनिर्वचनीयं स्वीकृत्यापि त्रिंशत्चत्वारिंशता वा मुद्राभिर्व्ययं निरपादयम्।

कियन्मूल्यमादत्तं तत्तु १।२।४।६।८म संख्यकचन्द्रिकायाः प्राप्ति-स्वीकारपत्रावलोकनादेव निर्णीयते। हाहा किं विधास्यामि। हे प्रदत्तमूल्यग्राहकाः!! हे संस्कृतस्नेहाः! हे सारविदः! भवतां सौजन्यं यावज्जीवनं नैव विस्मर्त्तव्यम्। भवत्सु च चिरकृतज्ञोऽस्मि। भवतस्तु धन्यान् वदामि। ये खलु मूल्यं नाददुः तेष्वपि कृतज्ञोऽहं चिरमस्मि। एवमपि मन्ये। यत् चन्द्रिकाव्याजेनोन्मुक्तमुखानामेषां स्वरूपमुपलभे। किं विधास्यामि। भवतां संस्कृतप्रियाणामेकस्यैवेऽपि चिराय चन्द्रिकां समरक्षिष्यत् यदास्मिन् मयि परमदैन्यं नास्थास्यत्।

अतश्चैत्रमासात् परं नववर्षप्रवृत्तौ पुनश्चन्द्रिका प्रचलिष्यति नवा संशयमवगाहते मे मन इति।

१८१८ शाकमूल्यप्राप्तिः।—एवं चिह्नः पूर्ववत्सरे मूल्यप्राप्तिं सूचयति।

१२२३ पं पुरोहित गोपिनाथ—२ (भिपि)
गुरुचरण भट्टाचार्य्य —१) (मनि)
१४९० काशीकृष्णविद्याविनोद —१) (नं)
१८०९ घनश्यामचन्द्र १) (नं)
१८०८ इ भि भेङ्कटरामशास्त्री १) (मनि)
१८१० जयदेवशर्म्मा १) (नं)
१८०५ रामदत्तपान्य १) (भिपि)
१८१३ नित्यानन्दपान्यजी १) (मनि)
११८२ के, भि पिताम्बरशास्त्री—१॥० (मनि)
१८०७ वैष्णवदासशर्म्मा १॥० (भिपि)
१२६५ बगला चरण देव —१) (बं)
१८१६ पं सहजराम गङ्गाधर २) (मनि)
१८१५ वि, भीमसेनचार्लु १॥० (मनि)
१८१७ मतिलालठाकुर १) (मनि
१४४२ लक्ष्मीकान्त शर्मा —१) (मनि)
१८१९ ए, एस् अरुणाचल आयार १) (मनि
१८२० गणेशदास १) (नं)
११०३ जोनर सिंह शर्मा —३) (भिपि
१६५९ हरिनारायण भट्टाचार्य्य —१)(मनि)
१६०२ शिवरामउत्तमलाल २) (मनि)
१५९८ सच्चिदानन्ददेव —१॥०) (मनि)
कैलासचन्द्र काव्यतीर्थ ३) (मनि)
१६०७ के, शेषगिरिशास्त्री —१॥० (मनि)

१८२१ जनेन्द्र चन्द्र घोष १) (मनि)
१६५४ भानुप्रसाद दलिभै —१) (मनि)
१३४० शिवुगणेशदिगनाकर —१॥० (मनि)
११७३ नारायणदासगुप्त —१) (भिपि)
१५५ विजयलालदत्त —१॥० (नं)
१२९३ हरिप्रसादचौधुरि —१) (नं)
१५९५ पि के कुनहिराम मनिनन्—१)(मनि
१६४१ श्रीयाइ एम् तैलाङ्ग —२) (मनि)
११५८ किषणलाल मिश्र —१)(मनि)
१८२७ दुवे दशरथजी —१॥० (भिपि)
१०६४ बुलाकीराम शास्त्री १)—(मनि)
१२७८ रामगति सरकार —१) (मनि)
१११२ भामैरीलाल याज्ञिक—१॥०(मनि)
१६१७ डब्लिउ,डि, श्रीनिवास —१)(मनि)
१६३९ वटुकृष्ण घोष —१)(वि)
१०९९ मङ्गलचरण —१)(भिपि)
११३६ विष्णुविहारि चौधुरी —२) (मनि)
१४१० शिवप्रकाश ज्योतिर्वित् —१)(मनि)
१२०८ अप्पाशास्त्री —१॥० (मनि)
१५९३ कस्तूरीनारायणशास्त्री —१)(भिपि)
१२४४ एम् नारायण भट्ट —१)(मनि)
११९२ एइस्, ज्वे माड्डिर —१) (भिपि)
१८२४ केशवराम —१)(मनि)

## षाण्मासिकसाहाय्यम्।

श्रीयुक्त स्यार रमेशचन्द्र मित्रः ३०) श्रीयुक्त गुरुदास वन्द्योपाध्यायः २४)

(क्रमशः)

श्रीश्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।

मायावलम्बते देवमम्बा श्रीशिवसुन्दरी॥

## भाषावतरणिका।

धर्म्मात्मानो ब्राह्मणा वेपमानाः स्नान्ति प्रातस्तीव्रशीतेऽत्र माघे ।

एवं भक्तिः सा रता नूनमीशे यत् प्रह्लादः पर्वतादुत्पपात ॥

## उद्भटश्लोकाः ।

अङ्गुल्या कः कपाटं प्रहरति कुटिले ! माधवः, किं वसन्तः ?

नो चक्री, किं कुलालो ? नहि धरणिधरः, किं द्विजिह्वः फणीन्द्रः ? ।

नाहं घोराहिमर्द्दी किमसि खगपति ? नो हरिः, किं कपीशः ?

राधावाणीभिरित्थं प्रहसितवदनः पातु वश्चक्रपाणिः ॥२८३॥

किं मां प्रपश्यसि घटेन कटिस्थितेन

वक्त्रेण चारुपरिमीलित-लोचनेन ।

अन्यं प्रपश्य पुरुषं तव कर्म्मयोग्यम्

नाहं घटाङ्कितकटीं प्रमदां स्पृशामि ॥२८४॥

सत्यं ब्रवीषि मकरध्वजवाणपीड़ !

नाहं त्वदर्थमनसा परिचिन्तयामि ।

दासोऽद्य मे विघटितस्तव तुल्यरूपी

सोऽयं भवेन्नहि भवेदिति मे वितर्कः ॥२८५॥

पतत्यविरतं वारि नृत्यन्ति शिखिनो मुदा ।

अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥२८६॥

## वालिश्यभञ्जनस्तोत्रम्।

पूर्वं त्वदीयचरणार्च्चन-हीनताया,
दुःखाकुले क्षितितले परजन्मभाजः।
नो कुर्वतस्तदपि तच्चरणार्च्चनन्ते,
जाड्यं लुनीहि कृपया मम देवि दुर्गे! ॥१॥

क्रीड़ाच्छलेन विगतः खलु बालकालः,
प्राप्तोऽपि यौवनमथाखिलसिद्धिदन्तम्।
पापापहं नहि तवाङ्घ्रियुगं भजामि,
जाड्यं लुनीहि कृपया मम देवि दुर्गे ॥२॥

प्रौढ़े सुतादिपरिपालन-चञ्चलात्मा,
भ्राम्यन् जगत्सु नितरां धनतृष्णया त्वाम्।
शक्नोमि किं भवहरामवगन्तुमम्बाम्,
जाड्यं लुनीहि कृपया मम देवि दुर्गे! ॥३॥

वार्द्धक्यमास्पदमशेषरुजासुपेत्य,
चिन्तापरः परवशः पतितेन्द्रियोऽहम्।
कार्य्यं त्वकार्य्यमिति किं विविनच्मि मातः,
जाड्यं लुनीहि कृपया मम देवि दुर्गे! ॥४॥

मृत्युर्विभीषयति नित्यमनर्थ-हेतुः,
स्वच्छन्दता कथमहो वद मामुपेयात्।
दत्वा जनुर्जननि! किं परिपालकुण्ठा,
जाड्यं लुनीहि कृपया मम देवि दुर्गे। ॥५॥

जाल्मो भवेद्यदि सुतो जननी ततः किम्,
नापद्यते जनपदे प्रचुरं कलङ्कम्।
मा याहि निन्दितपदं परिपाहि पुत्रम्,

अन्नाद्यभावजनितं विधुरं कठोरम्,
कालप्रसूत-नियमञ्च सुखं सहिष्ये ।
मर्मार्दिनी तु जननी कणमात्रगर्हा,
जाड्यं लुनीहि कृपया मम देवि दुर्गे ! ॥७॥

विद्याधरी-वदन-निःसृतगीति-सक्ताम्,
सन्मञ्जरी-मिलित-मञ्जुलपारिजातम् ।
नो नन्दनं सुरपतेर्मधुरं प्रयाचे,
जाड्यं लुनीहि कृपया मम देवि दुर्गे ! ॥८॥

श्रीखण्डखण्डममरेशशिरोवतंसम्,
नो वा स्रजं कुसुमकोरक-कोमलाङ्गीम् ।
फुल्लारविन्दवदनां वनितां न याचे,
जाड्यं लुनीहि कृपया मम देवि दुर्गे ! ॥९॥

सौधः सुधाधवलितो गिरिशृङ्गतुङ्गः,
सत्कामिनीकलकलाकलितान्तरो मे ।
नावश्यको विहितगोपुर एव भूमौ,
जाड्यं लुनीहि कृपया मम देवि दुर्गे ! ॥१०॥

काले करालकवले, कवलाय कालि !
किं ते मतं मम समर्पणमम्बिकेऽस्मिन् ।
नाहं परस्तव सुतः परिपाहि मातः,
जाड्यं लुनीहि कृपया मम देवि दुर्गे ! ॥११॥

देवेश-शेषशयनेश-गणेश-विश्व-
लोकेश-शेष-दिवसेश-निशेशदेवाः ।
त्वामाश्रिता विधिवशात् नहि सेवकोऽहम्,
जाड्यं लुनीहि कृपया मम देवि दुर्गे ! ॥१२॥

उत्पद्यते भ्रमयते विनिवर्त्ततेऽसौ,
वाभज्यते तदपि नो म्रियते दुराशा ।

देदीप्यते हृदि सदा नहि मां जहाति,
जाड्यं लुनीहि कृपया मम देवि दुर्गे ! ॥१३॥

सङ्कल्पकल्पतरुरन्तरनाकपृष्ठे,
तिष्ठत्यसंख्यफलसाधनहेतुराद्यः।
दुर्भाग्यतो नहि स मे खलु पक्षपाती,
जाड्यं लुनीहि कृपया मम देवि दुर्गे ! ॥१४॥

पुत्रे विवेकरहिते पतिते विपत्सु,
युक्तं प्रयोक्तुमिह ते करुणाकटाक्षम्।
माता कृपाजलनिधिर्विधुरो सुतः किम्,
जाड्यं लुनीहि कृपया मम देवि दुर्गे ! ॥१५॥

भ्रम्यन् सदेह-विषयौघमरीचिकायाम्,
क्लिष्टो मुधेत्यवगतो न ततो निवर्त्ते।
मातस्तवात्र करुणा भ्रमनाशकर्त्री,
जाड्यं लुनीहि कृपया मम देवि दुर्गे ! ॥१६॥

त्वत्सन्तोष-विधायिनो गुणगणान्नादाः पुरा मेऽधुना,
कस्मान्मां समुपेक्षसे किमनया शाठ्यं न ते भासते।
माता चेत् समुपेक्षिणी जगति नो स्थातुं सुतानां पदम्,
सर्वं मे विनिवेदितं जननि ते यद्रोचते तत्कुरु ॥१७॥

इति बालिश्यभञ्जनस्तोत्रं सम्पूर्णम्।

चतुर्धुरीणः श्रीकृष्णचन्द्र दास प्रहराज महापात्रस्य
काल्यावेढ़ा दुर्ग, जिला मेदिनीपुर, पोः गोपीवल्लभपुर।

---

## अज्ञानबोधिनी।

(पूर्वतोऽनुवृत्ता)

विनाशवत्त्व सुषुप्तेरभावादिति तथैवानुभवः। अत्र श्रुतिरपि "आत्मनो मनो जातम्" इति। तत्रैव विलीयते। अतो मनस्त्वञ्च भवसि इति

सिद्धम् । एवं इन्द्रियसम्भूतात्मकं सप्तदशकं लिङ्गशरीरं त्वन्न भवसीति सिद्धम् । भो भगवन् ! एतत् सप्तदशकं लिङ्गशरीरमहन्न भवामि । अनेन ज्ञानेन मम किं लाभो भविष्यति । अरे सावधानमतिः शृणु । यदा लिङ्गशरीरं त्वन्न भवसि तदा गमनागमने स्वर्गनरकादिभोगोऽपि तव नास्त्येव । जानुनि भग्ने पङ्गुरिव । शास्त्रमाह ।

"प्ररोहति क्वापि न धान्यवीजं दग्धं तथा ज्ञानमयानलेन ।
तत्कार्य्यकर्मगुणलिङ्गदेहे दग्धे समस्ते न पुनर्भवोऽस्ति" ॥

अपि च तथा लिङ्गशरीरनाशे गमनागमनं तव नास्त्येव । अपि च प्रारब्धफलभोगोऽपि तव नास्त्येव । भो भगवन् ! तत्कथम् ? इत्थं देहो भोगायतनं विषयजानि भोग्यानि, इन्द्रियाणि भोगसाधनानि बुद्धिर्भोक्त्री । भोगायतनं, भोग्यानि, भोगसाधनानि, भोक्त्री च एतच्चतुष्टयं त्वन्न भवसि ! तस्मादारब्धकर्मफलभोगस्तव नास्त्येव ।

भगवन् ! जाग्रत्स्वप्ने सुखदुःखमनुभवन् कथं सुखदुःखं मम नास्ति ? तत् शृणु । अरे शरीरगतचक्षुः शूलोदरवेदनादयः सुषुप्त्यवस्थामापन्नस्य बुद्धिरहितस्य तव न प्रतीयते । अतस्ते तव धर्मा न भवन्ति रोगस्यैव । त्वं वृथा स्वात्मनि मन्यसे । मूढो यथा जलस्थचन्द्रे कम्पादयः । यतः शास्त्रमाह "नह्वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वा वसन्तं न प्रियाप्रियौ स्पृशत" इति श्रुतिशाखा च, "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव" । अत्र भगवद्वचनम् ।

इच्छाद्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥

स्मृतिरपि ।

रागेच्छा-सुखदुःखादिबुद्धौ सत्यां प्रवर्त्तते ।
सुषुप्तौ नास्ति तन्नाशे तस्माद् बुद्धेस्तु नात्मनः ॥

अतस्ते अन्तःकरणधर्मा इत्यर्थः । इति श्रुतिस्मृतिगुरुतः स्वानु-

भवात् लिङ्गशरीरम् अहन्न भवामि। यदा ज्ञानं जातं तदा नाना-योनिषु भ्रमणं भ्रमः। त्वं गुणरहितो भवसि। स्वामिन्! ते च गुणाः के? तत् शृणु। बुद्धि-राग-प्रयत्न-द्वेष-संस्कार-धर्माधर्म-सुखदुःखेति। भो भगवन्! अन्तःकरणे बाह्यकरणे अपि अहमनुसन्धाता देहोऽहन्न भवामि। इन्द्रियाणि अहन्न भवामि। प्राणा अहन्न भवामि। मनो बुद्धिरहङ्कारश्चाहन्न भवामि। स तत्सर्वस्यानुसन्धाता मामहन्न जानामि इति भ्रमश्चित्तम्।

अतः कोऽहं देहीति निःसन्देहं भ्रान्तिनिरासं कुरु ममेति विज्ञापितः सन् गुरुरुपदिशति। तत्कथम् इत्थं किन्न जानासीति तव कारणशरीरमव्याकृतम् अज्ञानसंज्ञितमस्ति। तत्कथम्? इत्यम्। इदं सर्वं दृश्यं पृथक् पृथक् रूपं त्वं जानासि। आत्मानमेवन्न जानामि इति वदसि। एतदेव तवात्माज्ञानम्। इदमेव कारणशरीरम् अस्याश्रयस्त्वमेव। तत् कथम्? इत्थं त्वदन्यः कोऽपि न जानाति इति त्वमेव वदसि मामहन्न जानामीति। अतः तस्याऽज्ञानस्य त्वमेवा-श्रयः। अज्ञानं भ्रमं सत्यमसत्यं वेत्ति सः। अतस्त्वं जड़ो न भवसीति वेद्यवेत्तृत्वात्। अतस्त्वं ज्ञानम्। तस्याज्ञानस्याश्रयः किं ज्ञानं? तत् ज्ञानमपि त्वमेव। त्वयि स्थितमज्ञानं यतो जानासि। अतः तस्यापि पृथक् साक्षी च (?)। त्वया दृश्यमानं त्वन्न भवसि। स्थूलसूक्ष्मशरीरवत्। अतः कारणशरीराद्भिन्नस्त्वम्। एवमाश्रयविलक्षण-ज्ञानमात्रसाक्षिस्वरूपस्त्वमेव मां कोऽहमिति वदसि। अनवच्छिन्ना-खण्डदण्डायमानज्ञानस्वरूपो भवान् कोऽहमिति वदति। तन्निः-संशयं शृणु। इन्द्रियाणि स्वात्मानं स्वस्ववृत्तिं च न जानन्ति। परस्परमपि न जानन्ति। अतो जड़ानि। त्वं तु इन्द्रियाणि इन्द्रियवृत्तिं च सदा जानासि। मनः स्वात्मानं न जानाति। परस्पर-बुद्ध्यादिव्यापारं कर्त्तुं न समर्थम्। अतो जड़म्। त्वं तु मनो बुद्ध्या-दीनि सदा जानासि। अतस्तव स्वरूपं ज्ञानमेव। यथाराह्वोः शिरः।

शिर एव राहुः। तथा ज्ञानमेव त्वम्। तथा च श्रुतिः। "येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचां व्याकरोति। येन वा स्वाद्वस्वादु च विजानाति। तद्विज्ञानं ब्रह्म यो वेत्ति विश्वं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं पुराणम्। तस्य भासा सर्वमिदं विभाति"।

स्मृतिरपि।

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।

मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः॥

ज्ञानमात्रस्त्वमिति भावः।

अथ विधिमुखेन प्रतिबोधयति यतो ज्ञप्तिस्वरूपस्त्वम् अतस्तवाज्ञानं नास्ति। यथा सूर्यस्य तमः। अतस्तस्याज्ञानस्य निवर्त्तकं ज्ञानमपि तव नास्ति। ज्ञानस्वरूपत्वात्। यथा दीपस्यान्यदीपेच्छा नास्त्येव प्रकाशरूपत्वात्। तस्मादज्ञानज्ञाने मृषैव बन्धमोक्षावपि तव नस्तः। अतो नित्यमुक्त एव त्वं। यतः शास्त्रमाह।

अनात्मन्यात्मधीर्बन्धस्तन्नाशो मोक्ष उच्यते।

बन्धमोक्षौ न विद्येते नित्यमुक्तस्य चात्मनः॥

अतस्तव चिद्रूपसद्रूपत्वं प्रदर्शयति। चक्षुरादीनि करणान्यादित्याद्यनुगृहीतानि स्वस्वविषयेषु प्रवर्त्तन्ते। तत्र बुद्धिः करणव्यापारमनुभवति। त्वं तु चैतन्यो ज्वलितोभयात्मकः द्रष्टा दृश्याकारं विपरिणमते। जागरणं भवति। तस्य साक्षी त्वं चैतन्यो जाग्रत्संस्कारप्रत्ययवासना-वासितबुद्धिः पुष्पपुटिकावत् तत् स्वतः प्रभवति।

स्मृतिरपि।

अर्थाभावो यदज्ञानं प्रत्यक्षमिव दृश्यते।

गन्धर्वनगराराकारं स्वप्नं तदुपलक्षयेत्॥

चित्रपटवत् तस्य पृथक् भूतः। साक्षी त्वमेव जाग्रत्स्वप्नावस्थासर्वसंस्कारैः सह बुद्धिः आत्ममूलाऽविद्यायां लीना साऽविद्या

संस्कारमात्रावशिष्टात्मनि विश्राम्यति। निर्विकल्पानुभवा भूत्वा तिष्ठति इयं सुषुप्त्यवस्था। तथा च श्रुतिः। "न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति सुखरूपमेवेति यो वेत्ति तस्य सत्त्वं साक्षिस्वरूपम्"। एवं अवस्थात्रयभावाऽभावसाक्षि अनुस्यूतम् एव पृथग्भूतचैतन्यं त्वम्। अतः कालत्रयावस्थायो सर्वदा भावरूपस्त्व-मित्यर्थः। अन्यस्य सतोऽसत्त्वात्। अचलत्वं प्रदर्शयति जन्ममृत्यु-रहितः स्वयं जानासि स्वसत्ताः। स्वत एव प्रमाणं स्वसत्ताज्ञानाश्रयं विना न सम्भवति। यतोऽतः स्वसत्तानुभवसिद्धा अतस्तव स्वरूपं आनन्दरूपतां प्रदर्शयति। स्वविषयेषु व्यावृत्तानीन्द्रियाणि तानि श्रोत्रादीनि त्वयि सुखस्वरूपे विश्राम्यन्ति। तेन सुखसद्रूपं पुनः सुखस्वरूपात् उत्थितानि स्वव्यापारे समर्थानि भवन्तीत्यर्थः। पुट-सुगन्धवत् अतस्तव रूपमानन्दस्वरूपम्। अद्वितीयतां प्रदर्शयति। आब्रह्मादिपिपीलिकान्तमनुस्यूतम् अन्तर्यामिसाक्षी एक एव। अतस्तव स्वरूपमद्वितीयम्।

तथा च श्रुतिः।

"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्च" इति।

ननु साक्षी सप्रपञ्चः सद्वितीयः किन्न भवति? तत्र शृणु मृद्विकारेषु मृदिव सुवर्णविकारेषु सुवर्णमिव तन्तुकार्य्येषु तन्तुरिव चिद्विवर्त्तेश्चिदेव। रज्जुसर्पवत्। शुक्तिकारजतवत्। अतस्त्वम् अद्वितीयः। अखण्डत्वं प्रदर्शयति। विजातीय-सजातीय-स्वगतभेदरहितत्वात्। अखण्डस्त्वं एकरसः सैन्धवजलवत्। अजत्वं प्रदर्शयति। अनादित्वात् कारणरहितत्वात् त्वमजः। अक्रियत्वं प्रदर्शयति यथा भ्रामकसन्निधि-सत्तामात्रेण जड़मयं लोहं चेष्टते। तथाहङ्कार-ममकारेच्छाप्रयत्न-रहितस्य सच्चिदानन्दस्वरूपस्य। (क्रमशः)

# पतितपरावृत्तिः ।

दयालवः ! सकलं किल भारतं वर्षमाक्राम्यति महति दुर्भिक्षे प्रसरति च "कथं कारं निर्वाहयेम वत्सरं कथं च जीवेम" इति दीनजनाक्रन्दे, निसर्गक्रूरा अपि धर्मपरिभ्रंशाय कृपालुतामाविष्कुर्वन्तो यीशूभक्ताः प्रायेण हिन्दुकुमारानामिषैर्विप्रलोभ्यात्मीयधर्मदीक्षितान् विदधते। ते तु हिन्दुत्वभ्रंशमात्रेण कृतार्थैः ख्रीष्टीयैः परित्यक्ताः पुनर्हिन्दुर्भवितुकामा अपि सानुतापा अपि धार्मिकैरननुज्ञातास्त्रिशङ्कुभावमापन्ना विषीदन्ति। तदेतदालोच्य पतितानां तेषां परावृत्तिविषये निर्णयमिमं कर्त्तुं प्रवर्त्तामहे ।

नूनमयं ख्रिष्टीयानां निसर्गो यद्बलाद्वा धर्मोपदेशैर्वा परधर्मीयमात्मसात्कुर्वते मनुजं न चाप्येषामयं नवीनः पन्थाः। यद्योगीश्वरेण अष्टादशस्मृतिकारेषु निर्दिष्टेन देवलेनैतेषां धर्मे प्रविष्टानां समनुतप्तानां पुनः स्वधर्मं प्रविविक्षूणां कृते प्रायश्चित्तं निरदेशि ।

तथाच देवलस्मृतौ प्रायश्चित्तकाण्डे ।—

"अपेयं येन सम्पीतमभक्ष्यं वाऽपि भक्षितम् ।
म्लेच्छैर्नीतेन विप्रेण ह्यगम्या गमनं कृतम् ॥
अस्य शुद्धिं प्रवक्ष्यामि यावदेकं तु वत्सरम् ।
चान्द्रायनं तु विप्रस्य सपराकं प्रकीर्त्तितम् ॥
पराकमेकं क्षत्रः स्यात् पादकृच्छ्रेण संयुतम् ।
पराकार्धन्तु वैश्यस्य शूद्रस्य दिनपञ्चकम्" इति ॥ *

प्रायश्चित्तप्रदानात् प्राक् कर्त्तव्यं स आह तत्रैव यथा ।—

---

* । शास्त्रिणा तु तेषां प्रायश्चित्तमात्रं प्रतिपादितम् । न तु व्यवहार्यत्वमव्यवहार्यत्वमिति । यतः । "प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् । कामतो व्यवहार्यस्तु वचनादिह जायते" ॥ इति याज्ञवल्क्यवचने नञ् प्रश्लेषात् "नास्त्यार्यान् लोके प्रत्यासत्तिर्विद्यते कथञ्चन विहन्य" इत्यापस्तम्बस्मरणाच्च अव्यवहार्य्यतापि तेनाभिहिताव्यायते। विषयस्त्वेषोऽतीव गरीयान् क्षुद्रप्रबन्धेन निश्चेतुमयोग्यः। इति सम्पादकः ।

"नखलोमविहीनानां प्रायश्चित्तं प्रदापयेत्।
चतुर्णामपि वर्णानामन्यथाऽशुद्धिरस्ति हि" ॥ इति

न चात्र नोतपदेन म्लेच्छैर्हठात् स्वधर्मं प्रवेशितानामेव ग्रहण-मिति वाच्यम् बलान्नीतानां प्रायश्चित्तान्तरस्य तत्रैवोक्तेः। तथाहि विंशतितमां कारिकामारभ्य "बलान् म्लेच्छैस्तु योनीतस्तस्य शुद्धिस्तु कीदृशी?" इत्यादि।

ननु कियन्तं कालमेते प्रायश्चित्तमर्हन्ति किं संवत्सरमात्रम्? उताहो ततोप्यधिकमित्याशङ्कायामाह।

"ऊर्द्धं संवत्सरात्कल्प्यं प्रायश्चित्तं द्विजोत्तमाः।
संवत्सरैश्चतुर्भिस्तु तद्भावमधिगच्छति" ॥ इति

एवं च बलाद्विप्रलोभ्य वा परधर्मीयैः स्वधर्मं प्रवेशिता ब्राह्मणाः चत्रा वैश्याः शूद्रा वा आवत्सरचतुष्टयं प्रायश्चित्तमर्हन्ति। म्लेच्छत्वस्या-नधिगमात् तदधिगमाच्च चतुर्भ्यो वत्सरेभ्यः उत्तरं न शुध्येयुरिति संसिद्धम्। युक्तं चेदम् नह्यस्तमितेऽपि दिनकरे सपदि तमोमयता-मापद्यते भुवनम्। दृढ़तरश्चाजन्मनोऽनुशीलितस्य धर्मस्य संस्कारो न परधर्मप्रवेशमात्रेण विध्वंसमुपयाति गुरुतरसंसर्गस्यैव तत्-प्रयोजकत्वात्। अत एवैषां वत्सरचतुष्टयं प्रायश्चित्तार्हता, संसर्गा-धिक्ये च प्रायश्चित्ताधिक्यम् इति।

न च दिल्लीवल्लभजातीया लम्बकूर्चा अञ्जनप्रभा एव म्लेच्छपद-वाच्या न तु गौरकायाः ख्रीष्टीया इति वाच्यं। तेषामपि म्लेच्छलक्षणा-क्रान्तत्वात्। उक्तं च म्लेच्छलक्षणं बौधायनेन।

"गोमांसखादको यस्तु विरुद्धं बहु भाषते।
सर्वाचारविहीनो यो म्लेच्छ इत्यभिधीयत" ॥ इति

ख्रिष्टीयानां च भोजनेषु गोमांसपिण्डानां धर्मोपदेशेषु श्रुति-विरुद्ध बहुभाषितानां पत्रखण्डे परिमार्जनाद्याचारवैहीन्यस्य प्रत्य-चीकरणान्न म्लेच्छत्वाभावशङ्कापीति कृतं पल्लवितेन।

राशिवड़ेकरोपाह्वः श्रीअप्पाशास्त्री, कोह्लापुर।

## कालापव्याकरणे शर्ववर्मा ।

( पूर्व्वतोऽनुवृत्ता: )

एतावता पूर्वोक्तेन सन्दर्भेण संक्षेपत: शर्ववर्मणश्चरितं विवृतम् । नि:सन्दिग्धमेव तस्य पाण्डित्येन भगवान् कार्त्तिकेयोऽपीदं व्याजहार । "यत् मयोक्तं" "सिद्धो वर्णसमाम्नाय" इत्येवं सूत्रमाकर्ण्यैव मामवधी-रयन् "तत्र चतुर्दशादौ स्वरा" इति यत्त्वं त्वत्तोऽपि तस्मान्मच्छापा-दधुना त्वत्कृतं व्याकरणं स्वल्पतन्त्रं भविष्यति । अन्यथा यदि धृष्टतां न कुर्य्यास्तर्हि व्याकरणमेतत् पाणिनीयमतोपमर्दकं स्यात् । तथाच कथासरित्सागरे सप्तम तरङ्गे ।—

> "अथासौ भगवान् साक्षात् षड्भिराननपङ्कजै: ।
> सिद्धोवर्णसमाम्नाय" इति सूत्रमुदैरयत् ॥१०॥
> तच्छ्रुत्वैव मनुष्यत्वसुलभाच्चापलादहम् ।
> उत्तरं सूत्रमभ्यूह्य स्वयमेव मयोदितम् ॥११॥
> अथाब्रवीत्स देवो मां नावदिष्य: स्वयं यदि ।
> अभविष्यदिदं शास्त्रं पाणिनीयोपमर्दकम्" ॥१२॥
> अधुना स्वल्पतन्त्रत्वात् कातन्त्राख्यं भविष्यति ।
> मद्वाहनकलापस्य नाम्ना कालापकं तथा ॥

तथापि स्वबुद्धिमहिम्ना प्रातिपदिकसंज्ञाविधौ पाणिनीयं बहु-सूत्रं व्यर्थतामापाद्य "धातुविभक्तिवर्जमर्थवल्लिङ्गं" इत्येकेनैव सूत्रेण निर्वाह: कृत इति । एवमपादानसंज्ञाविधावपि "ध्रुवमपायेऽपा-दानम्" । "भीत्रार्थानां भयहेतु:" "आख्यातोपयोगे" "वारणार्थ-नाम्" "जुगुप्साविरामेत्यादि" "जनिकर्त्तु: प्रकृति:" "भुव: प्रभव:" इत्येवं सप्तसूत्रीविषये एकमेव "यतोऽपैति भयमादत्ते वा तदपादानं" इति सूत्रं विरचय्य पाराकाष्ठामदर्शयद्बुद्धे: शर्ववर्मा ।

एवं बहुषु स्थानेषु पाणिने: सूत्रबाहुल्यापेक्षया शर्ववर्मा स्वल्पेन सूत्रेण तावतो विषयान् समकलयत् ।

परन्तु प्रचुरसूत्रकृतो पाणिनेर्वार्त्तिकादिभिरिव शर्ववर्मणोऽपि दुर्गसिंहेन वक्तव्यजातेन तस्य तस्य सूत्रस्याविषयीभूतान् प्रयोगान् संगृह्य परिपूर्णत्वमापादितम्।

अपिच। शर्ववर्मा क्षत्रियचिह्नेनोपाधिना वर्मपदेनालङ्कृतत्वादनेके क्षत्रियोऽसाविति सिद्धान्तयन्ति। तत्तु नास्माकं सम्यक् प्रतिभाति। चेदेवमेव सिद्धान्तस्तर्हि दिलीपादयः धृतराष्ट्रादयश्च नृपतयः केऽपि न क्षत्रिया भवितुमर्हन्ति। यतो न क्वापि रामायणादौ महाभारतादौ च तेषां नामसु वर्मेति परिचयो दृश्यते श्लोकेषु।

एवं वर्मपदप्रयोगादक्षत्रियोऽपि राक्षसो "भूतिवर्मा" क्षत्रियो भवितुमर्हति। तथाच कथासरित्सागरे सप्तम तरङ्गे।

"राक्षसो भूतिवर्माख्यो दिव्यदृष्टिः सखास्ति मे" ॥२१॥

एवं चन्द्रगुप्तस्यापि गुप्तपदप्रयोगात् वैश्यत्वं दिवोदासस्य कालिदासस्यापि दासपदप्रयोगात् शूद्रत्वमापद्येत।

सुतरामेतावानेवात्र सिद्धान्तो जागर्त्ति—यदा यः कश्चित् केनचित् "किन्नामधेयो भवानिति" पृष्टः। तदुत्तरे सः

शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य च।

गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः" इति॥

शास्त्रमेतदनुसृत्य ब्राह्मणादिपरिचायकं शर्मवर्मादिकं प्रयोज्य शर्ववर्मशर्माहं चन्द्रगुप्तवर्माहमित्येवं कथयेत्। अन्यथा इतिहास प्रबन्धेऽपि यदि स एव नियमो बलवान् स्यात् तर्हि महाभारतादौ व्यासादीनां शर्मपदेन धृतराष्ट्रादीनां वर्मपदेन कोटिशः प्रयुक्तेन किमिवाश्चर्यतरं न स्यात्।

अपिच। पुरा मन्त्रित्वमाचार्यत्वञ्च प्रायो ब्राह्मणस्यैव शास्त्रे प्रतिपादितम्।

सर्वेषान्तु विशिष्टेन ब्राह्मणेन विपश्चिता।

मन्त्रयेत् परमं मन्त्रं राजा षड्गुणसंयुतम् ॥मनु।७।५८॥

शर्व्ववर्म्मणस्तु आचार्य्यत्वं स्वतः प्रसिद्धम्। मन्त्रित्वमप्यस्य शर्व्ववर्म्मणः सातवाहन भूपतेः प्रसिद्धं यथा कथासरित्सागरे षष्ठतरङ्गे।

"स्वास्थानस्थितमद्राक्षं राजानं सातवाहनम्।
शर्व्ववर्म्मप्रभृतिभिर्म्मन्त्रिभिः परिवारितम्" ॥६६॥

अतएव शर्व्ववर्म्माचार्य्यो ब्राह्मण एव। नात्र संशयः कार्य्य इति।

अनेके शर्व्ववर्म्मणः शिष्यं सातवाहनराजं "शालिवाहनेति" कथयन्ति। का कथा अपरेषां कलापचन्द्रप्रणेत्रा सुसेनाचार्य्येणापि सन्धौ नमस्कारपादे भाषितमेवं यथा "पुरा किल श्रीशालिवाहनाभिधानं वसुधाधिपं झटिति व्युत्पादयितुं प्रतिश्रुतवता शर्व्ववर्म्माचार्य्येण कुमाराभिधानो भगवान् भवानीसुतः समाराधितः। स च तदाराधनाधीनतामुपगतो निजव्याकरणज्ञानमाविर्भावयितं पद्यपादरूपं सूत्रमिदमादिदेश"।

एवं कथासरित्सागरोक्तेतिवृत्तमवलम्ब्य जनश्रुतिमूलकं पद्यमप्येकं लिखितं यथा।—

"राजा कश्चिन्महिष्या सह सलिलगतः खेलयन् पाणितोयैः
सिञ्चन्तद्राज्ञतोऽसावतिसलिलतया मोदकं देहि देव।
मूर्खत्वात्तन्नबुद्धा स्वरघटितपदं मोदकस्तेनदत्तो
राज्ञी प्राज्ञी ततः सा नृपतिमपि पतिं मूर्खमेनं जगर्ह" ॥
भार्य्याया भाषितञ्चैव निशम्य शालिवाहनः।
सर्व्वं निवेदयामास गुरवे शर्व्ववर्म्मणे" ॥

( इति कलापचन्द्रे सुसेनः )

अत्र "सातवाहन" स्थाने यत् शालिवाहनेत्युक्तं दृश्यते तत्तु लिपि प्रमादाद्वा सुसेनाचार्य्येण कथासरित्सागर ग्रन्थस्यादर्शनाद्वेत्यनुमिनुमः।

शर्व्ववर्म्मणस्तु दाक्षिणात्ये प्रतिष्ठान नगराधीने वककच्छनाम्नि ग्रामे वास आसीत्—यथा च कथासरित्सागरे षष्ठतरङ्गे।९६६।

राज हि :........निचयैरथ शर्ववर्मा
तेनार्चितो गुरुरिति प्रणतेन राज्ञा।
स्वामीकृतश्च विषये वककच्छनाम्नि
कूलोपकण्ठविनिवेशिनि नर्मदायाः" ॥ इति।

(क्रमशः)

---

## धर्मविवेकः।

(आश्विनमासादनु)

अनिन्द्यं भक्षयेदित्थं वाग्यतोऽन्नमकुत्सयन्।
पञ्चग्रासान्महामौनं प्राणाद्याप्यायनाय च ॥ ८५ ॥
भुक्त्वा सम्यगथाचम्य प्राङ्मुखोदङ्मुखोऽपि वा।
यथावत् पुनराचामेत् पाणी प्रक्षाल्य मूलतः ॥ ८६ ॥
सुस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः।
अभीष्टदेवतानान्तु कुर्वीत स्मरणं नरः ॥ ८७ ॥
अग्निराप्याययत्वन्नं पार्थिवं पवनेरितः।
दत्तावकाशं नभसा जरयत्वस्तु मे सुखम् ॥ ८८ ॥
अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च।
भवत्येतत् परिणतौ ममास्त्वव्याहतं सुखम् ॥ ८९ ॥
प्राणापानसमानानामुदानव्यानयोस्तथा।
अन्नं पुष्टिकरञ्चास्तु ममास्त्वव्याहतं सुखम् ॥ ९० ॥
अगस्तिरग्निर्वडवानलश्च भुक्तं मयान्नं जरयत्वशेषम्।
सुखञ्च मे तत्परिणामसम्भवं यच्छत्वरोगो मम चास्तु देहे ॥ ९१ ॥
विष्णुः समस्तेन्द्रियदेहदेही प्रधानभूतो भगवान् यथैकः।
सत्येन तेनान्नमशेषमेतत् आरोग्यदं मे परिणाममेतु ॥ ९२ ॥
विष्णुरत्ता तथैवान्नं परिणामश्च वै यथा।
सत्येन तेन वै भुक्तं जीर्यत्वन्नमिदं तथा ॥ ९३ ॥

इत्युच्चार्य्य स्वहस्तेन परिमृश्य तथोदरम् ।
अनायासप्रदायीनि कुर्य्यात् कर्म्माण्यतन्द्रितः ॥ ८४ ॥
सच्छास्त्रादिविनोदेन सन्मार्गाद्यविरोधिना ।
दिनं नयेत् ततः सन्ध्यामुपतिष्ठेत् समाहितः ॥ ८५ ॥
दिनान्तसन्ध्यां सूर्य्येण पूर्वामृक्षैर्युतां बुधः ।
उपतिष्ठेद् यथान्यायं सम्यगाचम्य पार्थिव ॥ ८६ ॥
सर्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥ ८७ ॥
सूर्य्येणाभ्युदितो यश्च त्यक्तः सूर्य्येण च स्वपन् ।
अन्यत्रातुरभावात् तु प्रायश्चित्ती भवेन्नरः ॥ ८८ ॥
तस्मादनुदिते सूर्य्ये समुत्थाय महीपते ।
उपतिष्ठेन्नरः सन्ध्यामस्वपंश्च दिनान्तजाम् ॥ ८९ ॥
उपतिष्ठन्ति ये सन्ध्यां न पूर्वां न च पश्चिमां ।
व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृप ॥ १०० ॥
पुनःपाकमुपादाय सायमप्यवनीपते ।
वैश्वदेवनिमित्तं वै पत्न्यामन्त्रं बलिं हरेत् ॥ १०१ ॥
तत्रापि श्वपचादिभ्यस्तथैवान्नापवर्जनम् ।
अतिथिञ्चागतं तत्र स्वशक्त्या पूजयेद् बुधः ॥ ९२ ॥
पादशौचासनप्रह्वस्वागतोक्त्या च पूजनम् ।
ततश्चान्नप्रदानेन शयनेन च पार्थिव ॥ १०३ ॥
दिवातिथौ तु विमुखे गते यत् पातकं नृप ।
तदेवाष्टगुणं पुंसां सूर्य्योढ़े विमुखे गते ॥ १०४ ॥
तस्मात् स्वशक्त्या राजेन्द्र सूर्य्योढ़मतिथिं नरः ।
पूजयेत् पूजिते तस्मिन् पूजिताः सर्वदेवताः ॥ १०५ ॥
अन्नशाकाम्बुदानेन स्वशक्त्या प्रीणयेत् पुमान् ।
शयनप्रस्तरमहीप्रदानैरथवापि तम् ॥ १०६ ॥

कृतपादादिशौचश्च भुक्त्वा सायं ततो गृही।
गच्छेदस्फुटितां शय्यामपि दारुमयीं नृप ॥ १०७ ॥
नाविशालां न वा भग्नां नासमां मलिनां न च।
न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम् ॥ १०८ ॥
प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप।
सदैव स्वपतः पुंसो विपरीतन्तु रोगदम् ॥१०९ ॥
ऋतावुपगमः शस्तः स्वपत्न्या मवनीपते।
पुन्नामर्क्षे शुभे काले ज्येष्ठयुग्मासु रात्रिषु ॥११०॥
नास्नातान्तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम्।
नानिष्टां न प्रकुपितां नाप्रशस्तां न गर्भिणीम् ॥१११॥
नादक्षिणां नान्यकामां नाकामां नान्ययोषितम्।
क्षुत्क्षामामतिभुक्तां वा स्वयञ्चैभिर्गुणैर्युतः ॥११२॥
स्नातः स्रग्गन्धधृक् प्रीतो न ध्मातः क्षुधितोऽपि वा।
सकामः सानुरागश्च व्यवायं पुरुषो व्रजेत् ॥११३॥
चतुर्दश्यष्टमी चैव अमावस्याथ पूर्णिमा।
पर्वाण्येतानि राजेन्द्र! रविसंक्रान्तिरेव च ॥११४॥
तैलस्त्रीमांससम्भोगी पर्वस्वेतेषु वै पुमान्।
विण्मूत्रभोजनं नाम प्रयाति नरकं नृप ॥११५॥
अशेषपर्वस्वेतेषु तस्मात् संयमिभिर्बुधैः।
भाव्यं सच्छास्त्रदेवेज्याध्यानजप्यपरैर्नरैः ॥११६॥
नान्ययोनावयोनौ वा नोपयुक्तौषधस्तथा।
देवद्विजगुरूणाञ्च व्यवायी नाश्रमे भवेत् ॥११७॥
चैत्यचत्वरतीर्थेषु गोष्ठे नैव चतुष्पथे।
नैव श्मशानोपवनसलिलेषु महीपते ॥११८॥
प्रोक्तपर्वस्वशेषेषु नैव भूपालसन्ध्ययोः।
गच्छेद्व्यवायं मतिमान्नमूत्रोच्चारपीड़ितः ॥११९॥

पर्वस्वभिगमोऽधन्यो दिवा पापप्रदो नृप ।
भूवि रोगावहो नृणामप्रशस्तो जलाशये ॥१२०॥
परदारान्न गच्छेच्च मनसापि कदाचन ।
किमु वाचास्थिबन्धोऽपि नास्ति तेषु व्यवायिनाम ॥ १२१ ॥
मृतो नरकमभ्येति हीयतेऽत्रापि चायुषः ।
परदाररतिः पूंसामुभयत्रापि भीतिदा ॥ १२२ ॥
इति मत्वा स्वदारेषु ऋतुमत्सु नरो व्रजेत् ।
यथोक्तदोषहीनेषु सकामेष्वनृतावपि ॥ १२३ ॥

इति श्रीविष्णुपूराणे तृतीयोऽंशे गृहस्थधर्म्मो
नाम एकादशाध्यायः ।

(क्रमशः)

---

## व्याकरणम् ।

(पूर्वप्रकाशितात्परम्)

## PARTS OF SPEECH.

| | | | |
|---|---|---|---|
| Noun | विशेष्यम् | Conjunction | संयोगवाचकम् अव्ययम् |
| Adjective | विशेषणम् | Interjection | सम्बोधनवाचकम् अव्ययम् |
| Verb | क्रिया | Indeclinable | अव्ययम् |
| Adverb | विशेषणीयविशेषणम्, क्रियाविशेषणम् | Pronoun | सर्वनाम |
| Preposition | कर्म्मप्रवचनीयम्, उपसर्गः | Numeral | संख्यावाचकशब्दः |

# PARTS OF THE BODY.

| English | Sanskrit |
|---|---|
| Hair | केशः कचः |
| Curls | कुन्तलः |
| locks of hair | केशपाशः, केशहस्तः |
| Ear | कर्णः |
| Eye | चक्षुः, नेत्रं, नयनम्, लोचनं |
| knee, elbow | कुर्परः |
| Nose | नासा, नासिका |
| Tongue | जिह्वा |
| Skin | त्वक् |
| Cheek | कपोलः |
| Head | शिरः, मस्तकः |
| Forehead | ललाटः |
| Leg | जङ्घा |
| Entrails | अन्त्रिः |
| Tooth | दन्तः |
| The thumb, the great toe | अङ्गुष्ठः |
| The little finger | कनिष्ठिका |
| The fore finger | तर्जनी |
| The middle finger | मध्यमा |
| Eye-brow | भ्रूः |
| Beards | मुखकेशः, श्मश्रु |
| Mustaches | उत्तरमुखकेशः |
| Finger | अङ्गुली |
| Arm | बाहुः |
| Hand | करः, हस्तः, पाणिः |
| The palm of the hand | पाणितलम् |
| Breast | वक्षः, उरः |
| Back | पृष्ठम् |
| Foot | पादः |
| Navel | नाभिः |
| The cavity of the navel | नाभ्यावर्त्तः |
| Mouth | वक्त्रम्, मुखम् |
| Countenance | आननं |
| Lip | ओष्ठः |
| Lower lip | अधरः |
| Nails | नखः |
| Ear-hole | कर्णरन्ध्रम् |
| Pupil of the eye | कनीनिका |
| Right hand | दक्षिणहस्तः |
| Left hand | वामहस्तः |
| Neck | शिरोधरः |

# NAMES OF BEASTS AND OTHER ANIMALS.

| | | | |
|---|---|---|---|
| Lion | सिंह | Ass | गर्दभः |
| Tiger | व्याघ्रः | Horse | अश्वः, वाजी |
| Jackal | शृगालः | Bear | भल्लूकः |
| Elephant | करी, वारणः | Boar | वराहः, शूकरः |
| Cow | गौः | | |
| Bull | वृषभः | Rhinoceros | गण्डकः |
| Camel | उष्ट्रः | Goat | अजः, छागः |
| Ram | मेषः | Bull calf | गोवत्सः |
| Deer | हरिणः, मृगः | Elephant calf | करिकलभः |
| Monkey | वानरः, कपिः | Bear calf | भल्लूकयुवा |
| Dog | कुक्कुरः, सारमेयः | Buffalo | महिषः |
| Cat | मार्जारः | Tortoise | कच्छपः, कूर्मः |
| Rat | मूषिकः | Hare | शशः |
| Mole | छुछुन्दरः | Otter | जलाखुः |
| Snake | सर्पः, व्यालः | Frog | दर्दुरः |

# NAMES OF BIRDS.

| | | | |
|---|---|---|---|
| शुकः | parrot | चक्राङ्गः, चक्रवाकः | barnacle goose |
| वयः, वायसः | crow | मयूरः, नीलकण्ठः | peacock |
| कपोतः, पारावतः | pigeon | चटकः, कलविङ्कः | sparrow |
| कुक्कुटः | cock | गृध्रः | vulture |

| | | | |
|---|---|---|---|
| श्येनः | hawk, falcon | बलाका: / बलाकिका | small spcies of crane |
| तित्तिरिः | partridge | बकः | heron |
| हंसः | duck | सारसः | crane |
| मरालः | swan | | |
| मत्स्यरङ्कः | (king-fisher) | | |

## NAMES OF FISHES AND OTHER WATER ANIMALS.

| | | | |
|---|---|---|---|
| शम्बूकः | snail | जलूका | leech |
| कुम्भीरः | crocodile | जलाखुः | otter |
| कूर्म्मः, | tortoise | अप्सराः | nymph |
| कुलीरः, कुलीरकः | crab | | |

## NAMES OF ARTS AND SCIENCES.

| | | | |
|---|---|---|---|
| साहित्यम् | literature | धर्म्मशास्त्रम् or स्मृतिः | law |
| गणितम् | mathematics | राजनीतिः | politics |
| पाटीगणितम् | arithmetic | इतिहासः | history |
| वीजगणितम् | algebra | काव्यम् | poetry |
| क्षेत्रमाणम् | geometry | व्याकरणम् | grammar |
| शब्दतत्त्वम् | philology | कोषः | lexicon |
| दर्शनम् | philosophy | ज्योतिषं | astrology, astronomy |
| नीतिशास्त्रम् | ethics | | |

## WRITING MATFRIALS.

| | |
|---|---|
| लेखनी, लेखन: | pen |
| मसी | ink |
| मसीपात्रम् | inkstand |
| लेख:, लेखपत्रम् | letter |
| लेखहारक: | letter bearer |
| लेखक: | writer |

---

## HOUSEHOLD WORDS.

| | |
|---|---|
| कर्त्तरिका | knife, small sword |
| कर्त्तनी | scissors |
| खणित्रं (खन्ता) | shovel |
| परशु: | axe |
| कीलक: (खिल) | bolt |
| अर्गल: (') (हुड़्को) | bar |
| द्वारं | door |
| पश्चद्वारं | backdoor |
| वातायनं | window |
| प्रासादपृष्ठं | palace-terrace |
| वर्त्ति: (पल्ते) | wick |
| तैलिक: | oilman |
| रजक: | washerman |
| शिल्पकार: | artisan |
| लाङ्गलं | plough |
| औषधं | medicine |
| लवणं | salt |
| कज्जलं, अञ्जनं (काजल) | collyrium |
| सूपकार: | cook |
| भृत्य: | servant |
| पुस्तकं | book |
| आस्तरणं | bed |
| उपाधानं | pillow |
| आतपत्रं | umbrella |
| नापित: | barber |
| रन्धनस्थाली | cooking vessel |
| भृङ्गारं | tumbler |
| पेटिका (पेटरा) | chest |
| खट्टा | bed-stead |
| कुटुम्बं, कुटुम्बकं | family-members |
| आत्मीय: | relative |
| खटिका (खड़ि), कठिनी | chalk |
| सोपानं | stair-case |
| कुटीरं | hut |
| गृहिणी | housewife |
| रश्मि | rope |
| दर्वी (डाता) | ladle |

| | |
|---|---|
| कटाहः (कड़ाइ) frying-pan | मगधा (लङ्कामरिच) long pepper (at first imported from मगध) |
| सन्दंशः (चिमटा साड़ासि) tongs | |
| सूचिः needle | |
| सूत्रं (सूता) thread | दण्डपाशिकः village constable, a police officer |
| चुल्ली hearth | |

# CHAPTER II.

## ORDER OF WORDS. CONSTRUCTION OF VERY EASY SENTENCES.

A sentence (वाक्यम्) is the expression in words of a complete thought.

Every sentence must have a nominative (कर्त्ता) and a verb (क्रिया); as रामोगच्छति (Ram goes), शिशुश्चन्द्रं पश्यति

श्रीउपेन्द्रनाथरायः—वरिशाल रायेरकाठी।

(क्रमशः)

## "सिद्धान्तवागीश" इत्युपाधिफलकाः

प्रश्नाः।

यैः खलिच्छद्भिः शास्त्रविद्भिर्निम्नलिखितप्रश्नेषूत्तरिष्यन्ति ते त्रिवार्षिक चन्द्रिकया सार्द्धं "सिद्धान्तवागीश" इपाधिं लप्स्यन्ते। यदि तेषामुत्तरपत्राणि सौरफाल्गुनप्रथमसप्ताहे अत्रोपतिष्ठन्ते नान्यथा इति।

प्रष्टैषां संस्कृतचन्द्रिकासम्पादकः श्रीजयचन्द्रसिद्धान्तभूषणः। परीक्षका एषाम् एकः पाणिनीयः श्रेष्ठतमः श्रीवेणीमाधवशास्त्री द्वौ च कालापौ, श्रीनवचन्द्रशिरोमणिः श्रीभुवनेश्वरविद्यालङ्कारश्च। त्रय एव पटिष्ठाः। एषां पुनर्मतद्वैधे गोभिलगृह्यसूत्र-वैशेषिकादिभाष्य-महाकाव्येन्द्रवंश-सतीपरिणय-कातन्त्रच्छन्दःप्रक्रियादिरचयिता भारत-राजधानी-कलिकाताराजकीयविद्यालयप्रधानाध्यापकः महामहो-

पाध्याय श्रीश्रीयुक्तचन्द्रकान्ततर्कालङ्कारो माध्यस्थ्यमाश्रित्य परीक्षि-ष्यति तारतम्यं सदसत्त्वञ्च।

१म प्रश्नः। २६०२। सिध्यतेरपारलौकिके। ६। १। ४९।
इति पाणिनिः। अस्य सूत्रस्यैतदेव तात्पर्य्यं यत् अपारलौकिके
ऽर्थे सिध्यतेरात्वं स्यात् पारलौकिके सिध्यतेरात्वं न स्यात्। यत-
स्तपो हि परलोके फलमभ्युदयलक्षणं प्रयच्छत् पारलौकिकं भव-
तीति सेधयति तापसं तप इति प्रत्युदाहृतम्।

अथ माभवतु सिध्यतिना दैवादिकेन तपस्तापसं साधयति।
किन्तु सौवादिकेन "राधसाधसंसिद्धौ" इति साध्नोतिना तपस्तापसं
साधयतीति प्रयोगः कथं न भवेत्?।

क। किञ्च यदपि अपारलौकिके सेधयतीति प्रयोगनिवृत्त्यर्थं
सिध्यतेरपारलौकिक इति वचनमुक्तं तदप्यसङ्गतम्। कथमिति?
सिधुगत्यामित्यनेन धातूनामनेकार्थत्वादन्नं सेधयति ग्रामं सेधयतीति
प्रयोगः केन वार्य्यते?। यतः सिध्यतेरिति श्यना निर्देशात् दैवा-
दिकस्यैव प्रयोगो माभूत्। भौवादिकस्य को निवारयिता। न
चात एव वचनादिति युज्यते वक्तुम्। इह दैवादिकस्य परिग्रहे भौवा-
दिकस्य निषेद्धुमशक्यत्वात्। अन्यथा साधारण्येनैवात्वमुक्तं स्यात्।

सुतरामुभयथैव सिध्यतेरपारलौकिक इति वचनं व्यर्थतामाप-
द्यते। अतोऽस्य शास्त्रेण युक्त्या च सार्थक्यमापाद्यताम्। इति।

२य प्रश्नः। २५८१। लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने।
७। ३। ३९। इति पाणिनिः। अथ विपूर्वो लीङ् श्लेषणे ततो
भावे क्तस्य क्तप्रत्ययस्य (३०१८) ल्वादिभ्यः ८।२।४४। इति नत्वे
नामणिजन्ताच्च पुनर्हेत्वर्थविवक्षायां णिचि विलीनयतीति सिध्यति।
एवं विलालयतीति लल ईप्सायां चुरादिणिजन्तात् पुनर्हेत्वर्थे णिचि
भविष्यति। लीधातोस्तु घृतं विलाययति। लाधातोस्तु घृतं
विलापयतीति सिध्यति। उपसर्गेण धात्वर्थो बलादन्यत्र नीयते

इत्यर्थोऽपि न भिद्यते। अतो नीलोर्नुग्लुकाविति सूत्रं व्यर्थता-मापद्यते। अतः सुष्ठु विचार्य्य तस्य सार्थक्यमापाद्यताम्।

क। ननु च यद्येवं ब्रूषे सूत्रानुक्तौ अर्थानियमादर्थान्तरेऽपि कथन्न भवति। अयो विलीनयति अयो विलालयतीति। तर्हि सूत्रोक्ति-पक्षेऽपि कथं प्रकृत्यन्तरेण(नामनिजन्तेन, ललधातुना च) न भवति? लीलोर्वचनादिति। चेन्न व्यावृत्तेरुपात्तप्रकृतिविषयत्वेन प्रकृत्यन्तरप्र-योगस्य निषेद्धुमशक्यत्वात्। अथानभिधानादिति यदि ब्रूयाश्चेदिहापि लीलोरिति वचनानुक्तिपक्षे तदेवानभिधानमस्तु किमतिदूरगमनेनेति।

२य प्रश्नः। २१५८। "स्वरितञितः कर्त्रभिप्राये क्रियाफले।" १।३।७२॥२५६४। णिचश्च १।३।७४। इति पाणिनिः। अनयोस्तु फलितार्थः फलवत्कर्त्तर्य्यात्मनेपदम्। अफलवत् कर्त्तरि परस्मैपदमिति। यद्येवं, वृक्षं परिवारयन्ते कण्टकाः। शोषयते व्रीहीन् आतपः। गुरुर्मान-वकं धर्मं ब्रूते। सूर्य्यो मरीचीन् वितनुते। अत्राफलवति कर्त्तरि आत्मनेपदं भवेन्न वा?। अत्र वृक्षावरणफलं कण्टकाः व्रीहि शोषणफलम् आतपाः धर्मोपदेशफलं गुरुः रश्मिप्रसारफलञ्च सूर्य्यादयो न लभन्ते अपितु जना एव। यद्यत्रात्मनेपदं न भवेदिति ब्रूषे तर्हि "तव दर्शनं किं न धत्ते" "लक्ष्मीमाकर्ष्टुकामा इव कमलवनोद्घाटनं कुर्वते ये" इत्यादौ महाकविप्रयोगे का गतिः?

एवं स्वंकटं कारयति। स्वमङ्गं कण्डूयति। स्वं पुत्रमपवदति। स्वमश्वं जानाति। "तनोति शुभ्रं गुणसम्पदा यशः।" इत्यादौ फल-वत्कर्त्तरि कथं वा परस्मैपदं?। यद्युभयथैव व्यभिचारस्तर्हि स्वरितेति सूत्रस्य वा किं फलमिति सुष्ठु विविच्य सिद्धान्तयन्तु।

---

श्रीश्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्माणि कारयन्ती शवानिव ।

मायाबलम्भते सेयमम्बा श्रीत्रिपुरसुन्दरी॥

## मासावतरणिका ।

मुमूर्षुरिव शीतोऽयं निःश्वसित्येकतोऽन्यतः ।

उदेति चण्डो मार्त्तण्डः फाल्गुने द्विगुणाम्बदे ॥

## उद्भटश्लोकाः ।

एकं ध्याननिमीलान्मुकुलितप्रायं द्वितीयं पुनः

पार्वत्या वदनाम्बुजस्तनभरे सम्भोगभावालसम् ।

अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं-

शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ २८७ ॥

द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभावः ।

तत् पुरुष ! कर्म्म धारय येनाहं स्यां बहुव्रीहिः ॥ २८८ ॥ *

भिक्षो ! मांसनिषेवनं प्रकुरुषे किन्तेन मद्यं विना,

मद्यञ्चापि तव प्रियं ? प्रियमहो वाराङ्गनाभिः सह ।

वेश्याप्यर्थरुचिः कुतस्तवधनं द्यूतेन चौर्य्येण वा

चौर्य्यद्यूतपरोऽपि संप्रति भवान् ? नष्टस्य कान्या गतिः ॥२८९॥

श्रीकालीकृष्णविद्याविनोदस्य ।

सोनार गाँ, कृष्णपुरा, ढाका ।

---

* मध्याह्नसमये आस्थानस्थितेन केनचिद्राज्ञा कवित्वं प्रकटयन् कश्चित् प्राज्ञः समासेन कथयेतित्युक्तः कश्चित् हृतबुद्धिः राज्ञोक्तं संक्षेपवाचकं समासेति पदं द्वन्द्वादिसमासार्थे योजयन्नाह द्वन्द्वेति । समासार्थस्तु सुगमः । अस्य द्विशेषणीभूतार्थे त्वयमर्थः—द्वन्द्वः सस्त्रीकः । द्विगुः द्वौ गावौ यस्य सः । अव्ययीभावः दैन्यात्तण्डुलादिक्रये व्ययो नास्ति । हे पुरुष ! तत्कर्म्म धारय निर्द्धारय । येन कर्म्मणाहं बहुव्रीहिः बहुधान्यकः स्याम् । तेन कविकर्म्मो योगिनो भूमिदौःस्थतामिति व्यज्यते इति ।

# दशावतारस्तोत्रम् ।

आम्नायमोषक-पलाश-विनाशकस्य
पुच्छाग्रचालनवशात्तव दीव्यमीन ! ।
वारां निधेर्गगणसङ्गतशुक्तिजौघं
तारा-कदम्बमिति मुग्धजना वदन्ति ॥ १ ॥

इन्दिराप्तिविषये कमठेश !
मन्दरागपरिपूरित चेताः ।
मन्दरागभरणाभरणो ह-
मन्दिरे प्रविश सुन्दर रूपः ॥ २ ॥

भूदार ! कृतभूदार ! सदा रक्षोविदारक ।
उदार शीतलहृदा मुदा रक्षादरेण माम् ॥ ३ ॥

गिरीश्वरशिरोऽश्चितो हित-गजाधिकारिष्टकृत्, (१)
विभूति-विशदो वने कृतमतिः सटाभासुरः ।
मुदा स दयया हृदा दिशतु मे सदा सम्पदम्,
द्विजाधिपविराजितो (२) झटिति दिव्यपञ्चाननः ॥ ४ ॥

कुदानतो दानवलोकनाथः स्वधःक्षितिं प्रापयतो नु रूपम् ।
कुदानमादाय च वामनोऽपि लोकत्रयेऽवर्द्धत चित्रमेतत् ॥ ५ ॥

मन्ये भार्गववंश्यो रामो रामान्तु भार्गवीं न गतः ।
ऐककुलोद्भवयोर्भुवि परिणीतिर्नीतिदूरेति ॥ ६ ॥

सगुणशिवधर्मपाता (१) रामः सगुणं बभञ्ज शिव धर्मम् । (२)
एतत् कुरुते चित्रं सहृदयहृदये वसिष्ठ-शिष्योऽपि ॥ ७ ॥

---

४। अत्र नरहरि शिव सिंहार्थाः । 'हित' इत्यत्र 'वने' इत्यत्र च अकारप्रश्लेषः । अत्र गजेन्द्राधिकप्रियकृत् । गिरीश्वर-गज-विभूति-द्विजपदान्यनेकार्थानि ।

५। अत्र कुदान स्वधःक्षिति-पदे द्व्यर्थके ॥ ७ ॥ (१) श्रेष्ठमङ्गलधर्मपाता

पुरुषोत्तमाग्रगण्य ! (१) स्वच्छात्मा (२) प्रबलभद्र दानाढ्यः। (३)
श्रेयः कुरुष्व रामो वेङ्कटगुरु (४) रुचकैः सदा नस्त्वम् ॥ ८ ॥
विततानन्दद (१) मधुना कलितव्यालं (२) विनायकं सोऽहम्।
क्षतमारप्रसरं ( ३ ) त्वामशरणशरणं श्रये शरणम् ॥ ८ ॥
गुरुतरगुरुवरकरुणा परिणधिपणोऽहमद्य तव कल्के !
अशरणानुजध्वजनुतिं शरणार्थीयन्तनोमि नो चित्रम् ॥ १० ॥

श्रीदामरचितवेङ्कटरायः।
बोब्बिलि। पालरिरु, तैलङ्ग।

---

# अज्ञानबोधिनी।

( पूर्वतोऽनुवृत्ताः )

तव सत्तासन्निधिमात्रेण देहेन्द्रियप्राणमनोबुद्धिसकाशात् सदसत् क्रिया उत्पद्यते। अतस्तव रूपमक्रियं तथाच—

आत्मचैतन्यमाश्रित्य देहेन्द्रियमनोधियः।
स्वकीयार्थेषु वर्त्तन्ते सूर्य्यालोकं यथा जनाः॥

---

सगुणं सत्त्वं शिवस्यधर्मं धनुः (?) ॥ ८ ॥ (१) श्रीकृष्णाग्रगण्यः। (२) धवलदेह-कान्तिः। (४) वेङ्कटगुरुः पापकर्षणसमर्थः। गुरुपक्षे—(१) श्रेष्ठपुरुषाग्रगण्य ! (२) निर्म्मलात्मतत्त्वः (३) अधिकमङ्गलदानयुक्तः। रामः सुन्दरः ॥ ८ ॥ विनायकं बुद्धं विष्णुं गणेशं गरुड़ञ्चेत्यर्थचतुष्टयम्। (१) भक्तजनानन्दप्रदम्। (२) अरक्षितक्रूरजनम्। (३) छिन्नमृत्युप्रसारम्। नारायणपक्षे—विगतं नतं नतिर्येषां ते विनता दुरात्मानः। तेषा-मानन्दं द्यति खण्डयतीति तम्। क्षतमारप्रसारं क्षतप्रद्युम्नप्रसारम्। कलितव्यालं रक्षितगजेन्द्रम्। गणपतिपक्षे।—विनतानं विनतप्राणभूतम्। ददं ददानम्। कलित-व्यालं भूषणत्वेन धृतसर्पम्। क्षतमारप्रसरं छिन्नमृत्युप्रसारम्। गरुड़पक्षे—विनतानन्दद जननीतोषणप्रदम्। कलितव्यालं—भक्षितसर्पम्। क्षतमारप्रसरम्।—मां इन्दिरां राति गृह्णातीति मारः नारायणः तस्य प्रसरः गमागमव्यापारः। क्षतः मारप्रसरो येन सः तथोक्तः।

अत्र भगवानाह।

शरीरवाङ्मनोभिर्यत् कर्म्म प्रारभते नरः।

न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः॥

सच्चिदानन्दमक्रियं स्वरूपं तव स्वभावः। यथा अग्नेरुष्णवत्। सवितुः प्रकाशवत्। अथ कूटस्थस्वरूपत्वं प्रदर्शयति। कूटस्थमविकारि कूटवत्तिष्ठतीति कूटस्थः। अतस्त्वं कूटस्थः। अनन्ततां प्रदर्शयति। अव्यक्तादि पृथिवीपर्य्यन्तं सर्वतत्त्वेषु पूर्वव्यापकं चैतन्यम्। यथा घटोत्पत्तेः पूर्वं व्यापकं नभः। "सर्वो ब्रह्मविवर्त्त" इत्यादि श्रुतेः। अतस्त्वमनन्तस्वरूपः। स्वप्रकाशत्वं प्रदर्शयति। तव दृश्यमानमिदं सर्वं त्वम् भवसि इति तवैवानुभवः। सच्चिदानन्दस्वरूपस्त्वं भवसि तवैव स्वसम्वेद्यम् अतस्त्वं स्वयं ज्योतिःस्वरूपः। ब्रह्मत्वं प्रदर्शयति। वृहत्वात् वृंहणत्वाद्वा प्रत्यगात्मेह चोच्यते। तत्त्वं ब्रह्म परं रूपं गीयते बहुधा श्रुतिभिः। अतस्त्वं ब्रह्म चित् सदानन्दाद्वितीयमखण्डमचलमजमक्रियं कूटस्थमनन्तस्वरूपं स्वप्रकाशं ब्रह्म एतैर्द्वादशभिर्विशेषणैर्विशेषितं यत्परं ब्रह्म तदेवाहमिति प्रतिपद्यते। यथा नीलमहत्सुगन्धोत्पलवदात्मा एवं नित्यशुद्धबुद्धसुक्तमत्सुख स्वभावष्टक् त्वम् इति। तथैवानुभवो जातः। अत्र श्रुतिशतप्रमाणम्। "आत्मा वा इदमेक एवाग्र आसीत्" "तत् सृष्ट्वा तदेवानुप्राविशत्"। "अतः प्रविष्टः शास्ता जनानां अनन्तरमवाह्यं सवाह्याभ्यन्तरो ह्यजः"। "अशरीरं शरीरेषु ज्ञात्वा देवं सर्वपाशापहानिः" अत्रायं पुरुषः स्वयं ज्योतिर्भवति। योऽयमविनाशी पुरुषः प्रत्यगानन्दमयः पुरुषः सहस्रशीर्षा पुरुषः योऽपमम्नतमयपुरुषः एकमेवाद्वितीयं ब्रह्म। अयमात्मा ब्रह्म इति स्मृतिभ्यश्च।

क्षेत्रज्ञञ्चापि मां विद्धि सर्वक्षेत्रेषु भारत।

नवद्वारे पुरे देही नैव कुर्वन्नकारयन्॥

अनादित्वान्निर्गुणत्वात्। समं सर्वेषु भूतेषु। उत्तमः पुरुषस्त्वन्यः। न जायते म्रियते वा कदाचित्।

"नादत्ते कस्यचित् पापं न चैव सुकृतं विभुः ।"
"अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम् ॥"

विद्याविनयसम्पन्न । वासुदेवः सर्वमिति । उपद्रष्टानुमन्ता च । सर्वेन्द्रियगुणाभासम् । त्वात्मैव देवताः सर्वाः । एतैरन्यैश्च विशेषणैर्विशेषितं परं ब्रह्म त्वमसि, तत्त्वमसि । इति स्वानुभवः । ब्रह्माहमस्मि । इति श्रुतिस्मृतिर्गृहीता । श्रीगुरोराज्ञया । एवं वेदवाक्यतः । गुरुतः । स्वतश्च त्रिःप्रकारेण अहं ब्रह्मास्मि । इति ज्ञात्वा स मुक्त इति । तथा च श्रुतिः । "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्" तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अनाय । तत्राह मोक्षं प्रति गमनाय ।

अन्यथाशास्त्रगर्तेषु लुटतां भ्रमतामिह ।
भवता कृतमज्ञानं कल्पैरप्यनिवर्त्तते ॥
यावदज्ञानभावः स्यात्तावद्वैतस्य भावना ।
भेदभावात्ययोऽभ्येति सर्वस्मिन्नेकतां लयः ॥
ज्ञानं भक्तिश्च वैराग्यमेतदेव न संशयः ।
ज्ञात्वैक्यं सहजं प्रेम विवेकी नैव नाऽन्यतः ॥

तस्मात् साधनान्तरन्नास्ति । अत्र भगवद्वचनम् ।

य एवं वेत्ति पुरुषं प्रकृतिञ्च गुणैः सह ।
सर्वथा वर्त्तमानोऽपि न स भूयोऽभिजायते ॥
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥

तस्मात् सर्वमहं ब्रह्म वासुदेवाख्यमव्ययं ज्ञातव्यमेतत् ज्ञेयं नित्यमेव संस्थितन्नातः परं वेदितव्यं हि किञ्चित् । एक एव आत्मा परं ब्रह्म संसारधर्मविमुक्तस्त्वमिति सिद्धम् । एवं त्वमभयं प्राप्तोऽसि संसारदुःखान्मुक्तो भवसि । एतत् सर्वं विमृश्य यथेच्छसि तथा कुरु । अतः त्वं वेदकिंकरो न भवसि । यतः शास्त्रमाह ।

आत्मानमद्वयं कश्चित् जानाति जगदीश्वरम्।
यद्वेत्ति तत् स कुरुते न भयं तस्य कुत्रचित्॥
आत्मैवेदं जगत् सर्वं ज्ञातं येन महात्मना।
यदृच्छया वर्त्तमानं तन्निषेद्धुं क्षमेत कः॥

भो भगवन्! यद्यपि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माऽभाव उक्तः तथापि प्राक् ज्ञानोत्पतेः अत्र जन्मनि कृतानां कर्मणाम् उत्तर-कालभाविनाञ्च यानि वातिक्रान्तान्यनेकजन्मकृतानि तेषाञ्च फल-मदत्वा नाशो न युक्त इति। तस्मात् त्रिःप्रकाराण्यपि त्रीणि-जन्मान्यारभेयुः संहतानि वा सर्वाण्येकजन्मारभेत। अन्यथा कृतविप्र-नाशे सर्वत्रानवस्था प्रसङ्गः। शास्त्रानर्थक्यं स्यादिति।

मा भुक्तं क्षीयते कर्म कल्पकोटि शतैरपि।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाऽशुभम्।

इति न जायते। इति अयुक्तं तत्र ज्ञानाग्न्युपसृष्टानि सर्वकर्म-बीजानि दह्यन्ते नामरूपवन्ति। तथाच श्रुतिः।

बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः।
ज्ञानदग्धैस्तथाक्लेशैर्नात्मा संपद्यते पुनः॥ इति।

अस्तु तावत् ज्ञानोत्पत्त्यनन्तरकालकृतानां कर्मणां ज्ञानेन तद्दाहो ज्ञानसहभावित्वात्त्वत्रिहजन्मनि ज्ञानोत्पत्तेः प्राक् कृतानामतीता-मनेकजन्मान्तरकृतानाञ्च कर्मणां दाहो न युक्तः। "तत्र तस्य तावदेव चिरं यावन्न विमोक्ष्य" ईशिका तूलवत् सर्वाणि कर्माणि प्रदह्यन्ते। स्मृतिरपि।

ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा। इति

भगवद्वचनात्। सर्वाणि कर्माणीति विशेषणात्। यथा वर्त्तमान-जन्मारम्भककर्माणि न क्षीयन्ते। फलदानाय प्रवृत्तान्येव सत्यपि ज्ञाने तथाऽनारब्धफलानामपि कर्मणां क्षयो न युक्त इति। तदसत् तेषां मुक्तेषुवत् प्रवृत्तफलत्वात्। यथा पूर्वं लक्ष्यवेधाय मुक्तः इषुर्धनुषो लक्ष-

कर्मशरीरस्थितिप्रयोजने निवृत्तेऽपि आसंस्कारवेगवशात् पूर्ववत् वर्त्तत एव। किं बहुना यत् देहयात्रामात्रार्थमिच्छाऽनिच्छापरेच्छा-प्राप्तानि आरोपितसुखदुःखलक्षणानि प्रारब्धफलान्यनुभवन् अन्तः-करणाभासादीनामवभासकः सन् तिष्ठत्येव प्रारब्धकर्मक्षयात्। जीव-न्मुक्तानां पुनर्जन्माऽभावः। तथाच।

शास्त्रेण नश्येत् परमार्थबुद्धिः कार्य्यक्षयं नश्यति चापरोक्षात्।
प्रारब्धनाशात् प्रतिभासनाश एवं क्रमात् नश्यति चात्ममाया॥

कर्मणो मायामूलत्वात् मायानाशे सर्वकर्मभस्मसाद् भवेत्। ननु ज्ञानोत्तरकाले स्वेच्छया कृतानां कर्मणां शरीरान्तरेणापि भोगो भवत्विति चेत्? तन्न तस्य कर्मफलोपचये कर्त्तृत्वाभिमानो नास्त्येव असङ्गो न हि सजते। एतेच्छादय आत्मन्यारोप्यन्ते चित्तधर्माः। तथाच स्मृतिः। "सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि" "ध्यायतीव लेलायतीवेति हि श्रुतेः। "गुणागुणेषु वर्त्तन्ते" इत्यनु-सन्धाने न शरीरयात्रास्थितिः प्रसिध्येत्। अन्यथा शरीरयात्रास्थितिर्न प्रसिध्येत्। तथाच—

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते॥

जीवन्मुक्तस्य प्रारब्धक्षये शरीरपातात् पूर्वं त्विह कर्मविभागं शृणु। तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ तस्य पुत्रादौ यमुप-याति। सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यां न तस्य प्राणा उत्क्रा-मन्त्यत्रैव समवलीयन्ते। किञ्च

प्रारब्धनिश्चयात् भुङ्क्ते शेषं ज्ञानेन दह्यते।
शरीरं त्वितरत् कर्म तत् द्वेष्टि प्रियवादिनः॥

अनारब्धं हि ज्ञानेन निवार्य्यं क्रियते। अपिच। अस्य जीवन्मु-क्तस्य प्रारब्धभोगार्थं शरीरधारणे को दोषः। यथानुद्धृतदंष्ट्रोरगवत् अविद्या कार्य्यं देहद्वयमस्ति तत् किं करिष्यति। (क्रमशः)

# धर्म्मविवेकः ।

( पूर्वप्रकाशितात्परम् )

शिव । वामापद ! अद्य वत्सरत्रयात् "धर्म्मविवेकः" श्रुतः । का वार्त्ता वत्सरत्रयस्य दीर्घजीवनेनापि धर्म्मो व्याख्यातुं नालम् । धर्म्मविवेकम् लक्ष्यमङ्गीकृत्य वेद-स्मृति-गृह्य-पुराणेतिहासतन्त्रादीन् आविष्कृतवन्तः पूर्वं महर्षयः ।

वामा । भागवतः प्रसादात् धर्म्मविवेकं श्रुत्वा निकाममस्मि चक्षुष्मानिव चिरान्धः । अद्य देवादीनां धर्मो व्याख्येयः ।

शिव । तर्हि श्रूयताम् । तथाहि वामनपुराणे ११ श अध्याये ।

सुकेशिरुवाच ।

"किं लक्षणो भवेद्धर्म्मः किमाचरणसत् क्रियः ।
यमाश्रित्य न सीदन्ति देवाद्यास्तु यदुच्यताम् ॥

ऋषय ऊचुः ।

देवानां परमो धर्म्मः सदा यज्ञादिकाः क्रियाः ।
स्वाध्याय-वेदवेत्तृत्वं विष्णुपूजारतिः स्मृतिः ॥
दैत्यानां बाहुशालित्वं मात्सर्य्यं युद्धसत्क्रिया ।
विन्दनं नीतिशास्त्राणां हरभक्तिरुदाहृता ॥
सिद्धानामुदितो धर्म्मो योगयुक्तिरनुत्तमा ।
स्वाध्यायं ब्रह्मविज्ञानं भक्तिर्द्वाभ्यामपि स्थिरा ।
उत्कृष्टोपासनं ज्ञेयं नृत्यवाद्येषु वादिता ।
सरस्वत्यां स्थिरा भक्तिर्गान्धर्व्वो धर्म्म उच्यते ॥
विद्याधरत्वमतुलं विज्ञानं पौरुषे मतिः ।
विद्याधराणां धर्मोऽयं भवान्यां भक्तिरेव च ॥
गान्धर्व्वविद्यावेदित्वं भक्तिः स्थाणौ तथा स्थिरा ।
कौशल्यं सर्व्वशिल्पेषु धर्म्मः कैम्पुरुषः स्मृतः ॥
ब्रह्मचर्य्यममानित्वं योगाभ्यासरतिर्दृढा ।

सर्वत्र कामचारित्वं धर्मोऽयं पैतृकः स्मृतः ॥
ब्रह्मचर्य्यं यताशित्वं जप्यज्ञानञ्च राक्षस ! ।
नियमा धर्म्मवेदित्वमार्षं धर्मं प्रचक्षते ॥
स्वाध्यायं ब्रह्मचर्य्यञ्च दानं यजनमेव च ।
अकार्पण्यमनायासं दयाहिंसाक्षमादयः ॥
जितेन्द्रियत्वं शौचञ्च माङ्गल्यं भक्तिरुच्यते ।
शङ्करे भास्करे देव्यां धर्मोऽयं मानवः स्मृतः ॥
धनाधिपत्यं भोग्यानि स्वाध्यायं शङ्करार्चनम् ।
अहङ्कारमशौचञ्च धर्मोऽयं गुह्यकेष्विति ॥
परदाराभिमर्षित्वं परार्थेऽपि च लोलुपा ।
स्वाध्यायस्त्र्यम्बके भक्तिर्धर्मोऽयं राक्षसः स्मृतः ॥ * ॥
अविवेकतायाज्ञानं शौचहानिरसत्यता ।
पिशाचानामयं धर्म्मः सदा चामिषगृध्नुता ॥
योनयस्तु द्वादशैताः सह धर्म्माश्च राक्षस ! ।
ब्रह्मणा कथिताः पुण्या द्वादशैव गतिप्रदाः ॥"

---

अनन्तरं स्त्रीधर्म्मः श्रूयताम् ।
व्याससंहितायां द्वितीयाध्याये ।

"पत्युः पूर्वं समुत्थाय देहशुद्धिं विधाय च ।
उत्थाप्य शयनादीनि कृत्वा वेश्म-विशोधनम् ॥

---

* तथा च योगवाशिष्ठे—वैराग्ये ६ । एवं रामायणे बालकाण्डे १९ । ७ ।

न च ते क्रोधसंसृष्टुं बुद्धिर्भवति पार्थिव ।
तथाभूतं हि तत्कर्म न शापस्तस्य विद्यते ॥

तथा च भट्टौ १ ।

अघ्नी द्विजान् देवयजीन् निहन्मः कुर्मः पुरं प्रेतपुराधिवासम् ।
धर्मो ह्ययं दाशरथे निजो नो नैवाध्यकारिष्महि वेदवृत्ते ॥ इति ।

मार्ज्जनैर्लेपनैः प्राप्य साग्निशालं स्वमङ्गलम्।
शोधयेदग्निकार्य्याणि स्निग्धान्युष्णेन वारिणा॥
प्रोक्षणैरिति तान्येव यथास्थानं प्रकल्पयेत्।
द्वन्द्वपात्राणि सर्वाणि न कदाचिद्वियोजयेत्॥
शोधयित्वा तु पात्राणि पूरयित्वा तु धारयेत्।
महानसस्य पात्राणि वहिः प्रक्षाल्य सर्वथा॥
मृद्भिश्च शोधयेच्चुल्लीं तत्राग्निं विन्यसेत्ततः।
स्मृत्वा नियोगपात्राणि रस्यांश्च द्रविणानि च॥
कृतपूर्वाह्णकार्य्या च स्वगुरूनभिवादयेत्।
ताभ्यां भर्त्तृपितृभ्यां वा भ्रातृमातुलबान्धवैः॥
वस्त्रालङ्काररत्नानि प्रदत्तान्येव धारयेत्।
मनोवाक् कर्म्मभिः शुद्धा पतिदेशानुवर्त्तयेत्॥
छायेवानुगता स्वच्छा सखीव हितकर्म्मसु॥
दासीवादिष्टकार्य्येषु भार्य्या भर्त्तुः सदा भवेत्।
ततोऽन्नसाधनं कृत्वा पतये विनिवेद्य तत्॥
वैश्वदेवकृतैरन्यैर्भोजनीयांश्च भोजयेत्।
पतिश्च तदनुज्ञातः शिष्टमन्नाद्यमात्मना॥
भुक्त्वा नयेदहः शेषमायव्ययविचिन्तया।
पुनः सायं पुनः प्रातर्गृहशुद्धिं विधाय च॥
कृतान्नसाधना साध्वी सुभृशं भोजयेत् पतिम्।
नातितृप्ता स्वयं भुक्त्वा गृहनीतिं विधाय च॥
आस्तीर्य्य साधु शयनं ततः परिचरेत् पतिम्।
सुप्ते पत्यौ तदभ्यासे स्वपेत्तद्गतमानसा॥
अनग्ना चाप्रमत्ता च निष्कामा च जितेन्द्रिया॥
नोच्चैर्वदेन्न परुषं न बहून् पत्युरप्रियम्।
न केनचिद्विवदेत अप्रलापविलापिनी॥

न चातिव्ययशीला स्यान्न धर्मार्थविरोधिनी।
प्रमादोन्मादद्दोषेर्षा वञ्चनामतिमानिताम् ॥
पैशुन्यहिंसाविद्वेष महाहङ्कारधूर्त्तताः।
नास्तिक्य-साहसस्तेय-दम्भान् साध्वी विवर्जयेत् ॥
एवं परिचरन्ती सा पतिं परमदैवतम्।
यशः शमिह यात्येव परत्र च सलोकताम्।
योषितो नित्यकर्मोक्तं नैमित्तिकमथोच्यते ॥
रजोदर्शनतो दोषात् सर्वमेव परित्यजेत्।
सर्वैरलक्षिता शीघ्रं लज्जितान्तर्गृहे वसेत् ॥
एकाम्बरावृता दीना स्नानालङ्कारवर्जिता।
मौनिन्यधोमुखी चक्षुः-पाणिपद्भिरचञ्चला ॥
अश्नीयात् केवलं भक्तं नक्तं मृन्मयभाजने।
स्वपेद्भूमावप्रमत्ता क्षपेदेवमहस्त्रयम् ॥
स्नायीत च त्रिरात्रान्ते सचेलमुदिते रवौ।
विलोक्य भर्त्तुर्वदनं शुद्धा भवति धर्मतः ॥
कृतशौचा पुनः कर्म्म पूर्ववच्च समाचरेत्।
रजोदर्शनतो याः स्युरात्रयः षोड़शर्त्तवः ॥
ततः पुंबीजमक्लिष्टं शुद्धे क्षेत्रे प्ररोहति।
चतस्रश्चादिमा रात्रीः पर्ववच्च विवर्जयेत् ॥
गच्छेद्युग्मासु रात्रीषु पौष्णपित्र्यक्षराक्षसान्।
प्रच्छादितादित्यपथे पुमान् गच्छेत् स्वयोषितः ॥
क्षामालङ्कृदवाप्नोति पुत्रं पूजितलक्षणम्।
ऋतुकालेऽभिगम्यैवं ब्रह्मचर्य्यं व्यवस्थितः ॥
गच्छन्नपि यथाकामं न दुष्टः स्यादनन्यकृत्।
भ्रूणहत्यामवाप्नोति ऋतौ भार्य्यापराङ्मुखः ॥
सालब्धाप्यान्यतो गर्भम् त्याज्या भवति पापिनी।

महापातकदुष्टा च पतिगर्भविनाशिनी ॥
सद्वृत्तचारिणी पत्नी त्यक्ता भवति धर्मतः ।
महापातकदुष्टोऽपि नाप्रतीक्ष्यस्तया पतिः ।
अशुद्धेः क्षमया दूरं स्थितायामनुचिन्तया ।
व्यभिचारेण दुष्टानां पतीनां दर्शनादृते ॥
धिक्कृतायामवाच्यायामन्यत्र वासयेत् पतिः ।
पुनस्तामार्त्तवस्नातां पूर्ववद्व्यवहारयेत् ॥
धूर्त्ताञ्च धर्म्मकामघ्नीमपुत्रां दीर्घरोगिणीम् ।
सुदुष्टां व्यसनासक्तामहितामधिवासयेत् ॥
अधिविन्नामपि विभुः स्त्रीणान्तु समतामियात् ।
विवर्णा दीनवदना देहसंस्कारवर्जिता ॥
पतिव्रता निराहारा शोच्यते प्रोषिते पतौ ।
मृतं भर्त्तार मादाय ब्राह्मणी वह्निमाविशेत् ॥
जीवन्ती चेत्त्यक्तकेशा तपसा शोधयेद्वपुः ।
सर्वावस्थासु नारीणां न युक्तं स्यादरक्षणम् ॥
तदेवानुक्रमात् कार्य्यं पितृभर्तृसुतादिभिः ।
जाताः सुरक्षिता या ये पुत्रपौत्रप्रपौत्रकाः ॥
ये यजन्ति पितॄन् यज्ञैर्मोक्षप्राप्तिमहोदयैः ।
दाहयेदविलम्बेन भार्य्याञ्चात्र व्रजेत सा ॥

---

## तथा च दक्षसंहिता चतुर्थाध्यायः ।

पत्नीमूलं गृहं पुंसां यदि छन्दोऽनुवर्त्तिनी ।
गृहाश्रमसमं नास्ति यदि भार्य्या वशानुगा ॥
तया धर्मार्थ-कामानां त्रिवर्गफलमश्नुते ।
प्राकाम्ये वर्त्तमाना तु स्नेहान्नात्तु निवारिता ॥
अवश्या सा भवेत् पश्चात् यथा व्याधिरुपेक्षितः ।

अनुकूला न वाग्दुष्टा दक्षा साध्वी प्रियम्वदा ॥
आत्मगुप्ता स्वामिभक्ता देवता सा न मानुषी।
अनुकूलकलत्रो यस्तस्य स्वर्ग इहैव हि ॥
प्रतिकूल-कलत्रस्य नरको नात्रसंशयः।
स्वर्गेऽपि दुर्लभं ह्येतदनुरागः परस्परम् ॥
रक्त एको विरक्तोऽन्य स्तस्मात् कष्टतरं नु किम्।
गृहवासः सुखार्थाय पत्नीमूलं गृहे सुखम् ॥
सा पत्नी या विनीता स्याच्चित्तज्ञा वशवर्त्तिनी।
दुःखा ह्यन्या सदा खिन्ना चित्तभेदः परस्परम् ॥
प्रतिकूल-कलत्रस्य द्विदारस्य विशेषतः।
योषित् सर्वा जलौकेव भूषणाच्छादनाशनैः ॥
सुभृत्यापि कृता नित्यं पुरुषं ह्यपकर्षति।
जलौका रक्तमादत्ते केवलं सा तपस्विनी ॥
इतरा तु धनं वित्तं मांसं वीर्य्यं बलं सुखम्।
सशङ्का बालभावे तु यौवने विमुखी भवेत् ॥
भृत्यवन्मन्यते पश्चात् वृद्धभावे स्वकं पतिम्।
अनुकूला न वाग्दुष्टा दक्षा साध्वी पतिव्रता ॥
एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न संशयः।
या हृष्टमनसा नित्यं स्थानमानविचक्षणा ॥
भर्त्तुः प्रीतिकरी नित्यं सा भार्य्या ह्यीतरा जरा।
शिष्यो भार्य्या शिशुर्भ्राता पुत्रो दासः समाश्रितः।
यस्यैतानि विनीतानि तस्य लोके हि गौरवम् ॥
प्रथमा धर्म्मपत्नी च द्वितीया रतिवर्द्धिनी।
दृष्टमेव फलं तत्र नादृष्टमुपजायते ॥
धर्म्मपत्नी समाख्याता निर्दोषा यदि सा भवेत्।
दोषे सति न दोषः स्यादन्या भार्य्या गुणान्विता ॥

अदुष्टां पतितां भार्य्यां यौवने यः परित्यजेत्।
स जीवनान्ते स्त्रीत्वञ्च वन्ध्यत्वञ्च समाप्नुयात्॥
दरिद्रं व्याधितञ्चैव भर्त्तारं यावमन्यते।
शुनी गृध्री च मकरी जायते सा पुनः पुनः॥
मृते भर्त्तरि या नारी समारोहेद्धुताशनम्।
सा भवेत्तु शुभाचारा स्वर्गलोके महीयते॥
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्।
तथा सा पतिमुद्धृत्य तेनैव सह मोदते॥ इति।

---

## कलापव्याकरणे शर्व्ववर्म्मा।

(पूर्व्वतोऽनुवृत्त)

एतद्वर्षीय श्रावणमासीयपत्रिकायां युक्त्या प्रमाणेन च शर्व्ववर्म्मा-चार्य्यस्य बुक्कराजमन्त्रि-सायणाचार्य्यात् पराचीनत्वं प्रतिपादितम्। अधुना पुनः शास्त्रयुक्त्या दण्डाचार्य्यादिभ्योऽपि तस्य प्राक्कालीनत्वं प्रतिपाद्यते। तथाहि—

आसीदशेषशास्त्रपारदृश्वा श्रीगुणाढ्यनामा कविः। प्रतिष्ठाना-धीशस्य सातवाहनस्य नरपतेर्द्वितीयो मन्त्री * तेन च पिशाचभाषया लक्षश्लोकात्मकः "बृहत्कथानामकग्रन्थो" व्यरचि। तत्र च बृहत्-कथायां शर्व्ववर्म्माचार्य्यस्येति वृत्तं सविस्तरमस्ति। तस्या एव बृहत्-कथायाः सोमदेवभट्टकृते अनुवादरूपे "कथासरित्सागरे"ऽपि वर्णितं प्रदर्शितम्।

दण्डाचार्य्यः स्वकृते काव्यादर्शे—

"भूतभाषामयीं प्राहुरद्भुतार्थां बृहत्कथाम्"।

इति वदन् 'प्राहु' इति पदेन स्वस्मात् प्राचीनत्वं बृहत्कथायाः

---

* अस्य विशेषविवरणं पूर्व्वपूर्व्वसंख्यायां प्रदत्तम्।

सूचयामास। तेन च बृहत्कथान्तर्गतशर्ववर्म्मणोऽपि दक्षिणतः प्राचीनत्वं सिद्धमिति।

एवं वासवदत्ताप्रणेतुः सुबन्धोरपि पूर्वकालीनः शर्ववर्म्मा। तथाहि—तत्र कुसुमपुरवर्णने "बृहत्कथालम्भैरिव शालभञ्जिकोपेतै"रित्युल्लेखोऽस्ति बृहत्कथाया इति।

किञ्च बृहत्कथानुवादरूपे कथासरित्सागरे विशेषतो वासवदत्ताया वृत्तान्तो वर्त्तते। तत एवोद्धृत्य प्रसङ्गं सुबन्धुना "वासवदत्ता" विरचिता। तथाच कथासरित्सागरे द्वादशतरङ्गे—

"दत्ता मे वासवे नैषा तुष्टेनेति स भूपतिः।
नाम्ना वासवदत्तान्तां तनयामकरोत्तदा॥
सोऽपि चण्डमहासेनस्तच्छ्रुत्वैवं व्यचिन्तयत्।
स तावदिह नायाति मानी वत्सेश्वरो भृशम्॥
कन्या हि तत्र न प्रेष्या भवेदेवं हि लाघवम्।
तस्मादिहैव तं युक्त्या नृपमानाययाम्यहम्॥
इति सञ्चिन्त्य संमन्त्र्य स राजा मन्त्रिभिः सह।
अकारयत् स्वसदृशं महान्तं यन्त्रहस्तिनम्॥" इत्यादि।

तथा हर्षचरिते—

"समुद्दीपितकन्दर्पा कृतगौरीप्रसाधना।
हरलीलेव नो कस्य विस्मयाय बृहत्कथा॥"

तथा कादम्बर्यामप्युज्जयिनीवर्णने "बृहत्कथाकुशलैः" एवं कथासरित्सागरान्तर्गतशक्तियशोलम्बकस्य तृतीयतरङ्गे निबद्धं वृत्तं बाणभट्टविरचितकादम्बरीकथादर्शीभूतं ध्रुवम्। तेन सुतरामेव बाणभट्टादपि प्राचीनत्वम् उपपद्यते गुणाढ्यसमकालवर्त्तिनः शर्ववर्म्मणः।

तथाहि कादम्बरीमूलरूपे कथासरित्सागरे—

"तस्याञ्च सुमना नाम महानासीन्महीपतिः।"

"तमेकदास्थानगतं प्रतीहारी व्यजिज्ञपत् ॥
देवमुक्तालता नाम निषादाधिपकन्यका।
पञ्जरस्थितमादाय शुकं द्वारि वहिःस्थिता ॥
धीरप्रभेणानुगता भ्राता देवं दिदृक्षते।
प्रविशत्विति राज्ञोक्ते प्रतिहारीनिदेशतः।
भिल्लकन्या नृपास्थानप्राङ्गनं प्रविवेश सा ॥
न मानुषीयं दिव्या स्त्री कापि नूनमसाविति।
सर्वेऽप्यचिन्तयंस्तत्र दृष्ट्वा तद्रूपमद्भुतम् ॥
सा च प्रणम्य राजानमेवं व्यज्ञापयत्तदा।
देवायं शास्त्रगञ्जाख्यश्चतुर्वेदधरः शुकः ॥
कविः कलासु कृत्स्नासु विद्यासु च विचक्षणः।
मयेश्वरोपयोगित्वादिहानीतोऽद्य गृह्यताम् ॥" इत्यादि।

तथा रत्नावली-नागानन्द-प्रियदर्शिका-मालतीमाधव-मुद्राराक्षस-पञ्चतन्त्र-वेतालपञ्चविंशति-हितोपदेशग्रन्थास्तत्तद्ग्रन्थकर्त्तृभिर्बृहत्कथान्तर्गताः काश्चनकथाः कथैकदेशान् वावलम्ब्य विरचिता इति। सुतरामेव गुणाढ्यप्रतिद्वन्द्विनः शर्ववर्मणः प्राचीनत्वं श्रीहर्ष-भवभूति-विशाखदत्त-विष्णुशर्म्म-प्रभृतिभ्यः समायाति।

अत एव कलापव्याकरणमाधुनिकमित्यश्रद्धां ये प्रथयन्ति तेऽतीवाज्ञा इति।

---

## अथ कलापव्याकरणे दुर्गसिंहः।

प्राक्तनपण्डितानां दिगन्तव्याप्तयशसामपि न शक्यते महतापि प्रयासेन चरितं विनिर्णेतुम्। ते खलु परान् बोधयितुं पञ्चमुखा अपि, स्वचरितकथने विमुखा इवासन्। तथापि आधुनिक-पाश्चात्यरीत्या तद्बोधनमनेकेषां रुचिकरमिति यावच्छक्यं लिख्यते दुर्गचरितम्। तत्रापि इदमित्थं तथ्यमित्येव प्रवक्तुं नेशे। परन्तु तद्विषयिणीः सामग्रीः

कियतोः समाहृत्य पुरतो निःक्षिपामि । ताभिश्च विचारयितुं सुधियोऽपि भवन्तः प्रभविष्यन्ति ।

भगवता शर्ववर्माचार्य्येण कलापापरपर्य्यायकं "कातन्त्रं" नाम व्याकरणं स्वल्पीयसा कालेन सातवाहनभूपं व्युत्पादयितुं यद्विरचितं सन्धि-चतुष्टया-ख्यातात्मकं सूत्रम् । यच्च कात्यायनेन वररुचिपर-नाम्ना शर्ववर्म्मपूर्वकालवर्त्तिना (१) कृदन्तात्मकं सूत्रम् विरचितम् । तयोरेव वृत्तिं टीकाञ्च दुर्गसिंहो व्यरचयत् ।

दुर्गसिंहो विरचय्यापि वृत्तिमसंजाततृप्तिः पुनरपि सन्धिवृत्ते-श्चतुष्टयवृत्तेराख्यातवृत्तेः कृद्वृत्तेश्च टीकां निर्म्मितवान् । अहो चत-सृषु वृत्तिषु टीकासु च कियद्वा पाण्डित्यं कीदृग् वा बुद्धेः प्राखर्य्यं प्रादर्शयत् तत् सुचिरदुर्गवाक्यनिष्णातैरेवानुमितम् । न तदन्येन वचनशतेनापि प्रतिपादयितुं समर्थोऽस्मि ।

कदाचित् दुर्गसिंहो व्याकरणेषु निरतिशयवुत्पत्तिमदचञ्चलो भगवन्तं शर्व्वमप्यधिचिक्षेप । तथाच ।

"उद्धृत्य बाहू परिरारटीमि यस्यास्ति शक्तिः स तु वावदीति ।
मयि स्थिते वादिनि दुर्गसिंहे नेकाक्षरं वक्ति महेश्वरोऽपि ॥

एवमपरमपि स्वप्रागल्भ्यं नाटकादौ भवभूत्यादिसादृश्यमात्म-नोऽसूचयत् । तथाच

"योऽहं व्याकरणे दुर्गः भवभूतिश्च नाटके ।
आगमे नागभट्टोऽहं तर्केषु कुसुमाञ्जलिः ॥

अपि च टीकायामुक्तवान् ।

अहञ्च भाष्यकारश्च कुशाग्रीयधियावुभौ ।
नैव शब्दाम्बुधेः पारं किमन्ये जड़बुद्धयः ॥ इति ।

---

(१) "दग्ध्वा शरीरमथ धारणया तथा तद्दिव्यां गतिं वररुचिः स निजां प्रपेदे ।
विन्ध्याटवीभुवि ततश्च स काणभूतिरासीदभीप्सितगुणाढ्यसमागमोत्कः ॥"
इत्यादि कथासरित्सागरे चतुर्थतरङ्गादिस्तरणौ ज्ञातव्यम् ।

यथावद्भवतु किन्तु तथाविध पण्डितस्य लघुवृत्तेरिव तारल्यं न गौरवमादधाति।

ये खलु प्रयोगाः शर्ववर्मसूत्रेण साक्षात् न विषयीकृतास्तेऽपि वृत्तिवक्तव्येन टीकावक्तव्येन च दुर्गेण सङ्कलिताः। तथाच

"समानः सवर्णे दीर्घी भवती" इत्यत्र टीकायां—

"इह चकाराधिकारात् सर्वं वक्तव्यं दुर्गेण" इत्युक्तम्।

तेनैव कातन्त्रव्याकरणं सम्पूर्णतां नीतं दुर्गेण।

(क्रमशः)

## व्याकरणम्।

( पूर्वप्रकाशितात्परम् )

(The child sees the moon), वृष्टिर्भवति (It rains).

रामः, शिशुः and वृष्टिः are in the nominative case; an[d] गच्छति, पश्यति and भवति are finite verbs (समापिका क्रिया) agreeing with them in number and person.

When a verb is in the imperative mood, the nominative is often left unexpressed; as गच्छ (go); फलम् आनय (bring the fruit).

Every sentence consists of two parts: the subject (उद्देश्य) and the predicate (विधेय). In the sentence सविता उदेति (The sun is up), सविता is the subject and उदेति is the predicate. The subject is the person or thing spoken of; while the predicate is what is said about the subject.

Sentences are of three kinds, *viz.* :—

(1) A simple sentence contains but one subject and one finite verb (or whatever serves as a predi-

cate) ; as, अहं महाभागम् अपश्यम् (I saw the noble soul); धिक् त्वाम् (fie to thee) ; शशकस्य वारः समायातः (the hare's turn came).

(2) A complex sentence is one which, while containing but one principal subject and one principal predicate, has two or more finite verbs ; as, बुद्धिर्यस्य बलं तस्य (He who is intelligent is strong) ; यां चिन्तयामि सततं सा मयि विरक्ता ; यदि गर्जति वारिधरो गर्जतु ।

(3) A compound sentence is one which contains two or more principal sentences ; as, दुदोह गां स यज्ञाय शस्याय मघवा दिवम् ( दुदोह च ) (He milked the earth for sacrifice while Indra milked heaven for producing corn).

---

## THE SUBJECT.

The subject in a simple sentence must be either a noun ( simple or compound ), or a pronoun ; as, शुकनासः सविस्तरम् उवाच (Sukanasa spoke in datail) ; त्रैलोक्यमपि पीड़ितम् (The three worlds are oppressed) ; मरणं प्रकृतिः शरीरिणाम् (Man is mortal) ; एष एव मे अनुबन्धः (This is my determination).

(1) Sometimes the subject is understood ; as (भवान्) अपनयतु नः कुतूहलम् ( Remove our curiosity) ; कथं मन्दभाग्यः (अहम्) करोमि (What shall I do, illucked that I am) ; ब्रूहि रामचरितम् (त्वम्) (Recite the deeds of Rama).

(2) An adjective is often used as the subject of a sentence without the noun qualified by it ; as, विद्वान् सर्वत्र पूज्यते ( The learned are respected everywhere ) ; मृतः को वा न जायते (Who after death is not born again); पाप एष निर्वासनीयः (This sinful one must be banished).

(3) Numerals often stand as the subject of a sentence ; as, शरदां अयुतं ययौ (Ten thousand years passed away) ; नक्रेण खादितोऽप्येको विंशतिः गृहमागता ( Twenty came back home though one had been devoured by an alligator ).

---

## THE PREDICATE.

(1) The predicate may be a single finite verb ; as, अयम् अहम् आगच्छामि ( Here I come) ; शम्बूकः तपस्तप्यते (Sambuka practises penance).

(2) The predicate may also be a substantive or an abjective with the verb अस् or भू (to be) expressed or understood ; सम्पदः पदमापदाम् (Wealth is the abode of miseries) ; एषोऽस्मि कार्य्यवशात् ( I have become thus for the sake of representation ) ; कुपितोऽसि किं ( Are you angry ) ; एष वरो वणिजाम् ( He is the head of the merchants ) ; अधुना मरणमेव श्रेयः ( Now, death is preferable ).

(3) An indeclinable often serves the purpose of the predicate ; as, विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम् (Even a poisonous tree if it once be nourished should

not be uprooted) ; पापात्मनां सङ्गः परिहर्त्तुं सांप्रतम् ( One should shun the company of sinners) ; मनस्विगर्हितः पन्थाः समारोढुमसाम्प्रतम् (One should not walk in the path discarded by the wise).

---

## ORDER OF WORDS IN A SENTENCE.

In sanskrit, words in a sentence are to be arranged according to a certain logical sequence of ideas. Generally, the subject heads it with its adjuncts, then comes the object, and lastly the predicate ; as, अस्माकं मित्रं हिरण्यको नाम गण्डकीतीरे चित्रवने निवसति (Our friend Hiranyaka by name lives in the Chitrabana on the banks of the Gandaki) ; उपवनमार्गम् आदिश (Lead me to the pleasuregarden).

General rules for the order of words :—

(1) The subject ( expressed or understood ) with its abjuncts stands first ; as, गौः शब्दायते ( The cow lows ) ; रामः वनम् जगाम ( Ram went to the forest ) ; भासुरको नाम सिंहः शशकम् आह (The lion, Bhasuraka by name shoke to the hare) ; क्षमस्व तस्य अपराधम् (Forgive his fault).

(2) The object of a transitive verb commonly precedes the verb ; as, रामः ग्रामं गच्छति (Ram goes to the village) ; मां ग्रामं प्रापय (Lead me to the village).

N. B. The second rule is not obligatory ; the object often follows the transitive verb it is governed

by ; as प्रापय मां पत्युरन्तिकम् (Take me to my husband) ; क्षमस्वातिक्रमं देवि (O noble lady, excuse my fault) ; जानामि धर्मं धर्मज्ञ जाने त्वां सत्यवादिनम् (O pious man, I know what is duty and I know that you are truthful).

(3) Abjectives usually precede the nouns they qualify ; as, शीतलं तोयं (Cold water) ; विद्वान् पुरुषः (Learned man) ; साधुः बालकः (Honest boy) ; एकः प्रबलः सिंहः प्रवसति (A strong lion lives).

(4) Adverbs and adverbial phrases may occupy any place except the last ; as, मृदु गायति गायकः (The singer sings lowly) ; द्रुतमागच्छ (Come quickly).

---

## SPECIAL LAWS GOVERNING THE ORDER OF WORDS IN A SENTENCE.

(1) When a sentence has a simple subject and a finite verb, the former stands first ; as, सिंहः प्रतिवसति (The lion lives).

(2) Abjectives follow the substantives they qualify, when they are used as predicates ; as राम उत्तमो भवति (Ram is good) ; देवदत्तं पीड़ितं पश्यामि (I find Devadatta ill).

(3) When pronominal and qualitative abjectives are both used, the former usually precedes the latter ; as, तस्यां अतिदारुणायां निशायाम् (In that dreadful night) ; तं महान्तं पुरुषम् (To that noble man).

(4) A noun in apposition should preceede the word which it is intended to explain ; as, भासुरको नाम सिंहः प्रतिवसतिस्म ।

(5) The genitive generally stands before the word to which it relates ; as जगतः पितरौ वन्दे (I bow to the parents of the universe).

(6) When the substantive is qualified by a genitive and another abjective, the order generally is the genitive, the adjective and then the substantive ; as, तस्य एवंविधस्य पद्मसरसः पश्चिमे तीरे ; तस्या मातृविहीनायाः बालायाः ।   (क्रमशः)

---

## समालोचना ।

"भगवच्छतकं" नाम स्तुतिरूपं काव्यं दिनाजपुरान्तःपातिराजा-[illegible]वास्तव्येन श्रीयुक्त महेशचन्द्र तर्कचूडामणिना प्रणीतम्। [illegible] वा श्लोकमुद्धृत्य तस्य कवित्वं ग्रथननैपुण्यं भक्त्युद्रेकं किं बहुना सर्वमन्यत् काव्यगुणं कथङ्कारमनुभावयामि ग्राहकान् चेत-[illegible]पसरति सर्वानेव श्लोकान् समुद्धर्त्तुम्। किन्तु चोदायस्यामस्यां न सम्भवतीत्यात्मानं संगोप्य निवर्त्ते ।

अन्तर्धत्से नयनविषयाद्दृष्टदृष्टोऽपि मत्तो
हस्तादभ्रश्यन्निव धृतधृतोऽप्याशु दूरम्प्रयासि ।
ज्ञातज्ञातोऽप्यपसरसि च स्वान्तवृत्तेरकस्मात्
कस्त्वं क्रीडन्निव मम पुरो व्यज्यसे लीयसे च ॥

लुक्कायितुं त्वं न तथापि शक्तो व्यक्तो भवस्येव गुणक्रियाभिः ।
[illegible] नाललीनोऽपि यथांशुमाली संसूच्यते दीधितिभिः प्रभाते ॥

पिदधति यदि च त्वां विश्वमुद्भासयन्तं
तदपि न खलु लोप्तुं नास्तिवादाः क्षमन्ते।
तिमिरकुहककाली भास्करं वारिदाली
प्रभवति यदि रोद्धुं तर्हि किं लुप्यतेऽसौ॥

असज्जनास्त्वां विदधत्यसन्तं सन्तः पुनः सन्तमनाद्यनन्तम्।
येषां मनोवृत्तिरुदेति यादृक् ते तादृशं त्वां परिकल्पयन्ति॥

भावा अभावाश्च हृदि स्फुरन्ति
ये ये, स सर्वोऽपि तवानुभावः।
भावान्विता भावमतो विदुस्त्वा-
मभावरूपेण तु वीतभावाः॥

---

## समस्यापूर्त्तिफलम्।

१ श्रीहरिनारायणशास्त्री। २ श्रीपुरुषोत्तमविद्यानिधिः। ३ श्रीपरमसुखशर्मा। ४ श्रीशिवेश्वरशर्मा। ५ श्रीप्रतापचन्द्रशर्मा। ६ श्रीनरसिंहभीमाचार्य्यपुणेकरः। ७ श्रीकैलासचन्द्रशर्मा। ८ श्री-कालीकृष्णशर्मा। ९ श्रीश्यामादत्त चौवे। १० श्रीज्ञानशरणचक्रवर्त्ती चेति।

उपरिकीर्त्तिताः खलु ये विद्वांसस्ते सर्व एव रचनचातुर्य्येण वचन-माधुर्य्येण च भाद्रमासीयसमस्या पूरकाणामनेकेषां प्रशस्ता अत-स्तेभ्यः सानन्दं "काव्यानन्दः" इत्युपाधिः प्रदत्तः। किन्तु सर्वथा-निर्दुष्टत्वात् गुणवत्त्वाच्च सारदाचन्द्रचक्रवर्त्तिने 'कविभूषण' इति।

समस्याप्रष्ट्रा
श्रीअप्पाशास्त्रीणा। कोल्हापुरनिवासिना।
सम्पादकेन
श्रीजयचन्द्रसिद्धान्तभूषणेन च।

---

श्रीश्रीदुर्गा शरणम्।

# संस्कृतचन्द्रिका।

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती जगन्ति च।

मायायन्त्राते सैवमम्बा श्रीशिवसुन्दरी॥

## भाषावतरणिका।

मधु वाता नृणां वान्ति मधु प्रवहते सरित्।

मधु चन्द्रो विकिरति सर्वं मधुमयं सखी॥

## उद्भटश्लोकाः।

"एकस्मिन् शयने षडाननमुखभ्रान्त्या स्तनं पार्वती

सानन्दं शशिशेखरस्य वदने निद्राकुला सा ददौ।

दृष्ट्वा तत्र विपर्य्ययं शशधरः स्मेरोऽभवत्तत्क्षणात्

ज्ञात्वा सोऽपि निशाकरस्य हसनाद्भीणो हरः पातु वः" ॥२९०॥

"अथे तार्किककेशरी प्रचरति गौरीपदध्यानतः

पश्चाच्छास्त्रविचारचातुरिकरः कालापशार्दूलकः।

तन्मध्ये कविते! कुरङ्गदयिते! प्राणैर्यदा जीवसि

कण्ठे मौक्तिकहारकं तव पुनर्दास्यामि जीवामि चेत्" ॥२९१॥

"हारो नारोपितः कण्ठे मया विश्लेषभीरुणा।

इदानीमावयोर्मध्ये सरित्सागरभूधराः" ॥२९२॥

"आगता च यदा लक्ष्मीर्नारिकेलफलाम्बुवत्।

निर्गता च यदा लक्ष्मीः करिभुक्तकपित्थवत्" ॥ २९३ ॥

श्रीकालीकृष्णशर्म्मविद्याविनोदस्य

सोनार गाँ—कृष्णपुरा—वड़वाड़ी

पो: वैद्येर बाजार, ढाका।

# नामाष्टशतकम्।

लङ्कायां पानदुराभिधाननगर्य्यां सौगतविद्यालयाधीशस्य श्रीसु-मङ्गलाभिधानयतीन्द्रस्य शिष्यभूतेन श्रीनिवासनाम्ना तथागतसूनुना संशोधितम्।

---

नमो बुद्धाय।

सम्बुद्धं पुण्डरीकाक्षं सर्वज्ञं करुणास्पदम्।
समन्तभद्रं शास्तारं शाक्यसिंहं नमाम्यहम्॥
श्रीघनं श्रीमतिं श्रेष्ठं शीलराशिं शिवंकरम्।
श्रीमन्तं श्रीकरं शान्तं शान्तवेशं नमाम्यहम्॥ १॥
नैरात्मवादिनं सिद्धं निरवद्यं निरास्रवम्।
नीतिज्ञं निर्मलात्मानं निष्कलङ्कं नमाम्यहम्॥ २॥
निर्वादं निरहङ्कारं निर्विकल्पं तथागतम्।
निर्द्धूतनिखिलक्लेशं निष्प्रपञ्चं नमाम्यहम्॥ ३॥
विश्वेश्वरं विमुक्तिज्ञं विश्वरूपं विनायकम्।
विश्वलक्षणसम्पूर्णं वीतरागं नमाम्यहम्॥ ४॥
विद्याचरणसम्पन्नं विश्वेशं विमलप्रभम्।
विनीतवेशं विपुलं वीतदोषं नमाम्यहम्॥ ५॥
दुर्दान्तदमकं सर्व्वं शुद्धं शौद्धोदनिं मुनिम्।
सुगतं सुगतिं सौम्यं शुभ्रकीर्त्तिं नमाम्यहम्॥ ६॥
योगीश्वरं दशबलं लोकज्ञं लोकपूजितम्।
लोकाचार्य्यं निराचार्य्यं लोकनाथं नमाम्यहम्॥ ७॥
कलङ्कमुक्तं कामारिमकलङ्कं कलाधरम्।
कान्तमूर्त्तिं दयापात्रं कनकाभं नमाम्यहम्॥ ८॥
परमार्थं परज्योतिं परमं परमेश्वरम्।

भवाभवकरं भव्यं भगवन्तं नमाम्यहम् ॥ ९ ॥

महामतिं महावीर्य्यं महाभिज्ञं महाबलम् ।

महोद्यमं महाधैर्य्यं महाबाहुं नमाम्यहम् ॥ १० ॥

आद्यं पवित्रं सर्वौघमपराजितमच्युतम् ।

मितं परहितं नाथममिताभं नमाम्यहम् ॥ ११ ॥

चतुर्मारारिविजितं तत्त्वज्ञं शङ्करं शिवम् ।

सत्त्वसारं सदासारं सार्थवाहं नमाम्यहम् ॥ १२ ॥

देवदेवं महादेवं देववन्दितमव्ययम् ।

प्रमाणातीतदेवेशं दिव्यरूपं नमाम्यहम् ॥ १३ ॥

जितेन्द्रियं जितक्लेशं जिनेन्द्रं पुरुषोत्तमम् ।

उत्तमं सत्तमं त्रातारं पुण्यचेत्रं नमाम्यहम् ॥ १४ ॥

भक्त्येदं यः पठेन्नित्यं प्रातरुत्थाय मानवः ।

नामाष्टशतकं पुण्यं पवित्रं पापनाशनम् ॥ १५ ॥

स लभेतामितान् भोगान् भौमान् स्वर्गोद्भवांस्तथा ।

व्याधयस्तं नबाधन्ते दुःस्वप्नं तस्य नश्यति ॥ १६ ॥

आयुरारोग्यसम्पन्नः सर्वैश्वर्यसमन्वितः ।

मेधावी कुलजो वाग्मी भवेज्जन्मनि जन्मनि ॥ १७ ॥

शुभमस्तु ॥

श्रीनिवासस्य तथागतस्य

(लङ्का, पानदुरा) ।

---

## अज्ञानबोधिनी ।

( पूर्वतोऽनुवृत्ता )

स्वामिन् ! कारणनाशे कार्य्यमस्ति तन्तुनाशे पटोऽस्ति इति कुत्र दृष्टम् । केन वाचार्य्येणोक्तम् । उच्यते । कारणनाशे कार्य्यमस्तीति लोके दृश्यते । यथा रज्जुस्वरूपे ज्ञाते सर्पज्ञानं निवर्त्तते । तथापि

भयजनितकम्पादि वर्त्तते। तथा च श्रुतिः। यथाहि निर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरम्। अस्मिन् विद्वच्छरीरे पतिते स्थिते वा समुक्तदग्धपटवत् पततीति। श्रुतिरपि। सदैव मुक्त इति। ब्रह्मैव सन् ब्रह्माप्येति। विमुक्तश्च विमुच्यते। स्वभावतस्त्वं नित्यमुक्त एव। इदानीमपि यथा स्वप्नद्रष्टा स्वप्नगतभयेनैव प्रबुद्धः स्वप्नव्यवहारे सर्वस्मिन् मिथ्या भूते निरस्ते सति सत्यस्वरूपं स्वयमेवावशिष्यते। तथैव भ्रान्तिमूलसंसारमहास्वप्नव्यवहारे सर्वस्मिन् मिथ्याभूते निरस्ते सति सत्स्वरूपं स्वयमेवावशिष्यते। ननु प्रारब्ध-कर्मक्षयात् शरीरनाशः। शरीरनाशात् पुनर्जन्माऽभावः। सर्वविशेष-रहितं तर्हि नैवाहमपि। उच्यते। किञ्च प्रमाणाऽविषयत्वान्नास्ति ब्रह्मेति प्रसज्यते। ततश्च असदेव प्रशस्तं सत्यस्वरूपं स्वयमेवाव-शिष्यते तत्। किमर्थमङ्गीकरणीयं तदसत्।

"निर्मुच्यापि त्वचं सर्पः स्वस्वरूपं न मुञ्चति।
नास्त्यात्मेति तपो हेतुमिति वक्तुं न शक्यते॥" किञ्च
यथा चन्द्रोऽमावास्यायामखिङ्गत्वान्न दृश्यते।
तथात्माऽज्ञानयोगेन न स्फुटं भाषते तारम्।
अमावास्ये यथा चन्द्रो दृश्यते नार्कयोगतः।
दृश्यक्षयात् तथा दृष्टव्यवहारो न दृश्यते॥

अथात आदेशो नेति नेति अस्थूलं मन एवमह्रस्वमदीर्घमज-मव्ययम् इति श्रुतेः। यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह यद्वाचानभ्युदितमित्यादि निषेधस्य सिद्धिर्नास्ति। सर्वस्य निषेधस्य सावधिकत्वात्। अतएव सत्यस्वरूपं स्वयमेवावशिष्यते। यन्निषेध-द्वाराऽसदुक्तं तत् सर्वं प्रपञ्चस्य नत्वात्मनः। यदात्मनः असदुक्तं भवति तदा वन्ध्यापुत्रेण कार्य्यं कथं निर्वहति। अत एव सदंशवत् प्रमाणमात्मनः सत्पतिः सदा चेति श्रुतिः प्रमाणम्। सदेवसौम्येदमग्र आसीत्। सत्यं ज्ञानमनन्तं ब्रह्म। स्मृतिरपि "अविनाशि तु तद्विद्धि

ये न सर्व्वमिदं ततमित्यादि। किञ्च ब्रह्मसद्भावे प्रमाणापेक्षा नास्ति स्वतः प्रमाणं ब्रह्म। जाग्रदाद्यवस्थात्रयेषु प्रमातृत्वाऽव्यभिचारात् कूटस्थनित्यतासिद्धिः। सुषुप्तौ व्यभिचरेत् इति। चेन्न तत्रापि प्रमेयत्वमेव निवारयन्ति सर्व्वे लोकाः। कथं नाहमत्र सुषुप्तौ किञ्चिदुपलब्धवानिति। न प्रमातृत्वमसिद्धस्य हि वस्तुनः परिस्थितिं प्रति प्रमाणापेक्षा नत्वात्मनः। आत्मनश्चेत् प्रमाणापेक्षासिद्धिः कस्य प्रमातृत्वं स्यात्। यस्य प्रमातृत्वं स एवात्मेति निश्चीयते। अत एव स्वतः सिद्ध एवात्मा न प्रमाणापेक्षा। यदिदं दृश्यजातं तदविद्यया कृतत्वात् प्रतीतिमात्रं कूटस्थतानित्यसिद्धत्वादात्मसत्तासामान्यमनुस्यूतं वर्त्तत एव। नाभावो विद्यते सतः। अतः सत् स्थूलकार्य्यम् असत् सूक्ष्मकारणं तत् सर्व्वं विद्यवर्त्तमानरूपेण ब्रह्मैव भाति तथा च।

विस्तारः सर्व्वभूतस्य विष्णोर्विश्वमिदं जगत्।
द्रष्टव्यमात्मवत्तस्मादभेदेन विचक्षणैः॥

यस्मात् ज्ञानाङ्गत्वेनास्त्यर्थसत्ता। तस्मात् ज्ञानमेव सत्यम्। ननु ज्ञानन्तु कथं एकं बहुधाकारम्। शृणु। अनिर्वाच्या महती मायालक्षणा-शक्तिर्यया च नानाभावं जनयति। तथाच श्रुतिः इन्द्रो मायाभिः पुरुरूप ईयते। ननु द्वावेतौ ब्रह्मणो रूपमित्युक्तत्वात् वास्तवं द्वैतं भवतु। नैवम् अविद्यया कृतत्वात् द्वैतमिव न तु वास्तवम्। तथाच यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति इत्यादि। यत्रत्वस्य सर्व्वमात्मैवाभूत् तत् केन कं पश्येत्। येनेदं सर्व्वं विज्ञातं तं केन विजानीयात्। नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति विज्ञाता। यदयं सर्व्वमात्मा विज्ञातारमरे केन कं विजानीयादिति। एतत् सर्व्वमखिलात्मैव। अतस्तद्भासकं नित्यशुद्धबुद्धमुक्तस्वभावं प्रत्यक् चैतन्यमेवात्मतत्वमिति वेदान्तविदनुभवः। श्रुतिगुरुप्रसादेन जायमाना ब्रह्मापरोक्षवृत्तिः साधनेन प्रबुद्धः सर्व्वस्मिन् मिथ्याभूते अप्रमेयं स्वस्वरूपं स्वयमेवावगिष्यते। एवं मायानिद्रायाः प्रबुद्धः सन् जीवन्मुक्तः प्रारब्ध-

कर्मजनितफलाऽबाधितलोकाननुगृह्णन् पूर्ववत्तिष्ठति । शास्त्रमपि ।

ज्ञात्वाप्यसर्पं सर्पोत्थं यथा कम्पं न मुञ्चति ।

विद्वत्ताखिलमोहोऽपि श्रयेत् कार्य्यं तथात्मवित् ॥

अस्य जीवन्मुक्तस्य देहधारणं लोकस्योपकारार्थमिति । श्रुतिरपि अशनाच्छादने कुर्वन् स्वशरीरं नोपभोगार्थमपि तु लोकस्योपकारार्थाय परिगृह्णीयात् । भो भगवन् ! लोकस्योपकारः क उपकारस्त्रिविधश्चेति । तत् कथम् । इत्थं दर्शनं भजनं सम्भाषणं चेति । दर्शनेन पापक्षयो भवति । भजनेन श्रेयोत्तरोत्तरवृद्धिः । सम्भाषणेन मोक्षो भवति । एवं नित्यशुद्धबुद्धमुक्तसत्यस्वभावस्वरूपोऽहम् । एवंविधो बोधः आचार्य्यप्रसादात् अज्ञानात् प्रबुद्धः संसारविनिर्मुक्तो भवति । श्रुतिरपि । आचार्य्यवान् पुरुषो वेद । आचार्य्याद्धि च विद्याविधिना तरति शोकमात्मवित् ।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥

ज्ञानाग्निः सर्वकर्माणि भस्मसात कुरुतेऽर्जुन । ब्रह्मवित् ब्रह्मैव भवति ॥*॥ इदानीं अन्यविद्योपासने दोषमाह ॥*॥ किन्त्वन्य विद्याः क्रियाः उपदिशन्ति । कालान्तरे अनित्यफलतां दर्शयन्ति । श्रुतिरपि सर्वविद्या क्रियापरा यदि क्रियाफलं मोक्षो भवेत् । अनित्यत्वं प्रसज्येत । घटवत् स्वर्गादि नश्येदिति । अमुमेवार्थं श्रुतिरप्याह । यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्रचितो पुण्यलोकः क्षीयत इति स्मृतिरपि । क्षीणे पुण्ये मत्यलोकं विशन्ति । अतः आचरणे दुःखं फलभोगे दुःखं भोगान्ते पतनं दुःखम् । एवमन्यविद्योपासने दुःखात् दुःखमाप्नोति । श्रुतिरपि । मृत्वा स मृत्युमाप्नोति य इह नानेव पश्यति योऽन्यदेवताम् उपास्ते स देवानां पशुः । अन्योऽसावहमन्योऽस्मीत्युपास्ते न स वेद यथा पशुः । तस्मात् अन्यां विद्यां परित्यज्य इमाम् अध्यात्मविद्यामाश्रयेत् । सा विद्या कीदृशी भव भगवतोक्तम् ।

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्त्तुमव्ययम्॥

किञ्च यथाग्निहोत्रादीनां स्वर्गादिफलं दर्शयति। श्रुतिः तथा ब्रह्मविद्याविज्ञातादपि परमपुरुषार्थं दर्शयति श्रुतिरपि। श्रुतयो ब्रह्मविद्यानन्तरं मोक्षं प्रदर्शयन्ति। किञ्च मध्ये कार्य्यान्तरं वारयन्ति ब्रह्मविदाप्नोति परम् इति। वेदानुशासनं वेदानुशासनमिति। अथ शठानां धूर्त्तानाम् अश्रद्दधानां नास्तिकानाम् उत्पथगामिनाम् एत-द्विद्यां न प्रकाशयेत्।

यस्य देवे परा भक्तिः यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥

इति श्रुतेः। इति श्रीमत्परमहंस परिव्राजकाचार्य्य श्रीभगवत्
गोविन्दपादपूज्यशिष्य श्रीशंकराचार्य्यविरचिताज्ञान-
बोधिनी सम्पूर्णा।

---

## दुर्भिक्षे प्रार्थना।

१८१८ शकाब्दे

१३०३ वङ्गाब्दे

१८८६।१८८७ खृष्टीयाब्दे

देव, श्रीराम, भक्ताश्रित, नवजलदश्याम, लोकाभिराम
क्वाप्यन्तर्धानमेव ध्रुवमसि गतवांश्चेतसोऽपि प्रजानाम्।
नोचेत्कस्मादिदानीं पुनरपि बहवोऽवग्रहाद्या नरादाः
प्रादुर्भूता ग्रसन्ते सपदि जनपदान् भारते तावकेऽपि॥ १॥

---

विष्णोरवतारस्य रामस्यापि विश्वरूपतया मेघ तादात्म्येन स सम्बोध्य प्रार्थ्यते। राम: पक्षेऽर्थः सुगमः। प्रजानां दृष्टेः सकाशात्तु अन्तर्धानं गतोऽस्येव इदानीं चेतसः सकाशा-दपि गतवानसीति भावार्थः; मेघपक्षे हे नवजलद, श्रिया शोभया राम मनोज्ञ ( त्रिषु:

तोयं नो देहि देहीत्यहह विलपतो रावयन् सर्वं लोकान्
आच्छिद्याशा अपीन्द्रं जयति सरभसं रावणोऽवग्रहोऽयम्।
सीतां जातां धरण्या अपि तव दयितां साम्प्रतं हर्त्तुकामः
क्षोणीपृष्ठेऽवतीर्णो भ्रमति तनुमतां संहरन् जीवनानि ॥ २ ॥

दुर्भिक्षं नाम रक्षस्तदनुचरमिव व्याददात्यास्यरन्ध्रं
घोरं पातालरन्ध्रप्रतिनिधि युगपद्भारतं भक्षितुं किम्।
एषा मारी पिशाची कवलयति बलात् त्वत्प्रजानां प्रजानां
दुर्वारा जीवितानि प्रकटितदशना तस्य च प्रेयसीव ॥ ३ ॥

एषानावृष्टिनाम्नी जनयति निकषा सन्ततिं राक्षसानां
भक्तत्राणार्थमेतां परिभव विभवेनासिधाराभिवर्षी।
स्त्रीत्येनां मा दयिष्ठा जघनिथ हि पुरा ताटकामस्तपां त्वं
प्रोज्झितां दण्डधारः स्त्रियमपि जगतः शान्तये हन्ति हन्त्रीम् ॥ ४ ॥

धात्री सन्तप्तगात्री स्पृहयति करुणादृष्टिवृष्ट्यै तवैषा
मेघस्येवोदयं ते पुनरहह जनाश्चातका वाञ्छयन्ते।
निर्मर्य्यादं प्रवृत्तं कलय लयमिमे यान्ति लोका अकस्मात्
उत्पद्यन्ते समन्तादनु शृणु दिवसमप्यार्त्तनादाः स्पृशन्तः ॥ ५ ॥

---

धात्री इति मेदिनी ) हे भक्तैः भक्तैराश्रित कारुण्येन अपेक्षितेति यावत्। हे श्याम!
अन्यत् तुल्यम्। नराशाः राक्षसाः ॥ १ ॥

रावयति लोकान् इति रावण इत्यर्थं संघटयति रावयन्नित्यनेन। रावण पक्षे आशा दिशः। इन्द्रो देवराजः। सीता जानकी। अवग्रह पक्षेतु आशाः लोकानां शस्यप्राप्त्याशाः। इन्द्रो मेघः। सीता लाङ्गलपद्धतिः। जीवनानि जलानि संहरन् शोषयन्। अवग्रहो वृष्टिप्रतिबन्धः ॥ २ ॥

त्वत्प्रजानां प्रजानां तुभ्यं राजस्वं दत्तवतां जनानां सन्ततीनां तद्वंशे जातानामित्यर्थः। एतेन त्वत्सम्बन्धोऽव्यापि भारते न लुप्त इति भावः। मारी मृग् इति ख्याता सुस्पष्टं प्रदेशे प्रचलिता ॥ ३ ॥

रामपक्षे भक्तत्राणार्थं सेवकजनरक्षार्थम्। असिधाराभिवर्षी खड्गधारया प्रहरन् विभवेन परिभव शक्त्या नाशय। मेघपक्षे तु भक्तत्राणार्थं अन्नरक्षार्थं परिभव। यतो विभवेन शक्त्या धाराभिवर्षी जलधारावर्षी असि भवसि इत्यर्थः ॥ ४ ॥

मर्य्यादा लोकस्थितिः तस्या अभावो निर्मर्य्यादम् ॥ ५ ॥

वृष्टिः संघादिदानीं न पतति पतति त्वीक्षणेभ्यः प्रजानां
चैत्रे पङ्कप्रवृत्तिर्न भवति भवति त्वद्य चित्ते खलानाम् ।
सन्धिः शिष्टेषु नैवोल्लसति लसति तु स्तेनदुष्टेषु कामं
दुर्भिक्षेणात्तुमिष्टं जगदिदमखिलं किं विपर्य्यासितं नु ॥ ६ ॥

देवः क्लीवः सुरेन्द्रः शिवशिव कृपणा हन्त मेघाश्च मोघाः
कासाराः पङ्कसारा विफलतरुलता भूमिरन्तर्विदीर्णा ।
निःस्नेहं चेतजातं निखिलमपि खिलं, किं नु सर्वा त्रिलोकी
दुर्भिक्षादेवभीता चिरपरिचितमप्यद्य धर्मं जहाति ॥ ७ ॥

क्षुद्राः शूद्रा दरिद्रा यदहह नगरग्रामहट्टापणेषु
द्रव्यं लुण्ठन्ति पङ्कव्यतिकरमलिनैर्वर्त्मभिस्तन्न चित्रम् ।
यत्तु ख्रीष्टीयधर्म्मध्वजिभिरुपहृता ब्राह्मणा अप्युदारा
धर्मं मुञ्चन्ति दग्धोदरभरणकृते तद्धि चित्रं विचित्रम् ॥ ८ ॥

केचिद्दुर्भिक्षरक्षःकवलनिपतिताः सद्य एव म्रियन्ते
हन्ताद्यश्वीनमन्ये मरणमशरणा निर्धनास्तर्कयन्ति ।
एके कङ्कालशेषाः सुचिरमनशनाः किन्नु जीवत्परेताः
चिन्तादीनास्तथान्ये बत गृहपतयस्त्वां कथं नार्द्दयन्ति ॥ ९ ॥

---

ईक्षणेभ्यो वृष्टिरश्रुधारापातः । चैत्रे पङ्कप्रवृत्तिः कर्द्दमोत्पत्तिः । खलानां चित्ते तु पापकर्म्मणां प्रवञ्चनादीनां प्रवृत्तिरिच्छा । शिष्टेषु सन्धिः सङ्घटनम् । स्तेनदुष्टेषु चौरेषु दुष्टेषु च सन्धिः सुरङ्गाखननम् । सन्धिः पुमान् सुरङ्गायां भगे सङ्घटनेऽपि च इति मेदिनी । अत्तुमिष्टं भोक्तुमभिलषितं वस्तु परिवर्त्य प्रथमतो दृश्यते तद्वत् किं नु विपर्य्यासितं परिवर्त्तितमिति भावः ॥ ६ ॥

क्लीवो वृष्टिदानाक्षमः अतएव पुरुषत्वहीनः । निःस्नेहं नीरसम् अतएव प्रेमशून्यं जगत् प्रतीतिभावः । खिलम् अप्रहतं कर्षणरहितमित्यर्थः ॥७॥

पङ्कव्यतिकरमलिनैर्वर्त्मभिः पापसम्पर्कदूषितैरुपायैः बलप्रयोगादिभिः । सुन्दर-प्रदेशेषु केचिद् ब्राह्मणा अपि ख्रीष्टीयधर्म्मवक्तृभिर्विप्रलब्धा अन्नच्छात्रं भुक्तवन्तः श्रूयन्ते । तान् प्रति उक्तिरियम् ॥ ८ ॥

अद्य श्वो वा भवतीति अद्यश्वीनम् । जीवत्परेताः जीवन्तोऽपि प्रेतवत् कुत्सितदर्शनाः ॥ ९ ॥

नो सम्राट् नापि सम्राट्-प्रतिनिधितिलको नापि सभ्यास्त्वदीया
नो वा सामन्तवीरा न च बलपतयो नापि वैद्याः प्रसिद्धाः।
दुःसाधान् राक्षसांस्तानभिभवितुमलं नापरे वा नरेन्द्राः
को वान्यस्त्रातुमीष्टे धरणिमशरणां त्वद्विना राक्षसेभ्यः॥ १०॥

लोकांस्ते राम राम स्मृतिमपि जहतो हन्त नावेक्षसे चेत्
सन्तानां स्वत्प्रजानामपि, तदपि दयावारिधे गोर्दयस्व।
नैतां सीताप्रसूमप्यथ यदि दयसे, तर्ह्यपाकृष्यमाणां
सीतामप्युद्धरेमां तव दयिततमां रक्षसावग्रहेण॥ ११॥

एतान् हन्तुं न चेत्त्वं स्वयमवतरसि क्ष्मां तदा स्वानुरूपान्
स्निग्धश्यामान् भुवापि प्रहिणु ननु जगन्नाथ मेघानमोघान्।
जानीमस्तेऽपि विष्णो तव पदमुदितास्तानिमां स्विन्नचापा
हन्युर्विद्युज्जटालास्तमिव विषधरैः सिंहनादं नदन्तः॥ १२॥

दातारो रक्षितारो भवत बत नृणां राक्षसोपद्रुतानां
पुण्यं रामस्य तेजो हृदयनभसि वोऽद्यापि जागर्त्ति नूनम्।
ईदृक् पुण्यार्ज्जनस्याप्यवसरसमयो दुर्लभः पुण्यशीलैः।
अद्यैकस्यापि रक्षामपरिमितफलां वेद्मि लोकद्वयेऽपि॥ १३॥

दानं नास्त्यन्नदानात्परमपरमिहेत्यार्य्यशास्त्रं स्मरन्तः
श्रद्धावन्तस्त्वरध्वं कुरुत समुचितं भोज्यदानं प्रजाभ्यः।
अन्नं प्राणाः प्रजानां मतमिति यदि तत् दत्य तत्तर्हि जाने
प्राणानामिव दानं बहुगुणमधुना प्राणकृच्छ्रे तु साक्षात्॥ १४॥

---

राक्षसानां मध्ये मार्य्यां अपि कथनात् प्रसिद्धा वैद्या अपीत्युक्तं दुःसाधान् अप्रति-कार्य्यान्॥ १०॥

गोः पृथिव्याः। सीताप्रसूः जानक्याः लाङ्गलपद्धतेश्च जनिका अवग्रहेण रक्षसा अपाकृष्यमाणामित्यन्वयः॥ ११॥

तव पदम् उदिताः विष्णुपदमाकाशमुत्पतिताः। विषधरैः विषवत् प्राणहरैः शरैरिति रामपक्षे। मेघपक्षे तु जलैः शरस्तदृशैः। विषं जलेऽतिविषायां स्त्रियां क्वेडे तु न स्त्रिया-मिति मेदिनी। सिंहनादं नदन्तः सिंहा इव नदन्तः॥ १२॥

एकं द्वौ वा बहून् वा व्यसनमधिगतान् जीवयित्वान्नदानैः।
खातं वा खानयित्वा शिशिरतदम्बुतैस्तर्पयित्वा वितीर्णैः।
कीर्त्तिं ज्योत्स्नावदातस्मितसुभगसुखीं वल्लभामर्ज्जयध्वं
धाम ग्रामं पुरं वा जनपदमथवा भूषयध्वं तया च ॥ १५ ॥
कीर्त्त्या वो जीवलोको भवतु शशिरुचा चन्द्रलोकायमानः
तस्मिन् जीवन्त एव प्रतिवसत सदा मोदपीयूष पानाः।
दातरो हीरचूड़ामणितरलरुचा दानकीर्त्त्या तया वा
मूर्द्ध्नो वः कोहिनूरश्रियमधिगतयाभ्युन्नतान् भूषयध्वम् ॥ १६ ॥
किं वा तं कीर्त्तिपूरं कुरुत निजहृदीमण्डनं कौस्तुभं वा
श्रीमन्तं दानसिन्धुप्रभवमधिगुणं सोदरं शीतरश्मेः।
प्रीतैः शुद्धैः कराग्रैर्हृदयमविरतं तेन वो मृश्यमानं
लक्ष्मीलीलैकतल्पं हृदयमिव हरेः शान्तसन्तापमस्तु ॥ १७ ॥
वार्त्तापत्रेषु मुद्राङ्कितमथ गुरु वा पण्डितैस्तद्यशो वो
नृणामुद्गायतां वा वदनपरिसरेष्वोच्यतां सर्वलोकैः।
मानं तेष्वप्यलब्ध्वा प्रसरतु किमु वा दिक्षु सर्वासु गर्वात्
त्रैलोक्यं व्यश्नुतां वा जगति मितिमिहाप्यप्रपद्येव सद्यः ॥ १८ ॥

तर्कचूड़ामण्युपाधिकस्य
श्रीमहेशचन्द्र शर्म्मणः
दिनाजपुरान्तर्गत
राजारामपुर निवासिनः ॥

---

कोहिनूरश्रियम् सम्राज्ञी भिक्टोरियायाः शिरसि स्थितस्य हीरकस्य शोभाम् ॥१६॥
अधिगुणं औज्ज्वल्यादिगुणानधिगतं मूत्तमधिगतञ्च। सोदरं एकत्र सिन्धौ जातं
सहजञ्च। कराग्रैः रश्मिच्छटाभिर्हस्ताग्रैश्च तेन कीर्त्तिपूरेण कौस्तुभेन च। मृश्यमानम्
आमृश्यमानम् आदरेण स्पृश्यमानमित्यर्थः ॥ १७ ॥
तत् यशः वार्त्तापत्रेषु पण्डितैः लिपिपाठज्ञैरीत्यताम्। नृणां वदनपरिसरेषु मुखस्य
पर्य्यन्त भूमिषु सर्वलोकैर्वा ईत्यतां दृश्यताम् ॥ १८ ॥

# धर्मविवेकः ।

( पूर्वप्रकाशितात्परम् )

वामापद । भगवन् ! प्रणतोऽस्मि ।

शिव । किमपरं श्रोतुमभिलषसि ? ।

वामा । भगवन् ! प्रष्टुमेकं बिभेमि, सहस्रशः क्षतक्षदर्थः ।

शिव । नात्र भयस्यावसरः । सर्वं एव कथितप्रायः । यदि किञ्चिदपरं वर्त्तते वेदितव्यं तर्हि ब्रूहि ।

वामापद । भगवन् ! कालोऽयं प्रवर्त्तमानः प्रबलीयान् कलिः । तत्र श्रीमदुक्तं धर्मं सम्यक् पालयितुं कतमाः प्रभवन्ति ? ।

शिव । (विहस्य) त्वं किमेवं मन्यसे मुनयो धर्मप्राणा नृशंसा आसन् ? ते किं समयानुरूपं धर्मं नादिष्टवन्तः ? अहो ते अतीव दयार्द्राः देशं कालं पात्रादिकञ्च सुष्ठु विचार्य्यैव धर्मं व्यवस्थापितवन्तः । पश्य तावद्दृष्टान्तं किञ्चिद्दर्शयामि । दिवसे रात्रौ च क्रियाभेदो व्यवस्थापितो धर्मस्य । तथाहि ।

"दिवा शौचन्तु यत् प्रक्तं रात्रौ तस्यार्द्धमिष्यते ।
आतुरे नियमो नास्ति पथि शूद्रवदाचरेत् ॥
गृहे सम्पूर्ण आचारस्तदर्द्धं परवेश्मनि ।
तदर्द्धं राजसेवायां पथि शूद्रवदाचरेत् ॥"

अथाधुना चतुर्णां वर्णानामापदि धर्मव्यवस्था कथ्यते । तत्र पराशरः

"यस्मिन् काले च ये धर्मा यत्र काले च ये द्विजाः ।
तत्र ते नावमन्तव्या युगरूपा हि ते यतः ॥"

तत्र याज्ञवल्क्यः ।

क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः ।
निस्तीर्य्यतामथात्मानं पावयित्वा न्यसेत् पथि ॥
फलोपलक्षौमसोमनुष्यापूपवीरुधः ।
तिलौदनरसक्षारान्दधि क्षीरं घृतं जलम् ॥

शस्त्रासवमधूच्छिष्टं मधु लाक्षा च बर्हिषः ।
मृच्चर्मपुष्पकुतुपकेशतक्रविषक्षितीः ॥
कौशेयनीललवणमांसैकशफसीसकान् ।
शाकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च ॥
वैश्यवृत्त्यापि जीवन्नो विक्रीणीत कदाचन ।
धर्मार्थं विक्रयं नेयास्तिला धान्येन तत्समाः ॥
लाक्षालवणमांसानि पतनीयानि विक्रये ।
पयो दधि च मद्यं च हीनवर्णकराणि तु ॥
आपद्गतः संप्रगृह्णन् भुञ्जानो वा यतस्ततः ।
न लिप्येतैनसा विप्रो ज्वलदग्निसमो हि सः ॥
कृषिः शिल्पं भृतिर्विद्या कुसीदं शकटं गिरिः ।
सेवानूपं नृपो भैक्ष्यमापत्तौ जीवनानि तु ॥
बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत् ।
प्रतिगृह्य तदाख्येयमभियुक्तेन धर्मतः ॥
तस्य वृत्तं कुलं शीलं श्रुतमध्ययनं तपः ।
ज्ञात्वा राजा कुटुम्बं च धर्म्यां वृत्तिं प्रकल्पयेत् ॥ *

अथ वानप्रस्थधर्मः ।—(याज्ञवल्क्यः)

सुतविन्यस्तपत्नीकस्तया वानुगतो वनम् ।
वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत् ॥
अफालकृष्टेनाग्नींश्च पितॄन्देवातिथीनपि ।
भृत्यांश्च तर्पयेत् श्मश्रु नखलोमभृदात्मवान् ॥
अह्नोमासस्य षण्णां वा तथा संवत्सरस्य वा ।
अर्थस्य सञ्चयं कुर्य्यात् कृतमाश्वयुजे त्यजेत् ॥
दान्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात् ।
स्वाध्यायवान्दानशीलः सर्वसत्त्वहिते रतः ॥

---

* विशेषतो मनुसंहितायां १०माध्याये ज्ञातव्यः ।

दन्तोलूखलिकः कालपक्वाशी वाश्मकुट्टकः।
श्रौतं स्मार्त्तं फलस्नेहैः कर्म कुर्य्यात्तथा क्रियाः॥
चान्द्रायणैर्नयेत् कालं कृच्छ्रैर्वा वर्त्तयेत् सदा।
पक्षे गतेऽप्यथाश्नीयान्मासे वाहनि वा गते॥
स्वप्याद्भूमौ शुचीरात्रौ दिवा संप्रपदैर्नयेत्।
स्थानासनविहारैर्वा योगाभ्यासेन वा तथा॥
ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः।
आर्द्रवासास्तु हेमन्ते शक्त्या वापि तपश्चरेत्॥
यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति।
अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च॥
अग्नीन् वाप्यात्मसात् कृत्वा वृक्षावासोऽमिताशनः।
वानप्रस्थगृहेष्वेव यात्रार्थं भैक्ष्यमाचरेत्॥
ग्रामादाहृत्य वा ग्रासानष्टौ भुञ्जीत वाग्यतः।
वायुभक्षः प्रागुदीचीं गच्छेद्वा धर्मसंक्षयात्॥ *

अथ यतिधर्मः। (याज्ञवल्क्यः)

वनाद्गृहाद्वा कृत्वेष्टिं सार्व्ववेदसदक्षिणाम्।
प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि॥
अधीतवेदोजपकृत् पुत्रवानन्नदोऽग्निमान्।
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्य्यात्तु नान्यथा॥
सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः।
एकारामः परिव्रज्य भिक्षार्थी ग्राममाश्रयेत्॥
अप्रमत्तश्चरेद्भैक्ष्यं सायाह्नेऽनभिलक्षितः।
रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः॥
यतिपात्राणि मृद्वेणुदार्व्वलावुमयानि च।
सलिलं शुद्धिरेतेषां गोवालैश्चावघर्षणम्॥

* अस्यापि विशेषार्थो मिताक्षरायां द्रष्टव्यः।

संनिरुद्धेन्द्रियग्रामं रागद्वेषौ प्रहाय च ।
भयं हित्वा च भूतानाममृतीभवति द्विजः ॥
कर्त्तव्याशयशुद्धिस्तु भिक्षुकेण विशेषतः ।
ज्ञानोत्पत्तिनिमित्तत्वात् स्वातन्त्र्यकरणाय च ॥
अविद्या गर्भवासाश्च कर्मजा गतयस्तथा ।
आधयो व्याधयः क्लेशा जरारूपविपर्य्ययः ॥
भवो जातिसहस्रेषु प्रियाप्रियविपर्य्ययः ।
ध्यानयोगेन संपश्येत् सूक्ष्म आत्मात्मनि स्थितः ॥ इति ।

एवमन्येष्वपि मन्वत्रि-विष्णु-हारीत-याज्ञवल्क्योशनाङ्गिरो-यमा-पस्तम्बसम्वर्त्त-कात्यायन-बृहस्पति-पराशर-व्यास-शङ्ख—लिखित-दक्ष-गोतम-शातातप-वशिष्ठसंहितासु पुराणादिषु च विशेषो धर्मो ज्ञातव्यः ।

पूजादिकन्तु पौराणिकं तान्त्रिकं वा मिश्रं वा महाजनोपदिष्टं समाश्रय श्रद्धायुक्तस्तत्र सर्वमेव मतमधिकारिदेशभेदादविरुद्धं अभ्युदय-निःश्रेयससिद्धिकरमिति सर्वमवदातम् । शिवमिति ।

## ग्रन्थकृत्परिचयः ।

नोयाखालीनगर्य्यन्तर्नामतो घोषकामता ।
ग्रामः स जन्मभूमिर्मे गरीयान् स्वर्गतोऽपि च ॥
महात्माजयगोपालविद्याभूषण ईश्वरः ।
भट्टाचार्य्यः पिता देवी माता श्रीशिवसुन्दरी ॥
श्रीमान् भुवनचन्द्रः सिद्धान्तचूड़ामणिर्मुनिः ।
अनुजः पूर्ववङ्गेष्वद्वितीयः पण्डितोऽधुना ॥
गाम्भीर्य्येण समुद्रोऽसौ स्थैर्य्येण धरणीधरः ।
शीलेन रामचन्द्रोऽसौ त्यागाद्या जीमूतवाहनः ॥
सप्तभ्रातृषु विज्ञेषु चतुर्थोऽहमपुत्रकः ।
न दुःखी भ्रातृपुत्रैस्तु स्निग्धैः अज्ञातुभिः सदा ॥

सामगः कौथुमी वात्स्यान्वयः श्रीजयचन्द्रकः ।
सिद्धान्तभूषणोपाख्यः विप्रपादरजोबलः ॥

अधीतमध्यापितमर्जितं यशो न शोचनीयं किमपीह वस्तुनः ।
अतश्चिरं श्रीजयचन्द्रशर्मणो मनो मनोहारिणि जाह्नवीतटे ॥
अष्टादशाष्टादशशाकवर्षे रवेर्दिने फाल्गुनपञ्चविंशे ।
समाप्तवं धर्मविवेकमेतं गङ्गातटे भारतराजधान्याम् ॥ इति

## कलापव्याकरणे दुर्गसिंहः ।

( पूर्वप्रकाशितात्परः )

तानि च दुर्गकृतसर्वाणि वक्तव्यान्युपजीव्य श्रीपतिना कातन्त्र-परिशिष्टं लिखितम् ।

यद्यपि दुर्गसिंहेन का जातिः को वा धर्मः कतमो वा देशो जन्मनालङ्कृत इति सम्यक् निर्णेतुं न सम्भाव्यते । तथापि प्राचीनोद्भटश्लोकात् द्विजपण्डितवचनाच्च कथञ्चिद्विचार्य्यते ।

आसीत् पुरा असवर्णेष्वपि परिणयो धर्मानुमोदितः । तेन हि धर्मधुरीणः शवरस्वाम्यपि चतुर्षु ब्राह्मणादिषु वर्णेषु सर्वतोऽनवद्याः स्वतस्तः कन्याः पर्य्यणैषीत् ।

तत्र ब्राह्मण्यां वराहमिहिरः, क्षत्रियायां विक्रमादित्यो भर्त्तृहरिश्च, वैश्यायां हरिचन्द्रः शङ्कुश्च, शूद्रायाममरसिंह इत्येते शवरस्वामिनः षट्पुत्रा जातवन्तः ।

तथाच प्राञ्चः ।

"ब्राह्मण्यामभवद्वराहमिहिरो ज्योतिर्विदामग्रणीः,
राजा भर्त्तृहरिश्च विक्रमनृपः क्षत्रात्मजायामभूत् ।
वैश्यायां हरिचन्द्रवैद्यतिलको जातश्च शङ्कुः कृती,
शूद्रायाममरः षडेव शवरस्वामिद्विजस्यात्मजाः ॥"

एतेन शवरस्वामिनोऽमरसिंहप्रभृतयोऽसवर्णदार-सम्भूतास्ते परस्परं वैमात्रेया आसन्नित्यायाति । ततश्च क्षत्रियातनयो विक्रमा-

दित्यः शौर्य्येण उज्जयिन्यां राजा बभूव । शास्त्रप्रियत्वाच्च वैमात्रेय-नेव वराहमिहिरादीन् सभ्यत्वेनार्चितवान् । ते च राजप्रसादमापन्ना वीतचिन्ताश्च विविधेषु शास्त्रेषु प्राविण्यं गतवन्त इति ।

यमधुना अमरसिंहत्वेन समुल्लिखामि तमेव पुनर्दुर्गसिंहत्वेन जनाः प्रवदन्ति । तथा हि प्रथमतो दुर्गसिंहः पाणिनिव्याकरणे समधिगतनैपुण्यः नातिप्रख्यातानां शर्ववर्मसूत्रजातानां वृत्तिं विरचय्य विद्वत्सु विद्यार्थिषु च कथं कथमपि प्रचारितवान् । तदनु-कलापाध्येतॄणां केषाञ्चित् तत्राशङ्कसाकलस्य कुत्राप्यसम्पूर्णतामनु-माय च सोत्साहं पुनः गुरुतरार्थां प्रभूतजिज्ञास्यविषयिकां टीकां व्यरचयत् ।

किन्तु तथापि सर्वतः प्रद्योतमानकीर्त्तिः पाणिनिव्याकरणस्य गतिवेगं प्रतिरोद्धुमशक्नुवन् प्रत्याच्चिप्तपाणिनिर्दुर्गसिंहः क्षितौ निर-पेक्षपातां सुख्यातिं न प्राप ।

ततश्च सुचिरमात्मानो यशः स्थास्नु विधातुं धीरं विचार्य्य च चेतसि "नामलिङ्गानुशासन"नामकं कोषं निर्माय विक्रमादित्य-पादाय समुत्सृष्टवान् । तेन च राज्ञा तदद्दृष्टाश्रुतपूर्वमेकार्थ-बहुपर्य्यायकमभिधानमभीक्ष्णं दृष्ट्वा यशसा तममरीकर्त्तुं आन-न्दनिर्भरेण दुर्गसिंहाय "अमरसिंह"इत्युपाधिः प्रदत्तः ।

ततः प्रभृत्येव दुर्गसिंहः अमरसिंहेति नाम्ना सर्वत्र परिगीतः ।

तथा चामरकोषटीकायां श्रीकण्ठः—

"दुर्गसिंह"प्रचरिते नाम लिङ्गानुशासने ।
लभते ह्यमरोपाधिं राजेन्द्रविक्रमेण सः ॥
विद्याकीर्त्तिप्रभावेणामरत्वं लभते नरः ।
स रत्नं नवरत्नानां तद्गुणेन सुशोभितः ॥" इति ।

नवरत्नं पुनरस्य विक्रमादित्यस्य ।

"धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कु
वेतालभट्ट-घटकर्प-कालिदासाः ।

ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥" इति।

अयन्तु वररुचिः द्वितीयः कथासरित्सागरधृतवररुचेरन्यः कृत्सूत्रकृत इत्यनुमीयते। समश्रीर्षेण तत्कालवर्त्तिना कृतस्य कृतोऽमरापरनाम्ना दुर्गसिंहेन तद्वृत्तिकरणासम्भवात्।

अपि च। पुरा एकस्य बहु नामापि प्रचलितमासीत्। का वार्त्तेति पूर्वकालीनस्य श्रीकृष्णादेः। परन्तु नातिप्राक्तनस्य चन्द्रगुप्त-मन्त्रिणश्चाणक्यस्यापि हेमचन्द्रेणाभिधानकृता बहुनामाभिहितम्। यथा—अभिधानचिन्तामणौ मर्त्यकाण्डे।

"वात्स्यायनो मल्लनागः कौटिल्यश्चणकात्मजः।
द्रामिलः पक्षिलस्वामी विष्णुगुप्तोऽङ्गुलश्च सः॥"

अत एकस्य नामद्वयं नाति विरुद्धम्। सुतरां दुर्गसिंहस्यापि अमरसिंहेति नाम नासङ्गतम्। कलापचन्द्रकृता सुसेनाचार्य्येण व्युत्पत्तिरप्येवं दर्शिता दुर्गसिंहनाम्नः यथा हि—

"कातन्त्र-दुर्गमव्याख्या दुर्गसिंहेन सूरिणा।
सिंहवत् सत्वरं सृष्टा दुर्गसिंहोऽभवत् ततः॥"

एवं "दुर्गे विषमपदे सिंह इव सिंहः दुर्गसिंहः।" इत्यादि कलापचन्द्रः।

एव ममरसिंहस्य शब्दशास्त्रनैपुण्यमपि स्वीकृतं कविकल्पद्रुमे वोपदेवेन। यथा हि—

"इन्द्रश्चन्द्रः काशकृत्स्नापिशली-शाकटायनाः।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः॥

अधुना दुर्गसिंहः किंधर्मावलम्बीति विचार्य्यते। अनेके तं बौद्धमिति निर्दिशन्ति। यतोऽमरापरनाम्ना दुर्गसिंहेन नामलिङ्गानुशासने मङ्गलाचरणश्लोके "यस्य ज्ञानदयासिन्धो" इत्यत्र स्पष्टता

। अत्र प्रतिभावलेन कीचन् ... कीच हृष्णु

एवं सर्व्वेषां देवानां पूर्व्वं बुद्धस्यैव नामपर्य्यायः संमान्यत्वेन लिखितः।

मया तु मन्यते तदानीं बौद्धानां प्राबल्यात् आर्य्यधर्म्मिणाञ्च तद्विद्वेषित्वात् तयोरेकतरधर्म्मनिश्चये परस्परं तमुपेक्षेरन्। तत्कृतशास्त्रञ्च न कोऽप्याद्रियेरन्नित्युभयसंप्रदायमनोरक्षार्थं शिवपरं बुद्धपरञ्च सर्व्वं नमस्कारश्लोकं स निबबन्ध। तथा हि सन्धिवृत्तौ—

"देवदेवं प्रणम्यादौ सर्व्वज्ञं सर्व्वदर्शिनम्।
कातन्त्रस्य प्रवक्ष्यामि व्याख्यानं शार्व्ववर्म्मिकम्॥" *

अत्र "सर्व्वज्ञं" शिवं बुद्धञ्च। तथा चामरः—

"कृशानुरेताः सर्व्वज्ञो धूर्ज्जटिर्नीललोहितः।"
"सर्व्वज्ञः सुगतो बुद्धो धर्म्मराजस्तथा गतः॥" इति

अत्र शिववाचके सर्व्वज्ञपदे साक्षात् सति किमिति "देवदेवेति" पदेन शिवबोधनार्थं त्रिलोचनदासः खण्डप्रलयं कृतवान् तत् स एव जानातु।

अपिच सन्धिटीकायां दुर्गसिंहः—

"शिवमेकमजं बुद्धमर्हन्तं तं स्वयम्भुवम्।
कातन्त्रवृत्तिटीकेयं नत्वा दुर्गेण रच्यते॥"

अत्रापि शिवं महादेवं मङ्गलकरञ्च। बुद्धं ज्ञानिनं बुद्धञ्च। अर्हन्तं बुद्धविशेषं पूज्यञ्च (†) इति सर्व्वमेव पदं द्व्यर्थकत्वेन योजितम्।

अपिच षट्कारिकायां दुर्गसिंहः—

---

* श्लोकोऽयं वररुचेरपि दुर्गेणाहृतः। तथा च सन्धिपञ्ज्यां त्रिलोचनदासः।—"ननु वररुचेः श्लोकोऽयं तत् कथं वृत्तिकारः श्लोकमेकञ्चकार देवदेवेत्याद्युक्तम्। सत्यमन्यत्र फलसिद्धावस्यकारणतया दृष्टत्वात् अत्रापि स एव लिखितः। किन्तु समानानुपूर्व्विकत्वान्न दोषः" इत्यादि।

† अर्हन् पूज्यो मान्यः स्तुतः इति मेदिनी। "यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते" इति कुमारे। "त्वमर्हतामग्रसरः स्मृतोऽपि नः" इति शाकुन्तले।

"भग्नं मारबलं येन निर्जितं भवपञ्जरम्।
निर्वाणपदमारूढं तं बुद्धं प्रणमाम्यहम्॥"

अत्रापि शिवपरं बुद्धपरञ्च व्याख्यानं शक्यम्।

किञ्च चतुष्टयवृत्तौ उदाहरणस्थले शिवोऽप्यर्चितत्वेन दृष्टान्तितः। तथाहि—

"रुद्रो विश्वेश्वरो देवो युष्माकं कुलदेवता।
स एव नाथो भगवानस्माकं पापनाशनः॥"

वस्तुतस्तु बुद्धस्यापि विष्णोरवतारत्वात् शिवविष्ण्वोस्त्वभेदत्वात् उद्देश्यो न व्याहन्यते परमज्ञानिनस्तस्य दुर्गसिंहस्य।

केवलं बौद्धानामपि मध्ये स्वव्याकरणस्य प्रसृतये बुद्धनाम्ना शिवो नमस्कृतस्तेन। इति सर्वं सङ्गतम्।

---

## मोहमय्यां (मुम्बयीप्रदेशे) प्रसरतो ज्वरस्य निर्णयः।

य इदानीं मोहमय्यां मारात्मको ज्वरः सर्वानेव विनाशयति, तत्र किल बहवश्चिकित्सकाः स्वाभिप्रायमाविष्कुर्वते। केचिदिमं ग्रन्थिविसर्पं ब्रुवते। अपरे त्वस्याग्निरोहिणीत्वं स्थिरीकुर्वते। अन्ये ग्रन्थिकसन्निपातोऽयमिति वक्ष्यन्ते। इतरे तु व्रध्नज्वरोऽयमित्याहुः। न चैकमप्यत्र चिकित्साशास्त्रस्याविरुद्धम्। अस्य च महाज्वरस्य पूर्वरूपसम्प्राप्त्यादिकं प्रतिपदोक्तं न क्वचिदपि दृश्यते। नापि प्रत्यक्षीकर्तुं शक्यते एतज्ज्वरग्रस्तो जीवितापेक्षिभिरगदङ्कारैः। अतोऽस्य पूर्वरूपादिकं संवादपत्रिकात एवावगत्य निदाननामादिकं निर्णीयते।

तत्र तावत् संवादपत्रिकास्वस्येतिवृत्तमेवमुपवर्ण्यते। यथा— "ज्वरान्तरेष्विवात्रापि ज्वरोत्पत्तेः प्राक् शिरःशूलः, अङ्गमर्दो ग्लानिश्चेत्यादिनी पूर्वरूपाणि भवन्ति। कुत्रचिद्वा शीतसमुद्भवो दृश्यते। बहूनां च प्रायो हृल्लासश्छर्दिश्चोद्भवति। क्वचिदतिसारोऽपि प्रादुर्भ-

वति। एवं भूते च सपदि महावेगो ज्वरो मानुषं व्याकुलयति। रूपावस्थायां तु तन्द्रा, प्रलापो, रसनागौरवं, कर्णयोर्मनाग्बाधिर्य्यं-चाविर्भवति। ज्वरिणश्चर्य्यातु पीतमद्यस्य पुरुषस्येव निष्प्रभप्राया भवति। ततोऽनतिचिरादेव मन्याकुचिवङ्क्षणानामन्यतमास्मिन् स्थाने ग्रन्थिलः शोफः प्रादुर्भवति। तत्र च ग्रन्थौ तोददाहौ सञ्जायेते। भिषजैरविलीनोऽसौ ग्रन्थिः स्वयमेव पक्कः प्रवहति। ज्वरिणश्च तथा चीयते शक्तिर्यथा चतुर्विंशतिहोराभ्यन्तर एवायं शमनसदनप्रणयी भवति। केचित् तु त्रिचदिनैरपरे च पञ्चषदिनैस्तथाविधत्वमाप्नुवन्ति। विरलास्तूल्लाघतामधिगच्छन्ति रुग्नाः। प्रायेण हि प्रतिशतकं नवतिर्म्रियन्ते। प्रयुक्ते तु भेषजे मनाक् स्वास्थ्यमापन्नो मन्दीभूतज्वरोऽपि रोगी सपदि प्रचीणनाड़ीकः शीतलीभूतगात्रश्च करालकालकवलसाद्भवति। ज्वरेऽत्र ग्रन्थ्युत्पादोऽपि प्रायिक एव ग्रन्थिमन्तरापि हि बहवो म्रियन्ते। अत्र च ग्रन्थिरप्रधानो ज्वरस्तु प्रधानः। यस्तु ज्वरी व्यतीतेऽपि सप्ताहेऽनपेतप्राणः स सग्रन्थिको निर्ग्रन्थिको वा प्रायेण सुखसाध्यो भवति। विरलस्तु दुःसाधः"।

एवञ्च विचार्य्यमाणे ज्वरस्यास्य सन्निपातजत्वं निःसन्देहं पर्यवस्यति। तथाहि पूर्वरूपे शूलाङ्गमर्दौ वातिकौ आलस्यं श्लैष्मिकं पैत्तिकी च ग्लानिः। अतः पूर्वरूपेणापि सन्निपातत्वमेवास्यानुमीयते। क्वचित् तु कफवाताधिक्याच्छीतोत्पत्तिः। पित्तोल्वणत्वाच्च क्वचित् हृल्लासच्छर्य्यतिसाराः। एवं रूपावस्थाप्यस्य सान्निपातिकत्वं बोधयति। यच्च मन्यादिषु ग्रन्थ्युद्भवः सोऽपि सान्निपातिक एव। सन्निपातज्वरलक्षणे—

"कोठानां श्यावरक्तानां मण्डलानां च दर्शनम्" इत्युक्ते।

कोठस्त्वव्यक्तमुखः पिटिकाविशेषः। यत् तु क्वचित् ग्रन्थेरदर्शनं तदपि नाश्चर्य्यकरं नापि सन्निपातलक्षणविरुद्धम्। तस्य सन्निपातस्य विकृतिविषमसमवेतत्वात् विकृतेश्च नियमाभावात्। अत

एवायुर्वेदग्रन्थेषु नानाविधानि सन्निपातलक्षणानि दृश्यन्ते । वायुस्त्वत्राधिकः अत एव सप्ताहोत्तरं जीवति रुग्नः सम्यगुपचरितः । कफपित्तान्यतराधिक्ये तु द्वादशाहोर्द्धं चिकित्सार्हतया सुसाधः स्यात् । तदुक्तम् ।

'सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा ।
पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥'

अमी च विकल्पा वातपित्तकफाधिक्यानुरोधेन । प्रशमो मरणं वेति तु धातुपाकमलपाकानुरोधात् । अत एवान्यत्र ।

'पित्तकफानिलवृद्ध्या दशदिवसद्वादशाह सप्ताहात् ।
हन्ति विमुञ्चति पुरुषं त्रिदोषजो धातुमलपाकात् ॥'

इत्यभिहितम् ।

पाकलक्षणं त्वन्यतोऽवबोद्धव्यं विस्तरभिया नालोच्यते । न चैवं सति ज्वरोत्पत्तिदिवस एव केषाञ्चिन्मरणं न संगच्छेतेति वाच्यम् ।

'परमायुरिदं प्रोक्तं म्रियते तत्क्षणादपि' । इत्युक्तेः ।

एवं चायं सन्निपातज्वर इत्येव निःसन्देहम् ।

अयमागन्तुज्वर इति तु केषाञ्चित् भ्रान्तिः । ज्वरोत्पत्तेः प्रागेवात्र दोषानुबन्धस्य प्रत्यक्षीभवनात् । न चैवं क्वचिदागन्तुज्वरे दृश्यते ।

यत् तु कैश्चिदग्निरोहिणीयमित्युच्यते तदपि निःसारम् । 'कक्षाभागेषु जायन्ते ये स्फोटा मांसदारुणाः' इत्यादि 'सप्ताहाद्द्वादशाहात् वा पक्षाद्वा घ्नन्ति मानवम्' इत्यन्तेऽग्निरोहिणीलक्षणे स्फोटानामेव प्राधान्यस्य प्रतिपादनात् । किञ्च कक्षेतरप्रदेशेऽपि ग्रन्थ्युत्पत्तेरत्र दृश्यमानत्वान्नेयमग्निरोहिणीति स्फुटमेव । कक्षाशब्दस्य गात्रान्तरवाचकत्वं न कैश्चिदपि व्याख्यातम् । अतएव कक्षापदेनमन्याङ्गग्रहणमयुक्तमव्युत्पन्नं चेति द्रष्टव्यम् । अपि च अग्निरोहिण्यां सप्ताहात् प्राङ्मरणे प्रमाणाभावः । प्रत्युत 'यथाह्यग्निरोहिणी सप्ताहेन हन्ति न तथान्ये विकारा' इति । मधुकोषादौ अग्निरोहिणीग्रस्तस्य

सप्ताहात् प्राक्मरणाभावो निर्दिष्टः। अन्यच्च अग्निरोहिण्या उपक्रमे साध्यत्वमस्य चासाध्यत्वमिति भेदो द्रष्टव्यः।

अतएव चरकेऽग्निरोहिणीम् प्रत्युक्तम्।

'सन्ति ह्येवम्विधा रोगाः साध्या दारुणसम्मताः।

ये हन्युरनुपक्रान्ता मिथ्यारम्भेण वा पुनः॥' इति।

अपि च। अग्निरोहिण्यां ग्रन्थेरवश्यम्भावित्वादत्र च प्रायिकत्वाद्भेदः स्फुट एव। एतदपि ग्रन्थिस्फोटयोः कथञ्चित्पर्य्यायत्वाभ्युपगम एव तदभावेत्वग्निरोहिणीशङ्कैव नोदयत इति।

एवं ग्रन्थिविसर्प इत्यपि निर्मूलमनायुर्वैदिकञ्च। एवं व्रणज्वर इत्यपि आयुर्वेदानभिज्ञत्वस्यैव द्योतकम्।

यत् तु ग्रन्थिकसन्निपात इत्युच्यते तन्नातिदोषाकुलम् सन्निपातत्वस्वीकारात्। किन्तु नास्मिन् ग्रन्थिकपदमाकाङ्क्षित्कारं सन्निपातत्वेनैव ग्रन्थिसमुद्भवसिद्धेः।

अथोच्यते कान्यस्य निदानानीति। तथाहि योगरत्ने ज्वरप्रकरणे।

"अम्लस्निग्धोष्णतीक्ष्णैः कटुमधुरसुरातापसेवाकषायैः

कामक्रोधातिरुक्षैर्गुरुतरपिशिताहारसौहित्य शोतैः।

शोकव्यायामचिन्ताग्रहगणवनितात्यन्तसङ्गप्रसङ्गैः

प्रायः कुप्यन्ति पुंसां मधुसमयशरद्दर्पणे सन्निपाताः॥" इति

एतानि च मोहमय्यां सर्वत्र निर्वाधप्रचाराणीति द्रष्टव्यम्। इमानि च सन्निकृष्टानि विप्रकृष्टं त्वधर्माचारः। सोऽपि प्रायः प्रति भोजनविक्रयालयं शोड़ा (मत्स्यविशेषः) संस्कृतां यूषमास्वादयतां भोजनावसरेऽप्युष्णीषकञ्चुकोपानदाद्यविमुक्तगात्राणां स्फुट एव। न च चिरात्प्रचरितोऽयमधर्मः कथमिदानीमेव रोगमुदपादयत् कथं च प्रागेवेति वक्तव्यम्। यथा हि रोगमुत्पादयिष्यन् दोषः कियन्तं कालं सञ्चिनुते। ततश्च प्रकुपितो रोगं जनयति। एवमधर्मोऽपि कियन्तं कालं सञ्चितः प्रकोपमापन्न एव जनान् संहरति न तु ततः प्राक् अत एवोक्तं मनुना।

"नाधर्मश्चरितो लोके सद्यः फलति गौरिव।

शनैरावर्त्तमानस्तु कर्त्तुर्मूलानि कृन्तति॥" इति

त्पद्यतां ज्वरः कथमन्यत्रापि दृश्यत इति। अत्रोच्यते निदानसंसेवने नोत्पन्नज्वराणां संसर्ग एवात्र हेतुः ज्वरस्य हि सांक्रमिकत्वं स्वभावः। तदुक्तं सुश्रुते।

"प्रसङ्गाद्गात्रसंसर्गान्निश्वासात् सह भोजनात्।
सहशय्यासनाच्चापि वस्त्रमाल्यानुलेपनात्॥
कुष्ठं ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च।
औपसर्गिकरोगाश्च सङ्क्रामन्ति नरान्नरम्॥" इति

चिकित्सात्वत्र सिद्धयोगाद्युक्ता सन्निपातज्वरोचिताऽनुसन्धेया। अत्र च यत् कैश्चिच्छिराव्यधः प्रशस्यत इत्युच्यते तदत्यन्तं विरुद्धम्। बलक्षयहेतुत्वात् स्वमेव क्षीयमाणशक्तेः पुनः शिराव्यधेन रक्तमोक्षणं नामायमसाधारणो निधनोपायः। वाग्भट्टादिभिरपि नैवंविधज्वरे क्वचिच्छिराव्यधोऽभिहितः।

तत्र हि तृतीयकचतुर्थकयोरेव शिराविशेषो निर्दिष्टः। एवं केवलग्रन्थिप्रशमनोपायोऽप्यर्थक्रियैव। ग्रन्थेरनुबन्धत्वेन प्रधानस्य ज्वरस्य प्रशान्तिमन्तरा तत्प्रशान्त्यनुपपत्तेः। अत्र च सन्निपातोक्तमग्निकर्मविशेषत उपयुज्यत इति केचिदाप्ता प्रब्रुवते। यत्तु कैश्चिदत्रांशूदकं भेषजमित्युच्यते तदपि नैकान्तत आर्याणामसम्मतम्। आयुर्वेदग्रन्थेष्वंशूदकस्य बहुगुणत्वोक्तेः। तदुक्तं भावप्रकाशे।

"दिवारविकरैर्जुष्टं निशि शीतकरांशुभिः।
ज्ञेयमंशूदकं नाम स्निग्धं दोषत्रयापहम्॥
अनभिष्यन्दिनिर्दोषमान्तरिक्षजलोपमम्।
बल्यं रसायनं मेध्यं शीतं लघु सुधासमम्॥" इति

यत्तु एतत्सम्मिश्रा यूरोपीयसुरात्र भेषजमिति तदायुर्वेदविरुद्धम्। सुराया उक्तनिदानेषु विद्यमानत्वात् निदानपरिवर्जनमन्तरा व्याधिप्रशान्तेरसम्भवात्।

एवमप्यस्य प्रतीकारो न खल्ववश्यम्भावी तदत्र श्रीमृत्युञ्जयाराधनादीन्येव कर्माणि भेषजानीति मन्यामहे इति।

पाध्ये इत्युपाह्वस्य
श्रीहनुमच्छास्त्रिणः।
कोल्हापुर।